सलक्ष्मणो जीवनिकायरक्षां रामानुजोऽभूत्प्रविधातुमीशः ६
स श्रीरामानुजाचार्य्यो राममन्त्रेण मुक्तिदः।
परमैकान्तिधर्म्मस्य प्रचारमकरोद् भुवि ॥७॥
तं श्रीरामानुजाचार्य्यं प्रणमामि पुनः पुनः।
यद्भाष्यलेशबोधेन जानाम्यात्मानमञ्जसा ॥ ८ ॥
पूर्वाचार्य्यसुरक्षितस्तु सततं यो धर्म एको महाँ-
स्तस्यास्यैव प्रचारकस्तु भगवान् रामः स्वयं भूतले।
रामानन्दमुनीन्द्रविग्रहधरो भूत्वा श्रुतीनां रसं-
निष्कृष्य व्यतनोन्निबन्धयुगलं श्रीवैष्णवानां धनम् ६
श्रीरामानन्दाख्यैः श्रीवैष्णवमताब्जभास्करोऽकारि।
श्रीरामार्चनपद्धतिरत्नं येषाम् विराजते लोके ॥१०॥
तं श्रीरामानन्दं मुनिवरनिकरैर्मुहुःसेव्यम्।
नत्वाऽन्वयप्रकाशं कुर्वे बलभद्रदासोऽहम् ॥११॥
सरय्वा उत्तरे भागे 'साराय' इति विश्रुते।
सिमर्याग्रामवासि-श्रीगङ्गादासाभिधं गुरुम् ॥ १२ ॥
पौहारीत्युपनाम्नैव विख्यातं जगतीतले।
श्रीबलभद्रदासोऽहं नमामि सततं धिया ॥ १४ ॥
श्रीमद्रामसमारम्भां श्रीरामानुजमध्यमाम्।
श्रीगङ्गादासपर्य्यन्तां वन्दे गुरुपरम्पराम् ॥ १५ ॥

अन्वयः -श्रुतिवेद्यम्, अद्भुतगुणग्रामाग्रचरत्नाकरं, प्रेयःस्त्रेक्षण-संसुलज्जितमहीजाताक्षिकोणेक्षितं, भक्ताशेषमनोऽभिवाञ्छितचतु-

र्वर्गप्रदं, स्वद्रुमं, स्मेरमुखाम्बुजं, शुचिमहानीलाश्मकान्ति, श्रीमन्तं, रामं भजे सेवे ॥ १ ॥

श्रीमते रामानुजायनमः। श्रीमते रामानन्दाय नमः ।
रामकल्पद्रुमं बन्दे सीताकल्पलतान्वितम् ॥
नित्यमर्थ्यर्थसंदोहं भ्रातृस्कन्धं सुहृच्छदम् ॥ १ ॥
श्रीरामानन्दमीड्यं परिवृतमखिलज्ञानवैराग्यरत्ना-
म्भोधि शिष्यैः सुबोधैर्विविदिषुभिरलं रामतत्त्वादि तांस्तन् ।
आप्तं संबोधयन्तं परमुनिनिकरैरीडिताङ्घ्रि जगत्तं-
संसाराब्धेर्वतीर्णं हरिमहह समुद्धर्तुमेवाभिबन्दे ॥२ ॥
नत्वा रघुवरशरणस्तनुतेऽर्थप्रकाशिकां स्वगुरून्।
रामानन्दीयश्रीवैष्णवमताब्जभास्करव्याख्याम्॥ ३ ॥

अथ श्रीमत्सकलकल्याणगुणगणाकरः सर्वेश्वरः सर्वनियन्ता सर्वान्तर्यामी सर्वशरण्यःश्रीरामः स्वाज्ञारूपवेदमार्गमतीत्यानर्थे प्रवर्त्तमानचेतनान् संवीक्ष्य कृपाकूपारोदयमानमनास्तानपारसंसारमहार्णवादुज्जिहीर्षुस्तदङ्गीकारार्थमिह लोके रामानन्दरूपेणावतीर्य्य महाकुलप्रसूतसत्संप्रदायनिरतं श्रीराघवाचार्य्यं समाश्रित्य वेदवेदाङ्गोपाङ्गशब्दतर्कोभयमीमांसादिकसकलशास्त्राण्यधीत्य दिगन्तविश्रान्तयशा महाप्राज्ञो भूत्वा तीर्थाटनव्याजेन समस्तदुर्जनान्निर्जित्य पण्डितपामरविभागरहितसकलजनैरभिबन्द्यमानो महादेशिको भूत्वा काश्यां निवसन्, आकस्मिककृपया तात्कालिकसकलजनानुज्जीवय्य सकलेतरशास्त्राण्याहत्य वेदशास्त्रमेव प्रवर्तयन्, तदनन्तरं तावन्मात्रेण तृप्तिमनवाप्य इदानीन्तनसकलजनोज्जीवनार्थं ग्रहीतुमशक्यं वेदान्तार्थं सर्ववर्णाश्रमैरप्यधिकर्तुं श्रीरामानन्दीयश्रीवैष्णवमताब्जभास्कररूपेण ग्रन्थं चकार तत्र च मुमुक्षुभिरनुष्ठेयानर्थान्प्राचीकशत् । तथा चोक्तं वैश्वानरसंहितायाम्-

"माघे च कृष्णसप्तम्यां चित्रानक्षत्रसंयुते
कुम्भलग्ने सिद्धियोगे द्विसप्त दण्डके तथा॥१॥
रामानन्दः स्वयं रामः प्रादुर्भूतस्स्वयं हरिः ।
कलौ खलु मुनिर्जातः सर्वजीवदयाकरः ॥२॥
तप्तकाञ्चनसंकाशो रामानन्दः स्वयं हरिः ।
प्रियाऽनुरागदिव्यत्वकृते रामः कृपानिधिः ॥३॥
हेमवर्णस्तदर्थं तैर्विख्यातश्च महीतले ।
रामानन्दः स्वयं रामः प्रादुर्भूतो हरिस्स्वयम्॥४॥

षट्कोणं पूर्वमालिख्य तदग्रे वृत्तमालिखेत्।
बहिरर्कदलं पद्ममग्रे पार्थिवमण्डलम् ॥ ५ ॥
एवं मण्डलमालिख्य शोभनं व्यक्तमुज्ज्वलम्।
अस्मिन् यन्त्रे महापूजां कारयेद्विधिपूर्वकम् ॥ ६ ॥
तन्मध्ये पूजयेद्देवं रामानन्दं स्वयं हरिम्।
चतुर्थ्यन्तेन तन्नाम्ना गन्धपुष्पाक्षतादिभिः ॥ ७ ॥
वृत्ताकारेण तच्छिष्यान् द्वादशसूर्य्यसन्निभान्।
पूजयेद्भावसंयुक्तः षोडशभिरुपचारकैः ॥ ८ ॥
गुरुपादाब्जसन्निष्ठोऽनन्तानन्दो महामतिः
विज्ञः सुरसुरानन्दः सुखानन्दोऽपि तादृशः ॥ ९ ॥
स महान्नरहरियानन्दोऽनन्तगुणः सुधीः।
भावानन्दोऽपि गुणवान्गालवानन्द एव च ॥ १० ॥
योगानन्दः कवीरश्च रमादासोऽपि सन्नतिः।
सेना पीपा धनाः शिष्या द्वादशैते महात्मनः ॥११॥"

इति तादृशः स तत्र तावद् "आशीर्नमस्क्रियावस्तुनिर्देशश्चापि तन्मुखम्" इति शिष्टसमाचारतो ग्रन्थस्यादिमध्यावसानेषु शिष्टैस्तत्र तत्र क्रियमाणं वक्तृध्येतृश्रोतृशुभावहं शिष्यशिक्षार्थं निबध्नन्, निर्देशश्चेति चकारतो विहितलब्धस्मरण भजनात्मकमपोहादौ मङ्गलमाचरति श्रीमन्तमिति–अहं श्रीसकललोकरमणशीलं निखिलयोगिरमणाश्रयं सत्यानन्दचिदात्मकं निखिलस्थावरजङ्गमात्मकप्रपञ्चेऽन्तर्यामितया विराजमानं श्रितचतुर्वर्गप्रदं रामं भजे सेवे "भजसेवायाम्" इति स्मरणात्। कीदृशं रामं श्रीमन्तं-नित्यं श्रीर्लक्ष्मीः सीतारूपा अस्ति अस्येति श्रीमाँस्तथोक्तं। नित्ययोगेऽत्रमतुप् "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादय" "इत्युक्तेः 'अनन्या राघवेणाहं भास्करेण प्रभा यथा'"अनन्या च मया सीता भास्करेण प्रभा यथा"'इत्युक्तेर्भास्करप्रभावन्नित्यानपायिसीतासहितमित्यर्थः। पुनः श्रुतिभिर्वेदैवेद्यं ज्ञातुं योग्यं "विद ज्ञाने"इतिस्मरणाद् "वेदवेद्ये परे पुंसि जाते दशरथात्मजे"'इत्युक्ते 'श्रुतिः स्त्री वेद आम्नाय'"इत्यमरः। अद्भुतानां गुणानां वात्सल्यशौर्यादीनां ग्रामः समूहः अग्र्यरत्नानि श्रेष्ठरत्नानीवेत्युपमितसमासस्तेषामाकरम्। प्रेयसाऽतिप्रियेण वल्लभेन रामेण स्वस्याः सम्बन्धि यदीक्षणं दर्शनं शेषष्ठ्याः षष्ठीतिसमासः कर्मणि चेति समासनिषेधः कर्मषष्ठ्या-एवेतिसिद्धान्तात् तेन सम्यक् सुलज्जिता चासौ मह्याः पृथिव्याः सकाशाज्जातं जन्म यस्याः सा तस्या अक्ष्णः कोणेन नेत्रप्रान्तेन कटाक्षेण ईक्षितं-

दृष्टम् । भक्तानामशेषान् मनोवाञ्छितान् चतुर्वर्गान्धर्मार्थकाममोक्षान्प्रकर्षेणाविलम्बेन ददाति स चासौ स्वद्रुमः कल्पवृक्षश्च तथोक्तम् । स्मेरं स्मितविशिष्टम् ईषद्धसनशीलं मुखाम्बुजं कमलसदृशं मुखं यस्य स तथोक्तम् । नीलः-श्यामश्चासौ अश्मा च नीलाश्मा नीलमणिः महाँश्चासौ नीलाश्मा च महानीलाश्मा शुचिर्निर्मलश्चासौ स च तस्य कान्तिरिव कान्तिः शरीररमणीयता सौन्दर्यशोभा यस्य स तथोक्तम् ॥१॥

श्रीरामो विजयते तराम् ।

श्रीमते रामानुजाय नमः । श्रीमते रामानन्दाय नमः ।

भा०—श्रीसम्प्रदाय के प्रचारकाचार्य्यों में प्रधान श्रीभाष्यकार श्रीरामानुजाचार्य्यजी के गूढ़ सिद्धान्तोंके प्रचारक श्रीरामानन्दाचार्य्यजी समस्त श्रुति, स्मृति, इतिहास, पुराणादिरूप क्षीर सागर में घृतवत् निगूढ अति रहस्य मय सिद्धान्तों को मथ कर संसार सागर में निमग्न जीवों के कल्याण के लिये थोड़े शब्दों में स्पष्टरूप से वेदादिकों के सार सिद्धान्तों को वर्णन करते समय ग्रन्थ के आदि में मङ्गला चरण करते हैं—श्रीमन्तमिति——

मै ( श्रीरामानन्दाचार्य्य ), वेदों से जानने योग्य, सौशील्यवात्सल्यादि उत्तम गुणों के सागर, प्रियतम की प्रेम चितवन से सुलज्जिता ( लजाती हुई ) महीतनया ( श्रीजानकी जी ) के कटाक्ष कोण से देखे गये, भक्तों के अर्थ, धर्म, काम और मोक्ष रूप समस्त मनोरथों को पूर्ण करने में कल्पवृक्ष के समान, उत्तम नीलमणि के सदृश निर्मल कान्ति से युक्त मधुर मुसकानमय ( किञ्चित् मुस्कुराहट युक्त ) मुखारविन्द वाले, श्रीमान् ( सीतारूप श्रीयुक्त ) श्रीरामजी का भजन ( स्मरण ) करता हूँ ॥ १ ॥

**प्रत्यूहव्यूहभङ्गं विदधदुरुबलश्शक्तिमान् सर्वकारी**
**भूरिश्रेयःप्रतापो मुनिवरनिकरैः स्तूयमानो विमानः॥**
**रक्षोदैत्यादिनाशी क्षुभितजलनिधिर्लोकजिल्लोकमान्यो-**
**धन्यो नोमङ्गलौघं सपदि सुकुरुताद्रामशस्त्रास्त्रसङ्घः।२।**

अन्वयः—उरुबलः (महावेगवान्), शक्तिमान् ( निरतिशयपराक्रमवान् ) सर्वकारी ( अघटितघटनापटीयान् ), भूरिश्रेयःप्रतापः, विमानः, ( रावणादिशत्रूणामभिमाननिरसनशीलत्वेऽपिव्यभिमान रहितः ), रक्षोदैत्यादिनाशी, मुनिवरनिकरैः स्तूयमानः, क्षुभितजलनिधिः, लोकजित्, लोकमान्यः, धन्यः ( विजयाद्यैश्वर्यसम्पन्नः ), रामशस्त्रास्त्रसंघः सपदि ( शीघ्रम् ) प्रत्यूहव्यूहभङ्गं ( विघ्नसमूहविनाशं ) विदधत् ( कुर्वन् ) सन् नः ( अस्माकम् ) मङ्गलौघं सुकुरुतात् ( अतीव करोतु ), ॥ २ ॥

प्रत्यूहेति । रामस्य शस्त्राणि च अस्त्राणि च रामशस्त्रास्त्राणि तेषां सङ्घः समूहः नोऽस्माकं मङ्गलानामोघं सपदि सुकुरुतात् शीघ्रं करोतु । किं कुर्वन् प्रत्यूहानां नानाविधविघ्नानां व्यूहस्य भङ्गं विनाशं विदधत्सन् "नाभ्यस्ताच्छतुः" इतिनुमोऽभावः। कीदृशो रामशस्त्रास्त्रसंघः उरु महदेव बलं वेगो यस्य स.। पुनः बह्वी प्रशस्ता नित्याऽतिशयितप्रकृष्टा शक्तिरस्यास्तीति शक्तिमान् "यन्निगृहीतोजयन्तः। त्रींल्लोकान्संपरिक्रम्य त्रातारं नाध्यगच्छत्। तमेनंशरणं गतः" इत्याद्युक्तेः । पुनः सर्वाणि अतर्क्यसप्ततालगिरिरसातलभेदादीनि करोति तच्छीलः सर्वकारी । भूरि बहवः श्रेयांसि प्रतापाश्च यस्य सः। मुनिवराणां मननशीलश्रेष्ठानां निकरैः समूहैः स्तूयमानः । विगतो रावणादिशत्रूणां मानोऽभिमानो येन स;वे पक्षिणो गरुडस्येव मानं वेगप्रमाणं यस्येति वा। रक्षोदैत्यादीन् विराधखरकबन्धवालिप्रभृतीन् विनाशयति तच्छीलः । क्षुभितो जडोऽगाधोऽपि जलनिधिः सागरो येन । लोकान्दुर्जनान् जयतीति लोकजित् "लोकस्तु भुवने जने" लोकानां त्रिभुवनानां मान्यः । धनं विजयाद्यैश्वर्यं लब्धा धन्यः ॥ २॥

भा०—महावेगवान्, अति सामर्थ्य युक्त, सब कुछ कर डालनेवाला, अतिश्रेष्ठ प्रतापी, अभिमानरहित, राक्षस दैत्यादि के विनाशक, अगाध-समुद्र को ( निज तेज से ) क्षुभित करने वाला, सर्वलोक विजेता एवं सम्मानित, परम धन्य, जो श्रीरामजी का अस्त्र शस्त्र समूह, वह शीघ्र मेरे विघ्न व्यूहों का विनाश करता हुआ समस्त मङ्गल करे ॥२॥

**ऐश्वर्य्यं यदपाङ्गसंश्रयमिदं भोग्यं दिगीशैर्जगच्-**
**चित्रं चाखिलमद्भुतं शुभगुणा वात्सल्यसीमा च या।**
**विद्युत्पुञ्जसमानकान्तिरमितक्षान्तिः सुपद्मेक्षणा**
**दत्तान्नोऽखिलसम्पदो जनकजा रामप्रिया साऽनिशम् ३**

अन्वयः—दिगीशैः ( इन्द्रादिभिः ) भोग्यम् ( भोक्तुं योग्यं ) ऐश्वर्य्यं ( स्वर्गादि राज्यम् ) यदपाङ्गसंश्रयम् ( यस्याः श्रीसीताया नेत्रकटाक्षाश्रितम् ) चित्रम् ( चतुरशीतिलक्षयोनिभेदादुर्ज्ञेयम् ) अद्भुतम् ( आश्चर्य्यजनकम् ) इदमखिलं जगच्च यदपाङ्गसंश्रयम्, या च जनकजा शुभगुणा (शरणागतरक्षणादिरूप कल्याणगुणवती ) वात्सल्यसीमा, विद्युत्पुञ्ज समानकान्तिः, अमितक्षान्तिः, सुपद्मेक्षणा (अस्ति) सा रामप्रिया जनकजा नः ( अस्मभ्यम् ) अखिलसम्पदः ( सर्वाः सम्पत्तीः ) अनिशम् ( निरन्तरम् ) दत्तात् ( ददातु ) ॥ ३ ॥

एवं सशस्त्रास्त्रं श्रीरामं प्रार्थ्य श्रीजानक्या अप्याशिष संप्रार्थ्यते—ऐश्वर्य्यमिति। सा रामस्य प्रिया वल्लभा सीता नोऽस्मभ्यम् अखिलसम्पदः सर्वाः- सम्पत्तीः सर्वविधैश्वर्याणि अनिशं निरन्तरं दत्तात् ददातु। सा का दिगीशैर्दिशांप्राच्यादीनामीशैस्तत्रतत्राधिकृताधिपतिभिर्भोग्यमैश्वर्य्यं स्वर्गादिराज्यं- यदपाङ्गसंश्रयं यस्या रामप्रियाया अपाङ्गं नेत्रकटाक्ष एव संश्रयः सम्यगवलम्बो यस्य तत्। किञ्च इदमद्भुतं जगच्च यदपाङ्गसंश्रयम्। कीदृशं जगद अखिलं स्थावरजङ्गमात्मकं। पुनः चित्रं जात्यादिभिरनन्तदुर्बोधभेदम्। या च रामप्रिया वात्सल्यस्य सीमा अवधिभूता। खलरावणविषयेऽपि निःसीमकृपायास्तस्याः "तेन मैत्री भवतु ते यदि जीवितुमिच्छसि" इत्युक्तेः। शुभानि कल्याणानि "कल्याणं मंगलं शुभम्" इत्यमरः। गुणाः पातिव्रत्याश्रितरक्षणादयो यस्याः सा। विद्युतां तडिल्लतानां "तडित्सौदामनीविद्युत्" इत्यमरः पुञ्जं समूहो राशिरिति यावत् तेन समाना तुल्या कान्तिः शरीराप्रमेयसौन्दर्य्यातिरमणीयता यस्याः सा। शोभनेऽतिविशालतयातिमनोहरे पद्मसदृशे ईक्ष्यते दृश्यते रूपमाभ्यामितीक्षणे नेत्रे यस्याः सा। पुनः न मितं मानं यस्याः साऽमिता प्रमा-

तुमशक्या क्षान्तिः क्षमा यस्याः साऽमितक्षान्तिः। तथा च रावणश्वधवृत्तान्तकथनाय स्वसमीपमागतं स्वानवधिपीडाकारिराक्षसीगणहननाय प्रार्थयन्तमुद्यतं हनुमन्तं प्रति तयोक्तम्।

राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया।
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम!।
भाग्यवैषम्ययोगेन पुरादुश्चरितेन च।
मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते।
प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम्।
दासीनां रावणस्याहं मर्षयामीह दुर्बला।
आज्ञप्ता रावणेनैता राक्षस्यो मामतर्जयन्।
हते तस्मिन्न कुर्वन्ति तर्जनं वानरोत्तम!।
अयं व्याघ्रसमीपे तु पुराणे धर्मसंहितः।
ऋक्षेण गीतः श्लोकोऽस्ति तं निबोध प्लवंगम!।
न परः पापमादत्ते परेषां पापकर्मणाम्।
समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः।
पापानां वा शुभानां वा वधार्हाणां प्लवंगम!।
कार्यं करुणमार्य्येण न कश्चिन्नापराध्यति।
लोकहिंसाविहाराणां रक्षसां कामरूपिणाम्।
कुर्वतामपि पापानि नैवं कार्य्यमशोभनम्॥ ३॥ इति

भा०—उक्त विधि से श्रीरामजी और उनके अस्त्र शस्त्रों से प्रार्थना करने के बाद अब सम्प्रदाय प्रवर्तिका जगज्जननी महारानी श्रीजानकी जी से आशीर्वाद के लिये प्रार्थना करते है— इन्द्रादि दिक्पालों से भोगने योग्य स्वर्गादिरूप ऐश्वर्य और चौरासी लाख प्रकार के योनि ( जाति ) भेद से विचित्र, अतएव आश्चर्य्य जनक यह समस्त जगत् जिनके कटाक्षाधीन है, जिनमें आचार्य्य शरणागतों को भगवान के शरणागत करना इत्यादि अनेक शुभ गुण हैं, जो वत्सलताकी सीमा क्षमासागर भक्तों के अपराध को भूलने वाली, विद्युत्पुञ्ज के समान कान्ति युक्त कमल नयनी, श्रीरामजी की प्रिया, वही श्रीजानकीजी मझे समस्त सम्पत्ति दें॥ ३॥

**तत्त्वं किं किञ्च जाप्यंपरमिह विबुधैर्वैष्णवैर्ध्यानमिष्टम्**
**मुक्तेःकिं साधनं सद्गुर!अधिकतमो धर्म्म एकोऽस्ति कश्च।**
**धर्म्माणां वैष्णवास्ते गुरुवर!कतिधा?लक्षणं किं च तेषां-**
**कालक्षेपः किमाप्यं कथमुरुशुभदं कुत्र कार्यो निवासः।४।**

अन्वयप्र०—हे गुरुवर! इह (अस्मिन् संसारे) तत्त्वं किमस्ति? विबुधैः (विज्ञैः) वैष्णवैः परं जाप्यं च किमस्ति,? इष्टं ध्यानं-किमस्ति? मुक्तेः (मोक्षस्य) सर्वश्रेष्ठसाधनं किमस्ति? धर्माणां (मध्ये) अधिकतमः (अतिशयश्रेष्ठः) एकः (मुख्यः) धर्मश्च कोऽस्ति? हे सद्गुर! ते वैष्णवाः कतिधा (कतिप्रकाराः सन्ति)? तेषां (वैष्णवानां) लक्षणं च किमस्ति? (तैर्वैष्णवैः) कुत्र (कस्मिन् देशे) निवासः कार्य्यः? (तत्र) कालक्षेपः कथं (केन प्रकारेण) कार्य्यः? (एतैः मत्प्रश्नोत्तरभूतसाधनसमूहान्वितैर्वैष्णवैः) उरुशुभदं (मोक्षप्रदम्) आप्य (प्राप्यं) किं (भविष्यति)? ॥ ४ ॥

अथ द्वादशानां श्रीरामानन्दीयशिष्याणां मध्येऽतिविमलमतिः श्रेयोविमुखान् जनान्संसारादुद्धर्तुकामः कृपालुराचार्यवान्पुरुषोवेदेति सिद्धान्तमनुतिष्ठन् सकलवेदशास्त्रेतिहाससारभूतमल्पज्ञेभ्योऽपि जिग्राहयिषया स्वयंजिज्ञासुर्भूत्वा सुरसुरानन्दः श्रीरामानन्दं तत्त्वादिकं पृच्छति-तत्त्वं-किमिति। इह जगति ज्ञेयं तत्त्वं किमस्ति विष्णोरिमे भक्ता वैष्णवास्तैर्विबुधैरवगन्तृभिः परमुत्कृष्टं जाप्यं किमस्ति? तैरिष्टं ध्यानं च किमस्ति? मुक्तेर्मोक्षस्य साधनं च किमस्ति? हेसद्गुर! सतां महात्मनां मध्ये वर! श्रेष्ठ! धर्माणामनेकविधानां मध्ये एको मुख्यः?

"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते" इति कोपः।

अधिकतमोऽतिशयेनाधिको धर्मः कोऽस्ति? हेगुरुवर! गृणन्ति तत्त्वादिकमुपदिशन्तीति गुरवस्तेषां मध्ये वर!।

"गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निवर्तकः।

अन्धकारविरोधित्वाद् गुरुरित्यभिधीयते" इति निर्वचनात्।

ज्ञानान्धकारनिवर्तकश्रेष्ठास्ते वैष्णवाः कतिधा कतिप्रकाराः सन्तीति वचनविपरिणामेनान्वयःसन्तीत्यध्याहारेण "अप्रयुज्यमानोऽप्यस्तिर्भवन्तीपरः-सर्वत्र प्रयुज्यते" इति भाष्योक्तेः। तेषां वैष्णवानां लक्षणं चिह्नं च किमस्ति "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः। तैर्निवासः स्थिति कुत्र कस्मिन् कीदृशे देशे कार्य्यः कर्तव्यः कर्त्तुं योग्य इत्यर्थः।कालक्षेपश्च तैःकथं केन प्रकारेण कार्य्यः। उरु महद् शुभं ददातीति उरुशुभदं मोक्षप्रदम् आप्यं प्राप्यं किमस्ति ॥ ४ ॥

भा०—श्रीरामानन्द स्वामी जी के बारह शिष्यों में श्रीसुरसुरानन्द स्वामी जी ने जीवों के संसारसागर से उद्धार करने की इच्छा से अपने गुरु जी से दश प्रश्न पूछे— हे गुरुवर! इस संसार में तत्त्व[१] क्या है, विज्ञ वैष्णवों का सर्वश्रेष्ठ[२] जप, उत्तम ध्यान[३] और मुक्तिका साधन[४] क्या है? अनेक धर्मों में अतिश्रेष्ठ (प्रधान) धर्म्म[५] कौन है? हे सत्पुरुषप्रवर! वैष्णव कितने[६] प्रकार के होते है और उनके लक्षण[७] क्या है, उन वैष्णवों को किस देश में निवास[८] करना एवं किस प्रकार समय[९] विताना चाहिये? और इन मेरे प्रश्नों के उत्तर स्वरूप साधनों से उन वैष्णवों का विशेष शुभप्रद (मोक्षप्रद) क्या प्राप्य[१०] होगा ॥ ४ ॥

**इत्थं तत्त्वादिविज्ञोऽखिलविविदिषया विश्रुतःश्रौतनिष्ठो-**
**रामानन्दोऽभिवन्द्यो जगति सुरसुरानन्दपृष्टो गरिष्ठः ॥**
**प्राचार्य्याचार्य्यवर्य्यान् यतिपतिसहितान् प्रोक्तवांस्तत्प्रणम्य**
**श्रीमांस्तस्मै रमेशं शरणमुपगतस्तद्विजिज्ञासुमुख्यैः ॥५॥**

अन्वयप्र०—इत्थं (पूर्वोक्तप्रकारेण) अखिलविविदिषया सकलतत्त्वादिज्ञानं वेदितुमिच्छया श्रीसुरसुरानन्दपृष्टः जगति विश्रुतः (प्रसिद्धः) श्रौतनिष्ठः (वेदविहितकर्मोपासनादि-निष्ठः) जगति विजिज्ञासुमुख्यैरभिवन्द्यः गरिष्ठः—(अतिशयित-गुरुः) तत्त्वादिविज्ञः रमेशं (रमाऽपरपर्य्यायजानकीशं) शरणम्

( रक्षकं ) उपगतः (प्राप्तः ) अतएव श्रीमान् ( ज्ञानवैराग्यादि-साध्यपरमप्रेमलक्षणाभक्तिरूपश्रीयुक्तः श्रीरामानन्दः ) तं ( जानकीशं ) प्रणम्य यतिपतिसहितान् ( श्रीरामानुजस्वामिसहितान् ) ।चार्य्याचार्य्यवर्य्यान् ( श्रीशठकोपाद्याचार्य्यान् स्वाचार्य्यान ) प्रणम्य तस्मै ( श्रीसुरसुरानन्दाय ) तत् ( श्रीसुरसुरानन्दकृत-प्रश्नषट्कतत्त्वादि ) प्रोक्तवान् ॥ ५ ॥

अखिलानां विविदिषया अखिलान् वेदितुमिच्छया इत्थं पूर्वोक्तश्लोकप्रकारेण सुरसुरानन्देन स्वशिष्येण पृष्टो रामानन्दो गुरुः कीदृश जगति लोके विश्रुतः प्रसिद्धः ।पुनः श्रौते श्रुतिविहिते कर्मणि निष्ठा यस्य सः । गरिष्ठोऽतिशयेन गुरुः । जगति लोकेऽभिवन्द्यः सकलसाधारणैर्जिज्ञासुमुख्यैर्वन्दनीयः।तत्त्वादीन् विशेषेण जानातीति तत्त्वादिविज्ञः "इगुपधज्ञाप्रीकिरःकः" इति जानातेः कः । रमेशं रमा लक्ष्मीस्तस्या ईशं विष्णुं शरणमुपगतस्सन् तं-प्रणम्य तस्मै सुरसुरानन्दाय तत् तत्त्वादिकं प्रोक्तवान् कथितवान् । किं कृत्वा यतीनां संन्यासिनां पतिर्यतिपतिर्यतीन्द्रः श्रीरामानुजस्तेन सहितान् युक्तान् प्रकृष्टा आचार्य्याः प्राचार्य्याः शठकोपप्रभृतयः आचार्य्याःस्वगुरवः ते च ते च प्राचार्य्याचार्याः ते च ते वर्य्याश्च तेषु वर्य्या इति वा तान्प्रणम्य नमस्कृत्य अज्ञानान्धकारनिवर्तकान् वेदाध्यायिनः परमात्मनिष्ठाँस्तान्प्रपद्येत्यर्थः।तथा च तल्लक्षणप्रतिपादिका श्रुतिः स्मृतिश्च ।तथाहि "आचार्यवान् पुरुषो वेदेति" "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"इति च

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"
इति श्वेताश्वेतरोपनिषन्मन्त्रवर्णाश्च

"तस्माद्ब्रह्मैवाचार्य्यरूपेणावतिष्ठते"इति व्यासस्मृतिः ।

एकादशस्कन्धेऽपि—

"आचार्यं मां विजानीयान्नावमन्येत कर्हि चित् ।
न मर्त्यबुद्ध्या सूयेत सर्वदेवमयो गुरुः"इति ।

गीतायां च—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे"इति।

विष्णुसंहितायामपि,—

"गुरौ तुष्टे स्वयं तुष्टो गुरौ रुष्टे न कश्चन।
तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेत्।
गुरुः कारुणिको देवि ? सुहृद्वैसर्वदेहिनाम्।
वदान्यः सानुरागो हि ब्राह्मणश्च सदीक्षितः।
मद्गतं हि मनो यस्य शान्तो दान्तस्तथैव च।
निरहंकारः क्षमाशक्तोगुरुर्भागवतस्तथा।
मद्भक्ता मत्कथासक्तः शृणोति कथयन्ति च।
नित्योत्सवप्रमुदितो जन्मकर्मादिभिस्तथा" इति।
"मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम्।
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः।
नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्।
मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिन्न तरेत्स आत्महा"
इत्येकादशेपि।

स्मृतिसारे च—

"प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा।
देशकालादिभिः शिष्यं बोधयेत्स गुरुः स्मृतः" इति।

वामनकल्पेपि—

"यो मन्त्रः स गुरुः साक्षाद्योगुरुः स हरिः स्मृतः।
गुरुर्यस्यभवेत्तुष्टस्तस्यतुष्टो हरिःस्वयम्"इति।
तथा शिष्यलक्षणप्रतिपादिकाऽपि श्रुतिः स्मृतिश्च-

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्याथर्वणिकी श्रुतिः।

स्मृतिस्तु—

"प्रशान्तचित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे।
गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे" इति।

आस्तिक्यमनसं सद्भिरुपेतं धर्मवत्सलं।
श्रद्दधानं सदाचारं गुरुशुश्रूषणतत्परम्" इति च हारीते
विष्णुसंहितायामपि—
"आज्ञाहीनं दुराचारमदृढं चैव निन्दकम्।
वर्जयेदीदृशं शिष्य व्यग्रचित्तमलक्षणम् ॥१॥
ज्ञानहीनमनाचारं परद्रोहरतं सदा।
लोलुपं पिशुनं शिष्यं दूरतः परिवर्जयेत् ॥२॥
क्षणं रुष्टः क्षणं तुष्टश्चाभिमानी क्षणं क्षणम्
परापवादसंतुष्टः शिष्यस्त्याज्यो विचक्षणैः ॥ ३ ॥
सुशीले सानुरागे च निःसन्देहे गुरौ रते।
सन्देहोऽत्र न कर्तव्यो दीक्षां दद्यात्प्रयत्नतः ॥ ४ ॥
विधिहीने क्रियाहीने कुलहीने तथैव च।
दीक्षा तत्र प्रमोक्तव्या सानुरागिणि चेद् गुरौ" इति
स्मृतिसारावल्यां च—
"गुरुत्यागी भवेद्रोगी मन्त्रत्यागी दरिद्रता
गुरुमन्त्रावुभौ त्यागी विपदस्तु पदे पदे" इति।

दरिद्र एव दरिद्रता। आर्षः स्वार्थे तल्। उभाविति। कर्मणि षष्ठ्यभावोऽपि तथा विपद इति। द्वितीयाबहुवचनान्त प्राप्नोतीति शेष इति तदर्थः। सद्गुरौ प्राप्ते तिथिनक्षत्रभद्रादिकं न विचारणीयं तदुक्तं महाचिने।

"भक्तियुक्तःसदाचारो गुरुवाक्ये सदा रतः
दीक्षार्थी लयसंयुक्तस्तस्मै दीक्षा प्रदीयते" इति ॥
अत्र कर्मणि लिङर्थे लट् प्रदीयते गुरुणेति शेषः ॥५॥

भा०—इन दश प्रश्नों के पूछने वाले श्रीसुरसुरानन्दजी को श्रीरामानन्दस्वामीजी ने उत्तर देना शुरू किया पूर्वोक्तरीति से श्रीसुरसुरानन्द जी से पूछे गये, समस्तलोक में प्रसिद्ध, वेदविहित कर्म ज्ञान और उपासना में निष्ठावाले, जिज्ञासुप्रवरों से वन्दनीय सरहस्यवेदतत्त्व के ज्ञाता स्वयं तत्त्ववेत्ता, जगद्रक्षक श्रीजानकीरूपरमाकान्त श्रीरामजी को प्राप्त, श्रीमान् ( ज्ञानवैराग्यादि साध्य परमप्रेमलक्षणा भक्तिरूपश्री से युक्त ) जो श्रीरामानन्दस्वामी जी, उन जानकीश (श्रीरामजी) और यतिपति श्रीरामानुजाचार्य्य के सहित सब पूर्वाचार्यों ( श्री लक्ष्मी विष्वक्सेन शठकोपादि आचार्यों को

और निज आचार्य प्रवर श्री राघवानन्द स्वामी जी) को प्रणाम कर उन तत्त्व-जिज्ञासु( श्री सुरसुरानन्द जी ) के पूर्वोक्त प्रश्नों का उत्तर देते है ॥५॥

**प्रश्नानामेकमाद्यं त्रिकमपि शृणु तद्भेदतो नामभेदैः-**
**र्नित्याऽज्ञाऽचेतना सा प्रकृतिरविकृतिर्विश्वयोनिश्शुभैका।**
**नानावर्णात्मिकाऽजात्रिगुणसुनिलयाऽव्यक्तशब्दाभिधेया**
**निर्व्यापारा परार्था महदहमितिसूरुच्यते तत्त्वविद्भिः ॥६॥**

अन्वयप्र०—तत्त्वविद्भिः ( तत्त्वज्ञैर्व्यासपराशरादिमहर्षिभिः ) प्रश्नानां (मध्ये) आद्यम्( प्राथमिकं प्रश्नं "तत्त्वं किम्" इत्याकारकम्) एकमपि (चिदचिच्छरीरविशिष्टत्वेनैकां सङ्ख्यां गतमपि) तद्भेदतः (तयोः चिदचितोरीश्वरस्य च भेदैः) नामभेदैः (चिदचिदीश्वरवाचक शब्दभेदैः) त्रिकं (शब्दतः अर्थतश्च त्रिविधमुच्यते) तत् (तत्त्वं) शृणु (तत्र) या एका (अचित्) सा नामभेदैः (नाम्नां भिन्नत्वेन) नित्या, अज्ञा, अचेतना, प्रकृतिः, अविकृतिः, विश्वयोनिः, शुभा, नानावर्णात्मिका, अजा, त्रिगुणसुनिलया, अव्यक्तशब्दाभिधेया, निर्व्यापारा, परार्था, महदहमितिसूः, उच्यते ॥६॥

अथ तत्त्वं किमस्तीति प्रश्नस्योत्तरमाह—प्रश्नानामिति। तत्त्वविद्भिर्विद्वद्भिःप्रश्नानां पृच्छ्यमानानां तत्त्वादीनां मध्ये आद्यं प्रथमम् एकमपि तत्त्वं भेदतोऽचेतनाचेतनेश्वरभेदात् त्रिकमुच्यते त्रिधोच्यत इत्यर्थः । त्रयोऽवयवा अचेतनादिभेदप्रकारा यस्य तत्त्वसमुदायस्य तत् त्रिकम्। तद् नामभेदैरचेतनादिभिः शृणु। तत्र तावत्तत्प्रकृतिं निरूपयति-विकाररहिता मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्तेत्युक्तेः स्थावरजङ्गमात्मकानां विश्वेषां जगतां योनिः, अतएव एकापि शोभते बहुधा इति शुभा शोभमाना शुभैरिगुपधेति कः नानावर्णात्मिका शुक्लादिभेदेन बहुवर्णा, तथाच—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः।
अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति ।

त्रयो गुणास्सत्त्वरजस्तमांसि, सुष्ठु निलीयन्तेऽस्यामिति त्रिगुणसुनिलया अव्यक्तशब्देनाभिधातुं योग्याऽभिधेया वाच्या इदमुपलक्षणम्। प्रधानशब्दादी-

नामपि निर्व्यापारा स्वातन्त्र्येण व्यापाररहिता जडत्वात् रथादिवद् परस्मै इयं परार्था पराधीना भगवदधीनेति यावत्। महदहमितिसूः महदहमादिकं-सूते उत्पादयतीति महदहमितिसूः इतिशब्द आद्यर्थकः "इति हेतुप्रकरणप्र-कारादिसमाप्तिषु" इति कोषः

तथा च भागवते तृतीयस्कन्धे षड्विंशेऽध्याये देवहूतिंप्रति भगवता श्रीकपिलेनोक्तं—

"यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवद्" इति।

यत्प्रधानं तदेव प्रकृतिं प्राहुः किं तत्प्रधानमित्यपेक्षायामाह-स्वतोऽविशेषं-विशेषवद् विशेषाः सन्त्यस्मिन्निति विशेषवद् निखिलविशेषाणामाश्रयः, तर्हि किं ब्रह्म? नहि त्रिगुणं, किं तर्हि महत्तत्वादि? न हि अव्यक्तमकार्यं, किं, कालादि? नहि, सदसदात्मकं कार्यकारणरूपमिति तदर्थः॥ ६॥

भा०—श्रीरामतत्त्वप्रचारक श्रीरामानन्दस्वामी जी श्रीसुरसुरानन्दजी को क्रमशः उत्तर देते है सुनो! तुम्हारे प्रश्नो में जो पहला प्रश्न है (क्या तत्व है) उसको तत्ववेत्ता (व्यास पराशरादि महर्षिगण) अचित् चित् और ईश्वर नाम से तीन प्रकार का कहते है। उनमें जो पहला अचित् है उसीको नाम भेद होने से नित्या १, अज्ञा २, अचेतना ३, प्रकृति *४, अविकृति ५, विश्वयोनि ६, शुभा ७, नानावर्णात्मिका ८, अजा ९, त्रिगुणासुनिलया १०, अव्यक्त ११, निर्व्यापारा १२, परार्था १३, महदहमितिसू १४, कहते है॥ ६॥

**नित्योज्ञश्चेतनोऽजःसततपरवशः सूक्ष्मतोऽत्यन्तसूक्ष्मो-**
**भिन्नो बद्धादिभेदैः प्रतिकुणपमसौ नैकधा सूरिवर्य्यैः॥**
**श्रीशाक्रांतालयस्थोनिजकृतिफलभुक्तत्सहायोऽभिमानी**
**जीवः संप्रोच्यते श्रीहरिपदसुमते। तत्त्वजिज्ञासुवेद्यः॥७॥**

---

*'प्रकृति' नाम के अन्तर्गतही पृथ्वी, जल, तेज वायु, आकाश पञ्च-महाभूत, शब्द स्पर्श रूप रस गन्ध पञ्च तन्मात्रा, आँख कान नाक जिह्वा त्वचा हस्त पाद लिङ्ग गुदा वाणी इन्द्रि दश और मन बुद्धि चित्त अहंकार अन्तःकरण चतुष्टय इन सबों को भी जानना।

अन्वयप्र०—हे श्रीहरिपदसुमते! (सुरसुरानन्द!) सूरिवर्य्यैः (ज्ञानिश्रेष्ठैः) जीवः, नित्यः (सदैकरूपः) ज्ञः (ज्ञानगुणवान् अज्ञ इतिच्छेदेन भगवज्ज्ञानापेक्षयाऽल्पज्ञः नञर्थस्याल्पार्थकत्वात्) चेतनः (ज्ञानस्वरूपः) अजः (जन्ममरणादिषड्विकाररहितः) सततपरवशः (सर्वावस्थायां भगवदधीनः) सूक्ष्मतोऽत्यन्तसूक्ष्मः (परमाणोरप्यत्यल्पः) प्रतिकुणपं (प्रतिशरीरम्) असौ बद्धादिभेदैः (बद्धमुक्तनित्यभेदैः) भिन्नः नैकधा (अनेकः) श्रीशाक्रान्तालयस्थः (सीतास्वरूपलक्ष्मीकान्ताक्रान्तशरीरस्थः) निजकृतिफलभुक् (स्वकर्मजन्यफलभोक्ता) तत्सहायः (भगवदनुचरः) अभिमानी (बद्धदशायां स्वातन्त्र्येण शुभाशुभकर्तृत्वादीनामहंकारवान् मुक्तदशायान्तु भगवदधीनत्वाभिमानवान्) तत्त्वजिज्ञासुवेद्यः (चिदचिद्विशिष्टपरमेश्वरज्ञानान्वेषिणां ज्ञेयः) सम्प्रोच्यते (निगद्यते) ॥ ७ ॥

ननु तत्र तत्र तत्त्वानां चतुर्विंशतितत्त्वस्य पञ्चविंशतितत्त्वस्य वा श्रवणात् कथं त्रिकमिति चेन्न। पृथिव्यप्तेजोवाय्वाकाश ५ गन्धस्पर्शरूपरसशब्द ५ श्रोत्रत्वक्दृक्रसनानासिकावाक्करचरणमेढ्रपायु १० मनोबुद्ध्यहंकारचित्ता ४ नां प्रकृतिविकृतित्वात्प्रकृतावेवान्तर्भावेण प्रकृतिशब्देनैव तेषामपि संग्रहात्। अथ जीवस्वरूपं निरूपयति-नित्य इति। हे श्रीहरिपदसुमते! सुरसुरानन्द! श्रीहरिपदे तच्चरणकमले शोभना मतिर्यस्य स तथोक्तः। सूरिवर्यैर्विद्वच्छ्रेष्ठैरेवं विशेषणविशिष्टोजीवः संप्रोच्यते सम्यक् कथ्यते। स च कीदृक् नित्यः सर्वदैकरूपः सनातनोऽनादिमध्यनिधन इतियावत्।

तथाच स्मृतिः—

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति
"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः" इतिच
"न जायते म्रियते वा कदाचिन् नायं भूत्वा भविता वा न भूयः।
अजोनित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे"। इति च।
पुनः अज्ञोऽल्पज्ञोबहुज्ञभगवदपेक्षया नञोऽत्राल्पत्वमर्थः

तदुक्तमभियुक्तैः—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति ।

तथाचश्रुतिः—

"ज्ञाज्ञौद्वावजावीशानीशौ" इति । ज्ञ इति च्छेदे जानातीति ज्ञोऽजड-इत्यर्थः । नतु प्रधानवज्जड इतिभावः। "इगुपधज्ञाप्रीकिरः क"इति जानातेः कप्रत्ययः।आद्ये तु चेतन इत्यस्यैवाजड इत्यर्थः।अन्त्ये तु अनेकशरीरानुभूत सुखदुःखस्मृतिमानित्यर्थः । "चितीसंज्ञाने"।अस्मान्नन्द्यादित्वाल्ल्युः। पुनः-अजः न जायत इत्यजोजननमरणविकारशून्यः । सततं निरन्तरमविच्छेदेन परस्य परमात्मनो वशास्तदधीनोऽस्वतन्त्र इत्यर्थः । पुनःसूक्ष्मतः सूक्ष्मेभ्यो ऽणुपरमाण्वादिभ्योऽपि अत्यन्तमतिशयेनसूक्ष्मः ।

तथाचोक्तं—

"वालाग्रशतभागस्य शतधाकल्पितस्य च
भागोजीवः सविज्ञेयस्स चानन्त्याय कल्पते" इति
"एषोऽणुरात्मा चेतसा वेदितव्यः" इति च ।

प्रतिकुणपं प्रतिशरीरम् । बद्धादीनां भेदैर्नैकधाऽनेकप्रकारः सन् भिन्नो नाना। पुनः आसमन्ताल्लीयते इत्यालयं शरीरं श्रीशेन परमात्मना-न्तर्यामित्वेनाक्रान्तं च तदालयं च तत्र तिष्ठतीति श्रीशाक्रान्तालयस्थः सन्। निजकृतिफलभुक् स्वकीयानेकविधकर्मफलभोक्ता ।

तथाच श्रुतिः—

"द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति" इति ।

स परमात्मा सहायः सखा उपकारकोयस्य स तत्साहयः। अभिमानी भोक्तृत्वाद्यहंभावोऽस्यास्तीत्यभिमानी । तत्त्वजिज्ञासूनां तत्त्वानि ज्ञातुमिच्छूनां तत्त्वरूपत्वेन वेदितुं ज्ञातुं योग्यस्तत्त्वजिज्ञासुवेद्यः। एवं चाणुत्वपारतन्त्र्यादिविशिष्टोनित्योऽनेकोऽनेकविधस्वकर्मफलानामवश्यं भोक्ता जीवइति निष्कर्षः ॥७॥

भा०—भगवान् श्रीरामानुजाचार्य्यजी के प्रधान लक्ष्य के प्रचारक भगवान् श्रीरामानन्दस्वामीजी अपने प्यारे शिष्य श्रीसुरसुरानन्दजी से उनके द्वितीयप्रश्न का उत्तर कहते हैं कि ऐ भगवच्चरणानुरागी !

सुरसुरानन्द! ज्ञानिप्रवरों ने जीवको सदा एकरूप, ज्ञानगुणवान्, (या भगवत्ज्ञानापेक्षया अल्पज्ञ) ज्ञानस्वरूप जन्ममरणादिषड्विकारों से शून्य, बद्धमुक्तदशा में भी भगवान के अधीन, परमाणु से भी अति सूक्ष्म, प्रतिशरीर में सम्बन्ध रखने से और बद्ध मुक्त नित्य भेद से असङ्ख्य, सीतास्वरूप लक्ष्मीजी के स्वामी श्रीराघव से व्याप्त शरीर में स्थित, निजशुभाशुभ कर्मफल के भोक्ता, भगवदनुचर, बद्धदशा में स्वतन्त्रतापूर्वक शुभाशुभकर्म के करने और उसके फल को भोगने का अहंकारवाला, और चिदचिद्विशिष्ट ईश्वर तत्त्व का अन्वेषण करने वाले से जानने योग्य कहा है ॥७॥

विश्वं जातं यतोऽद्धा यदवितमखिलं लीनमत्यस्ति यस्मिन्
सूर्य्यो यत्तेजसेन्दुः सकलमविरतं भासयत्येतदेषः।
यद्भीत्या वाति वातोऽवनिरपि सुतलं याति नैवेश्वरोज्ञः
साक्षी कूटस्थ एकोबहुशुभगुणवानव्ययो विश्वभर्ता ॥८॥

श्रीमानर्च्यःशरण्योविधिभवप्रमुखैर्योगिगम्याङ्घ्रिपद्मोऽ
स्पृश्यःक्लेशादिभिःसत्समुदितसुयशाःसूरिमान्योवदान्यः
शश्वन्नारायणोऽजः सुमहितमहिमा साधुवेदैरशेषै-
र्निर्मृत्युः सर्वशक्तिर्विकलुषविजरोगीर्मनोभ्यामगम्यः॥९॥

अन्वयप्र०—अखिलं (स्थावरजङ्गमात्मकं) विश्वं (जगत्) यतः (यस्मात्) अद्धा (साक्षात्) जातम् (उत्पन्नं) यदवितं (येन रक्षितम्) यस्मिन्नति (प्रकर्षेण) लीनमस्ति। यत्तेजसा (यस्य प्रभावेण) एषः सूर्य्यः,इन्दुः (चन्द्र) एतत् सकलं (विश्वम्) अविरतम्(निरन्तरम्)भासयति (प्रकाशयति) यद्भीत्या (यस्माद्भयेन) वातोवाति (वायुः संचरति) अवनिरपि (पृथ्व्यपि) सुतलं नैव याति (न गच्छति) यश्च ज्ञः (सर्वज्ञः) कूटस्थः (सर्वदाद्रिवत्सर्वत्राव-

स्थितः ) ( अतएव ) साक्षी (जड़चेतनात्मकसमस्तविश्वस्य द्रष्टा) एकः ( तत्वत्रयेषु प्रधानं ) बहुशुभगुणवान् ( शरणागत-वत्सलत्वाद्यनन्तकल्याणगुणयुक्तः ) अव्ययः ( अविनाशी ) विश्वभर्त्ता ( संसारसंरक्षकः ) श्रीमान् ( श्रियाः श्रीं भर्त्तृवत्सलाम् वा० रा० यु० १११ स० २१ श्लो० इति महर्षिवचनात् सीतारूपश्रीयुतः ) विधिभवप्रमुखैरर्च्यः ( आराध्यः ) शरण्यः ( शरणागतरक्षणे प्रवीणः ) योगिगम्याङ्घ्रिपद्मः ( परमप्रेमलक्षण-भक्तियोगवता पुरुषेण प्राप्यचरणकमलः ) क्लेशादिभिरस्पृश्यः ( अविद्यास्मितारागद्वेषाभिनिवेशादिरूपक्लेशशून्यः ) सत्समुदित-सुयशाः ( वाल्मीक्यादिमहर्षिभिः कथितकीर्तिः ) सूरिमान्यः ( ज्ञानिप्रवराणां मननविषयः ) वदान्यः ( अर्थधर्मकाममोक्षादीनां दाता ) नारायणः ( "नारं घनरसः पुमान्" इतिशब्दार्णवात् नारं घनरसोजलमयनं गेहो यस्य स नारायणः "अयनं पथि गेहेऽर्कस्योदग्दक्षिणतोगतौ" इतिहेमात् । अथवा "पुरुषाः पूरुषा नराः" इति निघण्टुवचनात् नराः पुरुषाः तेषां समूहो नारम् अयनम् अन्तर्य्यामितया निवासस्थानं यस्य स नारायणः । यद्वा "नरतीति नरः प्रोक्तः परमात्मा सनातनः। नराज्जातानि तत्त्वानि नाराणीतिविदुर्बुधाः" इतिस्मरणात् नाराणि अखिलतत्त्वात्मकानि ब्रह्माण्डानि अयनं शरीरवन्निवासस्थानं यस्य स नारायणः "जगत्सर्वं शरीरं ते" इतिमहर्षिवचनात् ) अजः (जन्मरहितः । जनिमतामवश्यं मृतिः "मृत्युर्जन्मवतां वीर" इति भागवतवचनात् । अस्य तु "विवेश वैष्णवं तेजः सशरीरसहानुजः" इति महर्षिवचनतः सशरीर-गमनात् जन्मराहित्यं बोध्यम् ) साधु ( यथा स्यात्तथा ) शश्वद्ध ( निरन्तरम् ) अशेषैः ( समस्तैः ) वेदैः सुमहितमहिमा ( वर्णित-महिमा अतएव ) निर्मृत्युः ( मृत्युरहितः ) सर्वशक्तिः ( विविध-

स्वाभाविकीज्ञानादिशक्तिसम्पन्नः ) विकलुषविजरः ( अपहत-पाप्मत्वादिविशिष्टः ) गीर्मनोभ्यामगम्यः ( ब्रह्मादीनामपि वाङ्मनसाऽगोचरः ) "न ब्रह्मा नेशानः" इतिश्रुतेः । स ईश्वरोवेदितव्यः ॥ ८ ॥ ९ ॥

अथ पूर्वोक्तचेतनाचेतनयोर्नियमेन धारकत्वनियन्तृत्वशेषित्वयोगात्सर्वशरीरिणां सर्वकार्यकारणभूतं निखिलहेयप्रत्यनीकतया सर्वज्ञत्वसर्वशक्तित्वादिसकलकल्याणगुणगणास्पदतया च स्वेतरसमस्तवस्तुविलक्षणं निष्कर्षकेतरसमस्तशब्दवाच्यं सर्वशास्त्रीयकर्मसमाराध्यं सकलफलप्रदं सर्वेषामात्मनां स्वाभाविकसौहार्दसुगमं मुमुक्षूणामाश्रयभूतं मुक्तप्राप्यं निखिलवेदान्तवेद्यं पुरुषोत्तमं सीतापतिमीश्वरं निरूपयति--विश्वमितिद्वाभ्याम् । अखिलं सर्वं स्थावरजङ्गमात्मकमिदं विश्वं प्रपञ्चं यतः सकाशाद्धा साक्षाज्जातम् उत्पन्नं यदवितं येन जातं सत् अवितं रक्षितं यस्मिँश्च लीनं संहृतमस्ति-स ईश्वर इत्यन्वयः ।

तथाच श्रुतिः--

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म" इति ।

स्मृतिश्च--

"यतः सर्वाणि भूतानि भवन्त्यादियुगागमे
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये" इति ।

किञ्च यत्तेजसा यस्य तेजसा इन्दुःचन्द्रमा एष सूर्य्योभास्करोपि एतत्सकलं सर्वं विश्वमविरतं भासयति सततं प्रकाशयति "सन्ततविरतानिशम्" इत्यमरः ।

तथाच श्रुतिः--

"न तत्र सूर्य्योभाति न चन्द्रतारकं नेमाविद्युतोभान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सवमिदं विभाति" इति ।

स्मृतिश्च--

"यदादित्यगतं तेजोजगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजोविद्धि मामकम्" इति ।

स ईश्वरः। किञ्च पवनादयोपि स्वस्वाधिकारे यन्नियुक्ताश्चकिताः सन्तो यदाज्ञामविरतं शिरसा वहन्तीत्याह—यद्भीत्येति। यत् यस्माद्भीत्या भयेन वायुना जगदायुनेत्युक्तरीत्या जगतां परमायुर्भूतोवातोवातः पवनोदेव-तिर्यङ्नरादिषु वाति संप्रचरति। अवनिः पृथिवीरपि यद्भीत्या सुतलं नैव याति न निमज्जति। स ईश्वरः कीदृक् सः ज्ञः सर्वज्ञ इत्यर्थः।

तथा च श्रुतिः—

"भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादिन्द्रश्चाग्निश्च मृत्युर्धावति पंचमः यः सर्वज्ञः सर्ववित्" इति।

पुनः साक्षी स्वकर्मफलभोक्तुरात्मनः कर्मणां द्रष्टा "साक्षाद्द्रष्टरि सञ्ज्ञा-याम्" इत्युक्तेः। पुनः कूटस्थः स्वेतरसर्वलोकान्निहत्य कूट इवायोघन इव तिष्ठतीति कूटस्थोऽविकारी।

"मायानिश्चलयन्त्रेषु कैतवानृतराशिषु"।

"अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्" इतिकोशः। एकोऽद्वितीयो मुख्योऽसहायः स्वयं सर्वसहायभूतः। बह्वोऽनन्ताः शुभगुणाः कल्याणगुणाः कृतित्वकृतज्ञत्वनिभृतत्वसंभृताकारत्वामोघक्रोधहर्षत्वस्थिरप्रज्ञत्वधर्मज्ञत्वस-त्यसन्धत्वप्रियसत्यवादित्वशरणागतवत्सलत्वदृढव्रतत्वमृदुत्वसौलभ्यादय स-न्त्यस्य नित्यमिति तथोक्तः। अव्ययोऽविनाशी। विश्वेषां जगतां भर्त्ता संरक्षकः "डुभृञ् धारणपोषणयोः" इत्युक्तेः शेषषष्ठ्या समासः॥ ८॥

"अनन्या राघवेणाहं भास्करेण प्रभा यथा"

इत्युक्तरीत्या नित्यमनपायिनी श्रीः सीतास्याऽस्तीतिश्रीमान् नित्ययोगे मतुप्। अर्च्यः स्वेतरसर्वैर्विधिभवप्रमुखैराराध्यः। शरणे साधुः शरण्य। शरणं रक्षणे गृहे "तत्र साधुः" इति यत्। योगिनां सनकादीनां गम्यं प्राप्यमङ्घ्रिपद्मं चरणकमलं यस्य सः। पुनःक्लेशादिभिरस्पृश्यः। स्प्रष्टुमशक्यः।

तदुक्तं भगवता पतञ्जलिना—

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति।

सद्भिर्वाल्मीकिप्रभृतिभिः समुदितानि सम्यग्वर्णितानि सुष्ठुयशांसि समुद्रावणादिनिग्रहादीनि यस्य सः। सूरिभिर्गरुडानन्तहनुमदादिभि-र्मान्यः पूज्यः "मानविचारे पूजायाम्" इत्युक्तेः। वदान्यःचतुर्वर्गफलप्रदाता नारा नरसमूहोजलानि वा अयनं वासस्थानं यस्य सः

"आपोनारा इति प्रोक्ता आपो वै नरसूनवः।

अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" इति स्मृतेः।

नारायणपदाभिधेयोदाशरथी राम इतिभावः भवच्छन्दप्रतिपाद्यश्रीरामं विशेष्यत्वेनोद्दिश्य

"भवान्नारायणोदेवः श्रीमांश्चक्रायुधोविभुः।
एकश्रृङ्गोवराहस्त्वं भूतभव्यसपत्नजित्।
अक्षरं ब्रह्म सत्यं च मध्येचान्ते चराघव"।

इति वाल्मीकीये श्रीरामं प्रति ब्रह्मणोक्तेः। अजोऽजन्मा। साधु यथा भवति तथा। शश्वत् सर्वदा। अशेषैर्निखिलैर्वेदैः सुष्ठु महितो-महिमा महत्त्वं यस्य स.। निर्गतोमृत्युर्मरणं यस्य स.। सर्वेषु सर्ववि-धावाशक्तिर्यस्य स.। विगता जरा यस्य स विजरः। विगतं कलुषं यस्य स विकलुषः। स चासौ विजरश्च तथोक्त.। विधिभवप्रमुखैरपि गीर्मनोभ्यामगम्यः वाङ्मनसाभ्यां गन्तुं प्राप्तुमशक्यः। "गीर्वाग्वाणी सरस्वती चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः।

तथाचश्रुतिः—

"अपहतपाप्मा विजरोविमृत्युर्विजिघित्सोऽपिपासः" इति।

"यतोवाचोनिवर्त्तन्ते अप्राप्य मनसा सह" इति च।

एवं च सर्वनियन्ता सर्वान्तर्यामी सर्वशेषी सर्वशरीरी जगज्जन्मा-दिकारणभूतोऽनन्तकल्याणगुणगणैकतानोऽशेषवेदवेद्यः सीतापतिः श्रीराम ईश्वर इतिदिक् ॥ ९ ॥

भा०—अब भगवान् श्रीरामानन्दस्वामी जी श्रुति स्मृति इतिहास पुराणों के सारभूत त्रिस्वरूपात्मक ( चिदचिद्विशिष्ट ) तत्व के निर्णायक वेदान्त दर्शन ( ब्रह्मसूत्र ) के अनुसार चित् और अचित् का स्वरूप दिखलाकर, दो श्लोकों में चिदचिद्विशिष्ट परतत्व के स्वरूप का उपदेश करते है।

समस्त जगत जिससे उत्पन्न हुआ है; जिससे यह रक्षित है; और जिस में यह लीन होता है, जिसके तेज से चन्द्रमा, और सूर्य्य अखिल विश्व को प्रकाशित करते हैं, जिसके भय से पवन-चलता है, पृथ्वी रसातल नही जाती, जो सर्वदा सर्वत्र पर्वत के समान स्थित (अचल) है;

अत एव, जड़चेतनात्मक समस्त विश्व का द्रष्टा है; और तीनों तत्वोमे प्रधान, शरणागत वत्सलता आदि अनेक दिव्य गुणों से युक्त, अविनाशी, जगत् का भरण पोषण कर्ता [ "श्रियः श्री भर्तृ वत्सलाम्" इस महर्षिवाल्मीकि के वचन से ] सीतारूपा श्री जी से संयुक्त, ब्रह्मा शिव आदि प्रमुख देवताओं का आराध्य देव, एवं शरणागतों की रक्षा में दक्ष है; जिनका चरणकमल परमप्रेमरूप भक्तियोग वाले भक्तों से प्राप्य है, जो क्लेशादि (अविद्या अस्मिता राग द्वेष अभिनिवेश.कर्म विपाक आशय] से रहित है, जिनका यश वाल्मीकि आदि महर्षियों से कथित है, जो ज्ञानी प्रवर श्रीहनुमान गरुड़ बिष्वकसेन प्रभृतियों के चिन्तन का विषय और अर्थ धर्म काम मोक्ष का दाता है, जल अथवा जीव समूह जिनका निवास स्थान है ["नरतीतिनरः प्रोक्तः परमात्मा सनातनः। नराज्जातानि तत्वानि नाराणीति विदुर्बुधाः" सनातन परमात्मा को हीं यथार्थ न्याय कर्त्ता होने के कारण नर कहते है, उससे उत्पन्न २५ तत्वात्मक असङ्ख्य ब्रह्माण्ड को नार कहते हैं, और इसीमें उनका निवास होने से उन्हें नारायण कहते है। इसीसे महर्षि ने भी श्रीरामजी के लिये "जगत्सर्वं शरीरंते" "भवान्नारायणोदेवः" का प्रयोग किया है ) जो अजन्मा हैं ( मृत्युर्जन्मवतांवीर) इस भागवत के वचन से जन्मग्रहण करनेवाले को अवश्य मृत्यु होती है। क्रिन्तु ये तो "विवेश वैष्णवं तेजः सशरीरः सहानुजः" इस महर्षि वचन से सशरीर जाने के कारण ही मृत्यु रहित है, अतएव जन्म रहित भी है समस्त वेद जिसकी महिमा का निरन्तर गान किया करता है, जिनकी ज्ञानादि असंख्य स्वाभाविक शक्तियाँ है, जो ज़रा अवस्था और पाप ( अन्याय ) से रहित और जो ब्रह्मा शिव आदि देवताओं के मन और वाणी का भी अविषय है, उसीको ईश्वर जानो ॥८॥६॥

**जाप्यस्तत्तारकाख्यो मनुवरमखिलैर्वह्निबीजं यदादौ**
**रामोङेप्रत्ययान्तो रसमितशुभदस्वक्षरः स्यान्नमोऽन्तः।**

मन्त्रोरामद्वयाख्यःसकृदितिचरमप्रान्वितो गुह्यगुह्यो।
भूताद्युत्संख्यवर्णःसुकृतिभिरनिशं मोक्षकामैर्निषेव्यः १०

अन्वयप्र०—यदादौ ( यस्य तारकमन्त्रराजस्य आदौ प्रथमं ) मनुवरम् ( मन्त्रश्रेष्ठम् ) वह्निबीजम् ( अग्निबीजम् ) नमोऽन्तः ङेप्रत्ययान्तः रामः ( रामाय नमः अन्ते ) स्यात्। ( इत्थं ) रसमितशुभदस्वक्षरः ( षड्सङ्ख्याप्रमितकल्याणप्रदमनोहरवर्णयुक्तः) तत् ( श्रुतिस्मृतिहासपुराणादिषुप्रसिद्धः ) तारकाख्यः ( तारकनामकमन्त्रराजः ) अखिलैः ( महर्षिभिः ) जाप्यः ( जपनीयोऽस्तीति वेदितव्यम् । मोक्षकामैः सुकृतिभिः सकृदिति चरमप्रान्वितः "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति चरमाख्यमन्त्रेण युक्तः। गुह्यगुह्यः ( गोप्येष्वतिगोप्यः ) भूताक्ष्युत्संख्यवर्णः ( पंचविंशतिवर्णात्मकः ) रामद्वयाख्यः ( रामस्य द्वयनामकः ) मन्त्रः "श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये, श्रीमते रामचन्द्रायनमः"इत्याकारकः निषेव्यः ( जाप्यः इतिवेदितव्यम् ) ॥१०॥

एवं प्रधानचेतनेश्वरानुपदिश्य"किं च जाप्यम्"इति द्वितीयं प्रश्नं प्रत्युत्तरयनपरमंजाप्यमुपदिशति–जाप्यस्तदिति।अखिलैर्मुमुक्षुभिस्तारकाख्यःतारकनामक मन्त्र जाप्य.जपनीयोऽहरहरनुक्षणमनुष्ठेयः।जपेरदुपधत्वेपि"पोरदुपधाद् "इति यति स्वार्थिकःप्रज्ञाद्यण्। जापइति पाठोपिसुगम। मनुपु मन्त्रे पुवरं श्रेष्ठं वह्नेरग्नेर्बीजं रामिति यदादौ यस्य रामतारकस्यादौ अस्तीति शेषः। ततो ङे प्रत्ययान्तोरामोरामशब्दः रामायेतिपद स्यात्। कीदृक् सः नमोन्तः नमो नमः शब्दोऽन्ते यस्य ङेप्रत्ययान्तरामशब्दस्य रामायेत्यस्य स नमोऽन्तोरामायनम. इति। रसैः षड्भि संख्याभिर्मितानि प्रमितानि शुभदानि मोक्षप्रदानि सुष्ठु अक्षराणि वर्णा यस्मिन उक्तरीत्या उद्धृततारकमन्त्रे स तथोक्त।किञ्च रामद्वयाख्योऽपि "श्रीमद्रामचन्द्र चरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नम." इति मंत्रः जपनीयः।सकृदिति

"सकृदेव प्रपन्नाय तवास्मीति च याचते।

अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम"

इति चरमेण प्रान्वितः प्रकर्षतया युक्तः। गुह्याद् गोप्यादपि गुह्यः गोपनीयोऽनधिकारिणोऽतिशयेनाप्रकाशनीयः। एतच्च तारकाख्यइत्यत्राप्यन्वेति, एवं चैतत्त्रयमपि नानधिकारिणे प्रकाशितव्यमितिभाव.। कीदृशो रामद्वयाख्यो भूताद्युत्संख्यवर्णो भूताद्यीणि पञ्चविंशतिः उन्मिता उत्कृष्टा वा संख्या येषां ते भूताद्युत्सख्याः ते वर्णा अक्षराणि यस्मिं स तथोक्तः। मोक्षकामैर्मोक्षाभिलाषैः सुकृतिभिः प्रशस्तपुण्यैर्जनैरनिशं सततं निषेव्यः नियमेन सेव्यः सेवनीयः।अयम्भावः परमजप्यत्वेनैतन्मन्त्रत्रयमहरहरनुक्षणं संसारमहार्णवादुत्तितीर्षुभिर्निरालसैरादृतसत्सङ्गैस्त्यक्तेन्द्रियार्थैः प्राप्यदृढमनस्कैर्मुमुक्षुभिरवश्यानुष्ठेयमिति ॥ १० ॥

ज्ञान, वैराग्य के सहित भक्तियोग के प्रचारक आचार्य्य प्रवर श्रीरामानन्द स्वामीजी चित् अचित् और ईश्वर तत्त्व के स्वरूप को उपदेश करके उक्त तत्वत्रय के ज्ञान का प्रधान साधन "किं च जाप्यम्" इस द्वितीय प्रश्नके उत्तर स्वरूप मन्त्रराज के स्वरूप का उपदेश करते है।

महर्षियों ने जिस श्रेष्टमन्त्र का नाम तारक कहा है और जिसवर्ण समुदाय के आदि में अग्नि बीज ( रां ) अन्त में "नमः" और मध्य में ङे प्रत्यान्तया राम अर्थात् "रामाय" शब्द है, उस कल्याण कारी मनोहर छ वर्णों से युक्त मन्त्रराज ( षडक्षर तारकमन्त्र रां रामाय नमः ) और सकृदेव प्रपन्नाय इत्यादि चरममंत्र सेयुक्त "श्रीमद्रामचन्द्र चरणौ शरणं प्रपद्ये, श्रीमते रामचंद्रायनमः" यह श्रीरामजी के द्वयनामक मंत्र मुमुक्षुओं को निरन्तर जपने योग्य है ॥ १० ॥

मंत्राणां व्यापकानां भगवत इहचाव्यापकानान्तुमध्येऽ
तिश्रेष्ठो व्यापकः स श्रुतिमुनिसुमतः शिष्टमुख्यैर्गृहीतः।
नित्यानामाश्रयोऽयं परित उरुशुभो राममन्त्रः प्रधानः
प्राप्यश्चप्रापकोऽपि प्रचुरतरगुणज्ञानशक्त्यादिकानाम् ११

अन्वयप्र०—इह अखिलनिगमागमप्रतिपादितमन्त्रेषु, भगवतः—जगज्जन्मादिकारणपरब्रह्मणो—मन्त्राः श्रेष्टाः, (तेषाम्) अव्यापकानां मन्त्राणां मध्ये व्यापका मन्त्राः श्रेष्टाः, तेषां व्यापकानामपि-मध्ये व्यापकः अतिश्रेष्ठः, श्रुतिमुनिसुमतः, शिष्टमुख्यैः—अगस्त्यादिमुनिश्रेष्ठैः—गृहीतः, नित्यानां प्रचुरतरगुणज्ञानशक्त्यादिकानाम्, आश्रयः, प्रापकश्च, उरुशुभः (परमशुभः), परितः (सर्वेभ्यो व्यापकेभ्यो मन्त्रेभ्यः) प्रधानम् सोऽयं (राममन्त्रः) प्राप्यः (आचार्येभ्यः प्रापणीयोऽस्ति) ॥११॥

अथ देवतान्तरमन्त्रेभ्योभगवन्मन्त्राणां श्रैष्ठ्यं प्रतिपादयन् तत्रापि "नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयाद्" इति विष्णुगायत्र्याम् धीयमानत्वेन—

"नृसिंहार्कवराहाणां प्रसादात्प्रणवस्य च ।
स्वनामपूर्वकाश्चेति मान्त्राश्च व्यापकाः स्मृता. ।
व्यापकेषु च मन्त्रेषु सिद्धारि नैव चिन्तयेद् ।"

इति स्मृतिवचनेन च व्यापकश्रेष्ठनारायणवासुदेवविष्णुमन्त्रत्रयस्य तत्त्वं च प्रतिपादयन् तत्र च प्रथमोपातत्वेनश्रेष्ठप्रधानभूतनारायणमन्त्रापेक्षयापि तारकस्य श्रीराममन्त्रस्य गूढाभिप्रायकत्वेनातिगोपनीयस्य "नास्तिचाष्टाक्षरात्पर" "न मन्त्रोष्टाक्षरात्पर" इत्यादौ "श्रीरामः शरणंमम" इति श्रीरामाष्टाक्षरात्परोमन्त्रोनेत्यर्थके पयसि घृतमिव निगूढस्य महद्भिरुद्धृतस्यातिश्रेष्ठतां प्रतिपादयितुं प्रतिजानीते—मन्त्राणामिति। देवतान्तरमन्त्रापेक्षया श्रेष्ठानां चराचरव्यापकीभूतभगवत्स्वरूपप्रतिपादकत्वाद् व्यापकानां भगवदवतारगुणचेष्टितेषु एकैकप्रतिपादकत्वादव्यापकानां च भगवतो जगज्जन्मादिहेतोः परमात्मनोमन्त्राणां मध्ये मन्त्राणामिति बहुवचनेन तेषामनेकत्वं ध्वनितम्

अत एव गुणराशिवद् गुणपरिवाहात्मनां जन्मनां न संख्या ।

बहवो नृपकल्याणगुणाः पुत्रस्य सन्ति ते।
तवानन्तगुणस्यापि षडेते प्रथमे गुणाः" ।
"बहूनि मे व्यतीतानि जान्मानि तव चार्जुन" ।

इत्याद्युक्तेर्भगवद्गुणा गुणपरिवाहरूपावताराश्च असंख्याता एव । एवं तत्तत्प्रकाशकमन्त्रविशेषाश्चाप्यनन्ता एव " अनन्ता वै भगवन्मन्त्राः "

इत्युक्तेः । रामस्य तन्निष्ठवैभवादेर्मननात् गुप्ततया भाष्यमाणत्वाच्च मन्त्रोऽति अतिशयेन श्रेष्ठः " मत्रि गुप्तभाषणे " इति स्मरणात् । रीयन्ते क्षीयन्ते इति राः क्षयिष्णव· " रीङ् क्षये '' इति धातोरौणादिके डप्रत्यये निष्पन्नरशब्दस्य क्षयिष्णुवाचिताभिधानाद्, राः क्षयिष्णवो न भवन्तीति रा नित्याः वेदव्यासो व्यास इत्यादाविव " विनापि प्रत्ययं पूर्वोत्तरपदयो र्लोपः' ' इति पूर्वपदभूतनञो लोपे ऽवशिष्यमाणपदेनैव लुप्यमानपदार्थ-घटितसमुदायार्थाभिधानात् । किं च प्रलये ऽपि भगवदाश्रयत्वेन निरन्तरं राजन्ते प्रकाशन्ते इति रा नित्याः "राजृ दीप्तौ" इत्यस्माद्धातोरौणादिके डे टिलोपे उक्ताभिमतार्थलाभात् तेषां राणां समूहा राः " तस्य समूहः" इति शैषिके रशब्दादणि " यस्येति च " इति प्रकृत्यकारलोपेन तत्सिद्धिः । ते च ज्ञानानन्दामलत्वादयो ज्ञानशक्त्यादयो वात्सल्यसौशील्या-दयश्च दिव्यात्मगुणाः दिव्यमङ्गलविग्रहः कान्तिसौकुमार्यादयो दिव्यमङ्गल विग्रहगुणाः दिव्यविभूषणानि दिव्यायुधानि दिव्यमहिष्य· नित्यसूरयः छत्रचामरादिपरिचरणसाधनानि द्वारपालका· गणाधिपा· मुक्ताः परमाकाशः मूलप्रकृतिः बद्धात्मानः काल· महदादिविकाराः अण्डानि अण्डान्तर्गतदेवा दिपदार्थाश्च । अत्र च ज्ञानादिकालान्ता· स्वरूपतोनित्याः । महदादय प्रवाहतो-नित्याः। तत्र स्वरूपतोनित्यत्वं नाम सत्त्वे सति उत्पत्तिविनाशात्यन्ताभाववत्त्वम प्रवाहतोनित्यत्वं तु उत्पत्तिविनाशयोग्यत्वे सत्येव पूर्वनामरूपानन्यथाभावव-त्त्वम् । आमः "अम् गत्यादिषु" इति धातोर्निष्पन्नोऽयमामशब्दः तथाहि गत्यर्थानान्धातूनाम्प्राप्त्यर्थत्वात् अम्यते प्राप्यते इत्यामः "अकर्तरि च कारके संज्ञायाम्'' इति सूत्रेणामतेः कर्मणि घञ् इति कर्मव्युत्पत्या स च प्राप्यवाची । अम्यतेऽनेनेति करणव्युत्पत्त्या तु प्रापकवाची । यत्प्रयन्त्यभिसं-विशन्तीत्युक्त्या अमन्तिगच्छन्त्यस्मिन्नित्यधिकरणव्युत्पत्याऽऽश्रयाभिन्नाधार-वाची । तथा च राणां नित्यानां ज्ञानानन्दादीनामामः प्राप्यः प्रापक आधा-रश्चेति रामः । अनेन तस्य परत्वमभिव्यक्तम् । किं च रा आम आधारो यस्य स राम इति बहुव्रीहौ तु अनेनान्तर्यामित्वसौलभ्ये फलिते ।

नन्वत्र बहुव्रीहिसमासे प्रमाणं नास्तीति चेन्न ।

"अन्तः प्रविष्टः शास्ता जनाना सर्वात्मा" ।

"अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः" ।

"भवान्नारायणो देवः श्रीमाँश्चक्रायुधो विभुः" ।

"महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः" ।

इत्यादिवाक्यानामेकवाक्यतया नारायणो नारायणपदाभिधेयः श्रीरामः स्थित इतितदर्थः।

"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः"
"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्टति
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया"
"सर्वस्य चाहं हृदि सन्निविष्टोमत्तः स्मृतिर्ज्ञानमपोहनं च"
"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव"
इत्यादिवचनानामेव तत्र प्रमाणत्वात्। किंच तत्र
"ज्ञानादयोगुणाः सन्ति लक्ष्मीर्नित्यानपायिनी।
भूमिलीलादयोदेव्यः शेषाद्या नित्यसूरयः।
तद्धाम परमः कालः पुरुषः प्रकृतिस्तथा।
महदादिधरान्तानि सप्त चावरणान्यपि।
ब्राह्ममण्डं तदन्तस्था लोकाश्च सचराचराः।
एव मण्डान्यन तानि तत्सर्वं नारमुच्यते"।

इत्यत्र नारशब्देनाभिधीयमानानां ज्ञानादीनामिह रशब्देनैवाभिधाना त्तेषां ज्ञानादीनामामोनिवास इति राम इति सर्वमनवद्यम्

किंच—

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः"
इति शक्तिग्राहकेषु व्याकरणस्य मुख्यतया
'नारास्त्विति सर्वपुंसां समूहः परिकीर्तितः।
गतिरालम्बनं तस्य तेन नारायणः स्मृतः"
"नारोनराणां संघास्तस्याहमयनं गतिः।
तेनास्मि मुनिभिर्नित्यं नारायण इतीरितः"
"नराज्जातानि तत्वानि नाराणीति विदुर्बुधाः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः"
"आपोनारा इतिप्रोक्ता आपो वै नरसूनवः।
ताएव चायनं तस्य तेन नारायणः स्मृतः"
इत्यादि वचनैर्विध्रीयमाणनारायणपदेन श्रीराममुद्दिश्य
"भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः"
इत्यादिभिः परमाप्तशिष्टतमवाल्मीकिमहार्षिणैव रामस्य विशेष्यतया

भिधानादत्र विवरणभूतवचनस्थनरशब्दस्य पृषोदरादित्वाद्रादेशेन चोक्तार्थोऽभिधीयते। तथाच नराणां समूहोरः "तस्य समूहः" इतिनरशब्दात्समूहेऽर्थेऽणि नरस्य रादेशे "यस्येति च" इत्यकारलोपे रस्य नरसंघातस्याभोगतिरालम्बनं वेतिरामः । नारा आप आमःशयनार्थ आश्रयो यस्य स राम इति विग्रहे जल वाचकनारशब्दस्य रादेश। अतएव कालमुखोक्तं श्रीराममुद्दिश्य

"महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः"
इति चतुर्मुखसंदिष्टवचनं संगच्छते।
"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तोजिज्ञासुरर्थोऽर्थी ज्ञानी च भरतर्षभ"

इति चतुर्विधस्वाश्रितेभ्योऽखिलान् धर्मार्थकाममोक्षान् राति ददातीति रामः। यद्वा महीस्थितः सन् राजते सर्वेभ्योऽधिकतरं राजते शोभतइति रामः। पृषोदरादित्वान्महीस्थितशब्दस्यादिवर्णशेषे इतरवर्णलोपे राजते राएव शेषः। यद्वा धर्मरक्षणपूर्वकशरणागतरक्षणाय राक्षसान्मारयतीति रामः। यद्वा राक्षसानां मरणं येन स राम इति बहुब्रीहौ पूर्वोत्तरपदयोरादिवर्णयो शेषे इतरवर्णलोपे

तथा च श्रीरामतापन्यामुक्तम्—

चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ।
रघोः कुलेऽखिलं राति राजते योमहीस्थितः।
स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः। राक्षसा येन मरणं यान्तीति"

अत एव रामोराक्षसमर्दनम् इति प्रसिद्धतरम्। एतेन श्रीरामस्याभयविभूतिनायकत्वमभिव्यक्तम् ।

तथा च वाल्मीकीय आरण्यकाण्डे प्रपत्तिपरायणैर्महर्षिभिरुक्तम्—

"ते वयं भवता रक्ष्या भवद्विषयवासिनः।
नगरस्थोवनस्थोवा त्वन्नोराजा सनातन" इति

व्याख्यातं चैतत्तथैव श्रीमधुराचार्य्यैः ते त्वत्प्रसादाज्ज्ञातभवत्सर्वोत्तमताका इति त्वत्संबन्धिनोवयं त्वत्पादार्पितस्वात्माद्यतया त्वदवलोकनामृतलाभाय त्वत्पुरस्तात्स्थितास्त्वदाज्ञाकाङ्क्षिणः केनापि याद्दच्छिकभाग्योदयेनापरोक्षीकृतेन भक्ताभीष्टं दातुं भवता विद्यमानेन निरवधिकासहायतेजसा वा भगवता कौशल्यानन्दनेन त्वया कृपारक्षणाय रक्षितुमर्हाः। अत्र

स्वतन्त्रस्य तवेच्छा यथा तथा भवत्विति कटाक्षितम्।तेन भगवति प्रणयकोपोऽपि सूच्यते । के यूयं कुत्रत्याश्च ज्ञात्वा रक्षेयमित्यत्राहुः भवदिति–

"सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम्।
पृथिव्याः सागरान्ताया भर्तारं धर्मचारिणम् ।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम्"

इत्याद्युक्तेश्च ये यत्र निवसन्ति ते तत्रैव विषयेषु वसन्ति न हि सर्वस्वामिनः स्वकीयवस्तुरक्षणे स्थानविशेषनियमो यागदानादिवदस्तीति तर्हि सर्वेऽपि त्वद्दासत्वमात्रेण रक्षितव्या भवन्ति । भवन्तु तावदेवालम् अनेन भगवत्परिगृहीतायोध्यादिवासिनां मोक्षोपायान्तराभावेऽपि निर्बाधा मोक्षसिद्धिरिति प्रतीयते भवतोभुक्तोच्छिष्टस्रक्चन्दनधूपपुष्पवासोऽलङ्कारभक्ष्यभोज्यलेह्यचोष्यपेयादिरूपविषयानेव वस्मह इति । भवत्संबन्धिरूपशब्दस्पर्शादिविषयसेविन इति वा अनेन भगवत्पादोदकप्रसादाशिनामनायासेन भगवद्रक्षाविषयत्वं भवतीति व्यक्तम् । इदानीमहं वनस्थोभवामि न राजा भवतां यदानगरस्थोभविष्यामि तदा मद्विषयवासिनोरक्षितव्या इति । अनेनोदासीनता भगवतः प्रतीता तस्मात्त्वदीयत्वाभिमानघटिततद्विषयवासित्वं तन्त्रं तदेवाहुर्नगरेति

"नहि तद्भविता राष्ट्रं यत्र रामोन भूपतिः ।
तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति"

इत्याद्युक्त्या ज्ञायते सर्वेषां विषयाणां राजा स्वाभाविकोराजेति नहि तस्य स्वत्व केनाप्यपन्होतुं शक्यम् आभिमानिकराजत्वस्यावृत्तिः स्वराजत्वगोपननिवृत्तिश्च त्वमित्यनेन कृता । नहि करतलमणिवत्पुरस्तात्स्फुरति प्रमाणान्तरापेक्षास्तीति । अत्र वनं जलं महार्णवजलमित्यर्थः । तत्रस्थोयोराजा नः स त्वमेव पद्मनाभनामा यस्य नाभेर्ब्रह्माऽजायत

तदुक्तमुत्तररामायणे–

"पद्मे दिव्येऽर्कसदृशे नाभ्यामुत्पाद्यमामपि ।
प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम्" इति
"ताभिः परिवृतोराजा शुशुभे परमः पुमान् ।
सायोध्येति कीर्तिता" इत्यादिपुराणप्रसिद्धेरयोध्याख्यमहावैकुण्ठनगरस्थोयोराजा नः स त्वमेव । अनेन–

'जगृहे पौरुषंरूपं भगवान्महदादिभिः ।
संभूतं पोडशकलमादौ लोकसिसृक्षया ।

एतन्नानावताराणां निधानं बीजमव्ययम्"

इत्यत्रोक्तोयः सर्ववतारावतारी प्रद्युम्ननामा कारणार्णवशायी पुरुषः नगरस्थशब्देन तस्याप्यवतारी भगवच्छब्दितस्त्रिपाद्विभूतिस्वामी साकेतनगरस्थो राजाऽपरपर्य्यायश्च पुरुषस्तयोरामस्वरूपैक्यं बोधितं। नगरस्थ इत्यनेन परमपदस्थकैङ्कर्य्यप्रार्थनं । वनस्थ इत्यनेन च प्रकृतिमण्डलस्थकैङ्कर्य्याकाङ्क्षा । अनेन–

"दासभूताः स्वतः सर्वे स्वात्मनः परमात्मनः ।
नान्यद्धि लक्षणं तेषां बन्धे मोक्षे तथैवच"

इत्याद्युक्तैः सर्वेश्वरजीवानां स्वभावस्वरूपसिद्धः शेषशेषिभावादिसम्बन्ध उक्तः । अत्र प्रार्थनं तत्प्राप्त्युपायत्वेन रक्षोभ्य इत्यनुपादानात नेदं दैहिकरक्षाभ्यर्थनं किन्तु स्वयमेवाविद्यादितो निर्मोच्यास्मभ्यं स्वानुभवानन्दजनितत्वच्चरणयुगलकैङ्कर्य्याणि प्रयच्छेत्यस्यैवमनुभवन्तोऽवगतमदैश्वर्यस्थानस्वभावादिकास्तपःप्रभावाच्च स्वयमेव स्वात्मनोऽसारससारान्मोचयितुं समर्थाभवथ इत्याशङ्क्याहुरिति। किच अश्च आश्च मश्च एतेषां समाहार आमं विष्णुब्रह्मेशसमूह

"अकारोवासुदेवस्स्यादाकारश्च पितमहः" इत्येकाक्षरकोशः "मकारः शंकरे प्रोक्त" इति च। राज्जातं रजातं तच्च तदामं चेति रामं शाकपार्थिवादित्वाज्जातशब्दलोपः जातार्थेशैषिकाणन्तरशब्देन बहुब्रीहिर्वा कर्मधारय पक्षे राममस्यास्मिन्वास्तीति राम. अर्शआद्यच् तदर्थोऽन्यपदार्थश्च दाशरथिः।अन्यथा समाहारस्य द्वन्द्वे प्राधान्याद्रामशब्देनदाशरथेर्वाच्यतानापत्तेः

तदुक्तं रामतापन्याम्–

"रेफारूढा मूर्त्तयः स्युः शक्तयस्तिस्त्र एव च" इति

अत एव वशिष्ठसंहितायामपि––

"यस्यानन्तावताराश्च कला अंशा विभूतय. ।
आवेशा विष्णुब्रह्मेशाः परब्रह्मस्वरूपभाः ।
स एव सच्चिदानन्दो विभूतिद्वयनायकः ।
वात्सल्याद्यद्भुतानन्तकल्याणगुणवारिधिः" इत्युक्तम्

अधिकरणकर्तृकर्मकरणव्युत्यापि रमधातुनिष्पन्नोरामशब्दः परमप्राप्यस्वरूपपर. । उक्तं च वेदार्थसंग्रहे श्रीभाष्यकारैः अकारार्थविवरणे स्वारस्यमपि तत्र दर्शितं सुदर्शनाचार्यैः. रामो वामनइत्यनुक्त्वा उपेन्द्रोदाशरथिरिति नरशब्दस्थानिक रपूर्वकामधातुनिष्पन्नोरामशब्दइत्यभिप्रेत्यैव

"महर्षे ! त्वं समर्थोऽसि ज्ञातुमेवं विधं नरम्" इति

नरत्वेन वाल्मीकिप्रश्नस्योत्तरमपि "तैर्युक्त श्रूयतां नर" इत्युक्त्वा "इक्ष्वाकुवंशप्रभवो रामोनामे"तिनारदेन दत्तम्। अत एवाचार्य्यैः श्रीमद्रामायणे मन्त्रार्थत्वेन व्याख्यानम् ।

किञ्च—

"रश्च रामेऽनिले वन्हौ भूमावपि धनेऽपि च ।
इन्द्रिये धनरोधे च भूये रश्च प्रकीर्त्तितः"

इत्युक्तेः रं वह्निसूर्य्यादितेजोऽमतिसकललोकहितार्थं प्रकाशकत्वेन प्राप्नोतीति रामः । जगत्प्रकाशकसूर्य्यादीनामपि तेजः प्रकाशक इत्यर्थः ।

अत एवेममर्थं "तस्य भासा सर्वमिदं विभाति" इति श्रुतिरप्यनुगृह्णाति ।

स्मृतिरपि—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति

अत एव च—

"सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः,,

इति रामायणेऽप्युक्तम्,तदेतत्सकलमभिप्रेत्य व्यापक आश्रयः प्राप्यः प्रापकश्चेति विशेषणचतुष्टयमित्याह । तादृशरामस्वरूपप्रतिपादकत्वान्मन्त्रोऽपि तस्य तादृगेवेति भावः । तत्र हेयप्रत्यनीकगुणगणाकरत्वे नित्यत्वे च सति स्वेतरनिखिलवस्तुमात्रवृत्तित्वं व्यापकत्वम्।भगवद्भगवन्मन्त्रेतरावृत्तित्वे सति भगवद्भगवन्मन्त्रवृत्तित्वमेवात्राश्रयत्वम्।नित्यशरण्याखिलप्रकाशकाभिन्नदिव्यकल्याणगुणगणाकरत्वे सति जगज्जन्मादिहेतुत्वं प्राप्यत्वम् । अनुगुण-निखिलार्थसाधकत्वं प्रापकत्वम्।प्रचुरतरा अनन्ता ये हेयप्रत्यनीककल्याण-गुणा वात्सल्यादयःतेषां नित्यानां ज्ञानशक्त्यादिकानां चाश्रय इत्यर्थः । वात्सल्यादीनां स्वरूपं त्वग्रे वक्ष्यते ।

"रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनाऽसौ परं ब्रह्माऽभिधीयते" ।

इति तापनीवचनानुगुण्यात्सर्वैर्गुणैर्योगिनो रमन्तेऽस्मिन्निति रामः । अधिकरणे घञ् । कारुण्यादिभिः स्वगुणैः स्वस्मिन् नित्यमुक्तादिभेदेन पञ्चविधान् जीवान् रमयतीति रामः।"अकर्तरि च" इति कर्तृभिन्ने कारके घञोविधानेऽपि "रामोरमयतां वरः" इति वाल्मीकीयवचनात् ।

"रमते सर्वभूतेषु स्थावरेषु चरेषु च"

इति महर्षिवचनाच्च बाहुलकात् कर्त्तर्य्यपि घञ्।

किं च—

"रसो वै रसः रस ँ ह्येवायं लब्ध्वाऽऽनन्दी भवति"

इत्युक्त्या यं प्राप्य नित्यमुक्ता योगिनो रमन्ते इति रामः। यद्वा स्वेनैव स्वस्मिन् सर्वान् रमयतीति रामः।

अत एवोक्तम्—

"ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादि।

तथा च अशेषचेतनाचेतनरमयितृत्वेनापि व्यापकत्वमभिव्यज्यते। अत एव च

"अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः" इत्यादि।

"वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्।

रामभूतमिदं सर्वमरण्यं प्रतिभाति मे"

इत्यादि च श्रीमद्रामायणेऽप्युक्तम्। किञ्च योगिरमणाधारतयाऽऽश्रयत्वादिकमपि तथा। कथंभूतो राममन्त्रः श्रुतीनां वेदानां मुनीनामृषीणां च सुमतः।

रामोत्तरतापिन्यां श्रुतयस्तावत्—

"जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासौ अमृतीभूत्वा मोक्षीभवति। अथैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकं तरति सहोवाच याज्ञवल्क्यः तारकं दीर्घानलं बिन्दुपूर्वकं दीर्घानलं पुनर्मायनमः" "तारकत्वात्तारकोभवति। तदेव तारकं ब्रह्म त्वं विद्धि। तदेवोपास्यमिति ज्ञेयम्। गर्भजन्मजरामरणसंसारमहाभयात्संतारयतीति तस्मादुच्यते षडक्षरं तारकमिति। य एतत्तारकं ब्राह्मणो नित्यमधीते। स पाप्मानं तरति। स मृत्युं तरति। सब्रह्महत्यां तरति। स भ्रूणहत्यां तरति। स वीरहत्यां तरति। स सर्वहत्यां तरति। स संसारं तरति। स सर्वं तरति। सोऽविमुक्तात्माश्रितो भवति। स महान् भवति सोऽमृतत्वं च गच्छतीति"।

सामवेदे पिप्पलायनशाखायाम्—

"ओमथाह भारद्वाजो याज्ञवल्क्यं। स होवाच श्रीराममन्त्रस्य माहात्म्यं नो ब्रूहि भगवन् स होवाच याज्ञवल्क्यः। स्वप्रकाशः परंज्योतिः स्वानुभूत्येकचिन्मयः। तदेव रामचन्द्रस्य मनोराद्यक्षरं स्मृतम्। अखण्डैकरसानन्दस्तारकं ब्रह्मसञ्ज्ञकम्। रामायेति स विज्ञेयः स यानन्दचिदात्मकः। नमः पदं स विज्ञेयः पूर्णानन्दैकविग्रहः। सदा नमन्ति हृदये सर्वे देवा मुमुक्षव इति। य एवं

मन्त्रराजं श्रीरामचन्द्रस्य नित्यमधीते। सोऽग्निना पूतो भवति। स वायुना स आदित्येन स सोमेन स ब्रह्मणा स विष्णुना स रुद्रेण पूतो भवति। स सर्वैर्देवैर्ज्ञातो भवति। तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति। प्रणवानामयुतकोटि जप्तं भवति। दशपूर्वान्दशापरान्पुनाति। स हि क्रियावान्भवति। स महान्भवतीति"।

ऋग्वेदे मन्त्ररामायणेपि—अष्टक.८अ ६व.११ में १अ.९सू.१२

*"सचन्त यदुषसः सूर्य्येण चित्रामस्य केतवो रामविन्दन्।
आयन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धानुवेद इति"॥ ७॥

---

अस्य मन्त्रस्य नीलकण्ठीयभाष्यम्

* ईदृश ज्ञाने हेतुमुपासनामाह—सचंत इति। केतवो ज्ञानवन्तोऽस्य रामस्य रां संपदम् ऋचः सामानि यजूंषि—"सा हि श्रीरमृता सताम्" इति श्रुतां त्रयीं तत्सारभूतप्रणवरूपां शब्दतोऽर्थतश्चाविन्दन्, यस्त्वत्र शब्दमय्यां सम्पदि उकारो नास्तीति मन्यते, तं प्रत्येवं वदेत्, यत् यतः उषसः उषसम् उषो वदल्पप्रकाशं विराजम् अकाररूपं सूर्य्येण पूर्णप्रकाशेन हिरण्यगर्भेण उकाररूपेण सचन्त ऐक्यमनयन्, कार्य्यत्वसामान्यादकारमध्ये एव उकारस्याऽन्तर्भावो बोध्यः॥ एवमपि अमित्येवापेक्षितं न तु रामित्यत आह—चित्रामिति। चित्रभानुत्वाच्चित्रो अग्निः रेफः सोऽस्यामस्ति चित्रा सस्वरशब्दवर्ती ततः सवर्णादीर्घे रामित्यर्थः॥ चित्रशब्दान्मत्वर्थीये अर्श आद्यचि टाप्। एवं च रेफार्थेनाग्निनाचिदाभासेन सहितानि समष्टिस्थूलसूक्ष्मकारणानि रामित्यनेन दर्शितानि, अर्द्धमात्रा तु प्रणववदत्राप्यन्तरस्ति, यां रां केतवोऽविन्दन् सा पुनर्ददृशे रामिति रेफाकारमकाराः पुनर्दृश्यन्त इत्यर्थः तत्र दृष्टान्तो—दिवो नेति। नेत्युपमार्थः। दिवः स्वप्नाः स्वल्पं प्राप्य यथा जाग्रद्दृष्टमेवार्थजातं पुनस्तत्सदृशं दृश्यते, तद्वत्समष्टित्रयवाचकात् रांपदात् क्रमेण सद्व्यष्टिस्थूलसूक्ष्मकारणवाचि रामिति पदं पुनः पठेदित्यर्थः॥ अस्य विशेषणम् आयन्नक्षत्रमिति। आ इति स्वरूपं य इवाचरतीति यत् आचारक्विबन्तात् यत् प्रातिपदिकात् कर्तरि क्विबिति तस्मिँस्तुक्। तेन य इति स्वरूपं सिद्धम् इदं वर्णद्वयं द्वितीयेन रामित्यनेन सह पठितं चेत रामायेतिचतुर्थ्यन्तं नाम भवति, नक्षत्रपदेन मुख्यत्वाच्चन्द्रः तेनाऽस्य कारणम् "हृदयान्मनो मनसश्चन्द्रमाः" इति श्रुतिप्रसिद्धं हृदयं गृह्यते। यथा-"तान्नमसृजन्त इत्यन्न शब्देन पृथिवी तद्वत् तेनागमप्रसिद्धोहृदयशब्दार्थो नमः शब्द उद्धृतोभवति। एषां सर्वेषां वर्णानां संकलनेन रां रामाय नमः इति उद्धृतो वेदितव्यः। एतत्फलमाह—यतो नकिरद्धानुवेदेति। यत इति तस्य यतमानस्य यतेः नकिः न किरति इतस्ततो विक्षिप्यत इति नकिः

बृहदारण्ये च—

"यो वै ब्रह्माणं विदधाति पूर्वं वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति ।

श्रीमद्रामायणेऽपि—

"स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः।
सीतामुवाचातियशा राघवं च महाव्रतम्" इति ।

श्रीमद्भागवते च—

'यस्यामलं नृपसदः सुयशोऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम्।
तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतेः शरणं प्रपद्ये ,इति ।

---

अविक्षिप्तं मनः श्रद्धा साक्षात् नु निश्चितं वेद जानति एनं मन्त्रं जपन्नेनदर्श मनसा साक्षात् करोतीत्यर्थः ॥ "मनसैवेदमाप्तव्यम्" इति श्रुतेः मंत्रार्थस्तु रां रां चासौ आश्चेति रां रामः तस्मै रामाय नमस्करोमि प्रह्वो भवाम्यहम्—"तत्राकारे वै सर्वा वाग्" इति श्रुतेः । अर्धमात्रागर्भितौ साभासौ व्यष्टिसमष्टित्रिकौ अकारार्थः ईप्सिततमत्व चतुर्थ्यर्थः । तच्च नत्रान्वितमपि नान्तः प्रज्ञमित्यादि— "स आत्मा स विज्ञेयः" इत्यन्तश्रुत्या इतरेषां द्वादशानां निरस्तत्वेनार्धमात्रार्थो त्रयोदश एव पर्यवस्यति । तेन नम्यत्रयं नन्तृत्रयं नतिश्चैतेषां प्रकाशार्थं यदी- प्सिततममर्धमात्राख्य वस्त्वहमस्मीति तत्र—"नान्तः प्रज्ञाम्" इति सौत्रस्य चिदा भासस्य निरासः—"न बहिः प्रज्ञम्" इति वैराजस्य नोभयतः प्रज्ञमित्युपहितानु- पहितोभयस्वरूपदर्शिन ऐश्वरस्य न प्रज्ञमिति तस्मद्दूषणत्वेऽपि तदन्यस्य तैजसी यस्य—" न प्रज्ञानघनम्" इति विशेषविज्ञानहीनस्य प्राज्ञीयस्य, तथा—"अदृष्टम्" इति दृष्टसजातीयस्य सौत्रस्योपाधेः "अव्यवहार्यम्" इति व्यवहारार्हस्य बैजोपाधेः "अग्राह्यम्" इति योगिग्राह्यस्यैश्वरोपाधेः, "अलक्षणम्" इति विशेषलक्षणवतो वैश्वोपाधेः, "अचिन्त्यम्" इति चिन्तानिर्वर्त्यस्य तैजसोपाधे. । "अव्यपदेश्यम् " इति "न किञ्चिदवेदिषम्" इति व्यपदेशार्हस्य प्राज्ञोपाधेः । "एकात्म्यप्रत्ययसा- राम्" इति षण्णामाभासानां प्रपञ्चोपशममिति षण्णामुपाधीनामद्वैतमिति सर्वेषां निरासः । शिवमित्यर्थमात्रार्थानन्दमात्रस्य परिशेष इति विभा- गो ज्ञेयः ॥ अष्टक. ८ अ. ६ व. ११ म. १० अ. ९ सू. १२ मन्त्रः ७ ।

तव श्रिये मरुतो मर्जयन्त रुद्र यत्तेजनिम चारु चित्रम् ॥ पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् तृतीयेऽष्टके अ. ८ व. १६ म. ५ अ. १ सू. ३ ३मन्त्र॰ १।

मुनयोऽपि अगस्त्यसंहितायाम्—

"सुतीक्ष्ण! मन्त्रवर्गेषु श्रेष्ठो वैष्णव उच्यते ।
गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः ।
वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः ।
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः" इति।
इदं च प्रमाणमतिश्रेष्ठं प्रधानमिति विशेषणद्वयेऽपि बोध्यम् ।

बृहद्ब्रह्मसंहितायां च—

"श्रीराममन्त्रराजस्य माहात्म्यं गिरिजापतिः ।
जानाति भगवाँच्छम्भुर्ज्वलत्पावकलोचनः" इति ।

हारीतेऽपि—

"तस्य श्रवणमात्रेण सर्व एव दिगम्बराः ।
अनन्ता भगवन्मन्त्रा नानेन तु समाः कृताः " इति।

शारदातिलकेऽपि—

"वेदानां च यथा सामवेदश्चो जायते वरम् ।
तथा समस्तमन्त्राणां राममन्त्रः प्रकीर्तितः " इति ।

स्कान्देऽपि—

"विश्वरूपस्य ते राम विश्वशब्दा हि वाचकाः।
तथैव मूलमन्त्रस्ते विश्वेषां बीजमक्षयम् ।

---

एतस्य मुख्यमुपासकं रुद्रं स्तुवन्ति—तव श्रिय इति । हे रुद्र हे हनुमन् तव श्रिये त्वदविगतसम्पत्प्राप्त्यर्थम् राजविद्यावाप्त्यर्थं मरुतो देवा मर्जयन्त शोधयन्ति, तपोध्यानादिनात्मानं यत् यतस्ते तव जनिम जन्म चारु रम्यं यतस्त्वया चित्रं पद रेफाख्येणाग्निना युक्तम् 'चित्रामस्य केतवो रामविन्दन्, इत्युदाहृतमंत्रे प्रसिद्धं रामित्येवं रूपं विष्णोरुपम विष्णुवाचकस्य पदस्य समीपे दृश्यमानम् यथा स्यात्तथा निधायि न्यधायि निहितम् अत्र "गं गणपतये नमः, दु दुर्गायै नमः इति, मन्त्रशास्त्रमर्यादया रामितरा समीपे गपूर्वकमेव'विष्णुवाचिपदं निधेयम्—तच्च राघवादिपदेभ्यः शीघ्रतरं रामपदमेव वर्णसारूप्याधिक्याद्धुपस्थितं भवति, तेन रामपदेन सह नाम नमन्त्यनेनेति नाम नतिवाचिपदम । उपासिनामविशिनष्टि गोनां गुह्यमिति । गोनामिन्द्रियाणां गूहनस्थानं हृदयमित्यर्थः । तेन हृदयशब्दितं नमः पदमुद्धृतं भवति, तद्योगाच्च रामपदादपि चतुर्थी भवति, तेन 'रां रामाय नमः " इति त्र्यक्षराण्युद्धृतानि भवन्ति । यतस्त्वया चित्रपदं विष्णोरुपमं निधायि, तस्मात्तेन सह गोनां गुह्यनाम पाति, अतस्ते जनिम चार्वित्यन्वयः ।

अचिन्त्योऽयं महाबाहो ! मन्त्रश्चिन्तामणिर्विभो ! ।
विहायैनं विमूढात्मा ततश्चेतश्च धावति" इति ।

अगस्त्योऽपि—

"मन्त्ररूप प्रवक्ष्यामि शृणु नारद ! तत्परः ।
रकारादिमकारान्तं मन्त्रं षड्वर्णसंयुतम् ।
षडक्षरात्मकं मन्त्रं तारक ब्रह्मसञ्ज्ञकम्" इत्याह ।

शिवसंहितायाञ्च—

"अहं दिशामि ते मन्त्रं तारकं ब्रह्मसञ्ज्ञितम् ।
एष मन्त्रश्च विज्ञेयस्तारकश्चेति सञ्ज्ञितः ।
कल्पद्रुम इति ख्यातः साधकानां फलप्रदः ।
सर्वेषां मन्त्रवर्याणां श्रेष्ठो वैष्णव उच्यते ।
तेषु वैष्णवमन्त्रेषु राममन्त्रः फलाधिक." इति ।

सनत्कुमारसंहितायामपि—

" श्रीरामेति परं जाप्य तारकं ब्रह्मसञ्ज्ञकम ।
ब्रह्महत्यादिपापघ्नमिति वेदविदोविदुः" इत्याहुः ।

तत्र गर्भवासजन्मजरामरणादिरूपसंसारमहाभयादुपासकान् तारयति मोचयतीति तारकमिति श्रीमन्त्रराजस्य राममन्त्रस्य षडक्षरात्मकस्य परमजाप्यत्वमिति बोध्यम् । पुन. कीदृशो राममन्त्र' शिष्टानां मुख्याः शिष्टमुख्यास्तै' शिष्टमुख्यैः शिवागस्त्यसुतीक्ष्णशरभङ्गसुदर्शनप्रभृतिभिः परमाप्तैः परितोगृहीतः ।अनेन परमशिष्टपरिगृहीतत्वमस्य श्रीराममन्त्रस्याभिहितम् । तत्रशिष्टमुख्यत्वं नाम-भ्रमप्रमादलिप्साशून्यपरमात्माभिन्नयथार्थदर्शित्वे सति यथार्थवादित्वम् । तत्र हेतुमाह उरुशुभ इति । उरु महत् कदाप्यक्षय्यं शुभं कल्याणं यस्मात् स उरुशुभो मोक्षप्रद इति यावत् अत्रेद तत्त्वम यथाष्टाक्षरो मन्त्रः प्रणवेन सार्धमेवाष्टाक्षरोभवति यदा तदैन वैदिकत्वं तत्रैव त्रैवर्णिकानामधिकारोभवति ।यदा तु प्रणवरहितस्तदा तान्त्रिकत्वं तत्र सर्वेषां वर्णानामधिकारित्वमस्ति ।

तथाचोक्तम्—

"वैदिकं ब्राह्मणानां स्याद्राज्ञांवैदिकतान्त्रिके ।
तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकन्तु वा ' इति ।

इदं च वचनं प्रायिकं ब्राह्मणप्राशस्त्यपरम्। शूद्राणां वैदिकानधिकारपरञ्च वैश्यानामपि वैदिकेऽप्यधिकारात्।

किञ्चात्रान्यदपि—

"न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा।
स्त्रीणां च शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते"।

इति प्रभृति वचनशतमत्रानुसन्धेयम्। एवञ्च स्त्रीशूद्रेभ्यो गुरुभिः प्रणवविरहितस्यैवोपदेशः कर्त्तव्य इति फलितं भवति। न च तद्विरहे मन्त्रस्याष्टाक्षरता कथमिति वाच्यम् अमित्येतत्पूर्वकोच्चारणेन तत्सिद्धेः।

"अभावे प्रणवस्यादौ मूलमन्त्रस्य तत्र तु।
अमित्येतत्समुच्चार्य तेनाष्टाक्षरता भवेत्"

इत्यभियुक्तोक्तेः। तथा तारकमन्त्रोपि प्रणवि रांबीजेन सार्द्धमेव षडक्षरोभवति। तत्र ब्राह्मणादित्रितयस्यैवाधिकारः वैदिकत्वात्। बीजविरहिते तान्त्रिके तु सर्वेषां स्त्रीशूद्रादीनामप्यधिकारित्वमस्तीति बोध्यम्। तद्रहिते षडक्षरता तु तस्य श्रीशब्दोच्चारणेन सम्पादनीयम्। न च तद्रहिते तस्य तारकत्वाभावः।

"श्रीराममिति परं जाप्यं तारकं ब्रह्मसञ्ज्ञकम्" इत्युक्तेः।
"मुमुक्षोर्मणिकर्णिकायामर्धोदकनिवासिनः।
रुद्रस्तु तारकं ब्रह्म व्याचष्टे" इतिश्रुतौ।
"सर्वेषामधिकारो वै ज्ञातव्योदेशिकोत्तमैः।
इत्याद्या अन्य सन्ति स्मृतियश्च सहस्रशः।
एतदेव विनिर्मुक्ते श्रीरुद्रः कथयति स्वयम्"

इत्यादिषु चेत्थमेव व्यवस्थेति बोध्यम्। वस्तुतस्तु सत्सङ्गाद्भगवन्मनस्कभगवत्तत्त्वजिज्ञासुगुरून् प्रपित्सूनाम्—

"विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम्
मन्ये तदर्पिततदृशो वचने हितार्थप्राणं पुनाति सकुलं न तु भूरिमानः"
"अहोवत एव श्वपचोऽतोगरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्।
तेपुस्तपो जुहुवुः सस्नुरार्य्या ब्रह्मान्नूचुर्नाम गृणन्ति ये ते"

इत्याद्युक्तरीत्याभीर-कङ्क-पुष्कस-यवन-खस-श्वपचप्रभृतीनामपि परमपावनकारि भगवन्नाम विवक्षूणामत एव यज्ञाद्यर्हाणां विधिवत्परीक्ष्य श्रद्धावतां चक्रादिभगवदायुधसंस्कृतानां भगवत्संमुखानां स्त्रीशूद्राणामप्यत्राधिकारित्वे बाधकाभाव इति सुधियोविभावयन्तु। किञ्चैवमेव संस्कारानर्हस्यापि

तिरश्चो जटायुषो गृध्रस्यासंस्कृतभक्ष्याभक्ष्यमांसाशिनो भगवदर्थसमर्पितशरीरस्य पितृमेध्यविधानेन संस्कारकरणं भगवता श्रीरामेण तदर्थं पिण्डप्रदानं वैदिकयाम्यसूक्तस्य जपकरणं चारण्यकाण्डस्थं सङ्गच्छते। एवमन्यदप्यूह्यमित्यलम्॥११॥

भाषा०—परमैकान्तिक श्रीवैष्णवों के प्राण धन श्रीराम रहस्यत्रय का स्वरूपको दिखलाकर अग्रिम ग्रन्थ से उसका वैभव को दिखलाते है।

इन—अखिल निगमागम प्रति पादित मन्त्रों में, भगवान—जगज्जन्मादि कारण परब्रह्म—के मन्त्र, श्रेष्ठ, और उसमें भी अव्यापक मन्त्रों से व्यापक मन्त्र श्रेष्ठ है। इन व्यापक मन्त्रों का भी व्यापक, श्रुति मुनि सम्मत, शिष्ट मुख्यों—अगस्यादि मुनि श्रेष्ठों से गृहीत, नित्य और प्रचुरतर गुण, ज्ञान एवं शक्त्यादि का आश्रय एवं प्रापक, परम शुभ, सभी व्यापक मन्त्रों से प्रधान जो राममंत्र वह आचार्यों से प्राप्त करने योग्य है॥११॥

**यावद्वेदार्थगर्भं प्रणवि जगदुदाधारभूतं सविन्दु**
**सुव्यक्तं रामबीजं श्रुतिमुनिगदितोत्कृष्टषड्व्याप्तिभेदम्**
**रेफारूढत्रिमूर्त्ति प्रचुरतरमहाशक्ति विश्वोन्निदानम्**
**शश्वत्संराजते यद्विविधसकलसंभासमानप्रपञ्चम्॥१२॥**

अन्वयप्र०—यावद्वेदार्थगर्भम् (सकलवेदार्थगर्भम्) प्रणवि (प्रकर्षेण नूयते स्तूयते उपास्यते वाऽनेनेति प्रणवः स विद्यते ऽस्मिन्निति प्रणवि। प्रणव ओङ्कारो यस्य कार्य्यमित्याशयः) जगदुदाधारभूतम् (जगतामुत्कृष्टाधारभूतम्) सविन्दु (जलबिन्दुवद् बिन्दुसहितम्) सुव्यक्तम् (उत्पादितसंस्कारम्) श्रुतिमुनिगदितोत्कृष्टषड्व्याप्तिभेदम् (यस्योत्कृष्टानां नाम-रूप-यशो-गुण-स्वरूप-मन्त्राणां षण्णां व्याप्तिभेदा व्यापकत्वभेदाश्च वेदैर्महर्षिभिश्च कथिताः) रेफारूढत्रिमूर्त्ति (रेफाश्रिता विष्णु-विरञ्चि-

शम्भ्वात्मकह्रस्वाकारदीर्घाकारमकाररूपाः तिस्रोमूर्तयोवर्णा यस्य बीजस्य सन्तीति वेद्यम् ) प्रचुरतरमहाशक्ति ( सृष्टिस्थितिसंहार करणशीलनिरतिशयमहाशक्तिमत् ) विश्वोन्निदाम् ( जगतामुत्कृष्ट कारणम्) विविधसकलसम्भासमानप्रपञ्चम्(अण्डजपिण्डजोष्मजादि भेदेनानेकप्रकारकभासमानाखिलप्रपञ्चाधिकरणम् ) यत् रामबीजम् ( रामस्य परब्रह्मणो बीजं "रां" रूपं तत् पूर्वोक्तविशेषण विशिष्टं बीजं ) शश्वत् ( सततम् ) संराजते ( अखिलनिगमागम-प्रतिपादितमन्त्राणां सम्राडस्तीतिभावः ) ॥ १२ ॥

अथ चिकीर्षितमन्त्रजपस्य मन्त्रार्थानुसन्धानपूर्वकत्वाद्रामित्येतद्बीज-प्रतिपाद्यं जगज्जन्मादिकारणभूतं ब्रह्म दर्शयति । अथ स्वप्रकाशचै-तन्यस्य वस्तुनो मायातीतस्य रामाख्यपरमात्मनस्त्रिगुणात्मक-जगत्सृष्टिस्थितिलयकारणत्वं दर्शयन्नेव रामाभिन्नमन्त्रराजावयवस्य रामिति बीजस्यार्थं प्रतिपादयति–यावद्वेदेति । यत् रामबीजं तारकमन्त्ररा-जस्यादौ स्थितं रामिति बीजं तत् शाश्वत् राजत इत्यन्वयः। कीदृशं रां बीजं यावद्वेदार्थगर्भं यावद्वेदार्थाः सकलवेदार्था गर्भे यस्य तत्। ननु रामिति बीज-स्य यावद्वेदार्थगर्भत्वं कथं प्रतीयत इति चेत् शृणु सर्ववेदमयगायत्र्यां देवस्य सवितुस्तदभिन्नभर्गशब्देनानेकविधमाहात्म्यविशिष्टः सूर्यमण्डलनिष्ठदेवः पुरुषोत्तम श्रीराम उच्यते ।

तथाचोक्तं सनत्कुमारसंहितायाम्–

"सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम् ।
नमामि पुण्डरीकाक्षममेयं गुरुतत्परम्"इति।

ननु—

"ध्येयःसदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः।
केयूरवान् मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः" ।

इतिभविष्योत्तरवचनान्नारायणस्तथा प्रतीयत इति चेन्न तयोरेकत्वा-भिधानस्यानुपदमेव वक्ष्यमाणत्वात् ।

योगियाज्ञवल्क्योप्याह–

"भ्रस्जपाके भवद्धातुर्यस्मात्पाचयते ह्यसौ ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ।

कालाग्निरूपमास्थाय सप्तार्चिःसप्तरश्मिभिः।
भ्राजते यत्स्वरूपेण तस्माद्भर्गः स उच्यते।
तथा भेति भीषयते लोकान् रेति रञ्जयते प्रजाः।
ग इत्यागच्छति जलं भगवान्भर्ग उच्यते" इति।

सविता च सर्वभावानां प्रसविता उत्पादकोपि स एव "षूङ् प्राणिप्रसवे" इति स्मरणात्।

तथोक्तं तेनैव—

"सविता सर्वभूतानां सर्वभावान्प्रसूयते।
सवनात्पवनाच्चैव सविता तेन उच्यते" इति।
"दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः"।

इतिवचनाद् दीप्तिक्रीडादियुक्तो देवोपि स एव। न चात्र मन्त्रे सवितृभर्गयोर्भेदप्रतीतेः कथमत्र तयोरभेद इति वाच्यम् आपाततो भेदप्रतीतावपि परमार्थविचारतोऽभेदस्यैवाभिधानात्। न च नीलोघट इतिवदभेदे प्रथमाया एवोचितत्वात्षष्ठ्यर्थोऽत्रानुपपन्न इति वाच्यम् तत्रौपाधिकभेदमाश्रित्य राहोःशिर इतिवद्भगवत्पतञ्जलिना षष्ठीसाधनस्याप्युपपादितत्वात। तथा च स एवात्र रामिति बीजे रशब्देनाभिधीयत इति सिद्धमस्य यावद्रूदार्थगर्भत्वम्। किञ्च "यतो वा इमानि भूतानि जायन्ते" "जन्माद्यस्ययत" इत्यादिभिरभिधीयमानो हेयप्रत्यनीकानन्तकल्याणगुणगणैकतानोजगज्जन्मादिकारणभूतो भगवान्नारायणोदेव इत्याद्युक्तं नारायणविष्णुवासुदेववामननृसिंहाद्यभिन्नः परब्रह्माभिधानः सीतापतिः श्रीराम एवात्र रेणाभिधीयत इति स्पष्टतस्तत्सिद्धम्। किञ्च तत्त्वमसीति वाक्येनाधीयमानस्य संबन्धावच्छिन्नस्य रमाभ्यामभिधानात्तत्सिद्धम्।

तदुक्तं शिवसंहितायाम्—

"आद्यस्तु तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान्।
तयोः संयोजनमसीत्यात्मतत्त्वविदो विदुः" इति।

किञ्च—

"यो वै ब्रह्माणं विदधाति पूर्वं वेदांश्च सर्वान् प्रहिणोति तस्मै।
तं ह देव मात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"।

इतिश्रुतौ दीव्यन्ति रमन्ते योगिनोऽत्रेतिव्युत्पत्त्या रमधातुसमानार्थदिवधातोर्बाहुलकादधिकरणे घञि। दीव्यति रमतेऽन्तर्यामितया-

सर्वभूतेषु इति वा पचाद्यचि। दीव्यति स्वात्मनीति वा। देवयति जन्मादिदातृत्वेन रमयति भूतानीति वा। देवयति प्रलये स्वकुक्षौ स्वापयति भूतानीति वा "भवान्नारायणोदेवः" इत्याद्युक्तरीत्या दीव्यते स्तूयते ब्रह्म पुरःसरैः सुरैरिति वा। "अकर्त्तरि च कारके सञ्ज्ञायाम्" इति कर्मणि घञ्। चराचरेषु दीव्यति द्योतते व्याप्नोतीति देवो राम इत्यर्थकदेवशब्देनाभिधीयमानश्चतुर्मुखोत्पादकः सर्वशरण्यः श्रीरामोऽत्र रेणोच्यत इति स्पष्टत एव तत्सिद्धम्। महदाद्यन्तर्यामित्वेनाप्सुशयनाच्च राम एव नारायणशब्दवाच्यः

"नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः।
तानि ह्यस्यायनं यस्मात्तेन नारायणः स्मृतः"
"आपो नारा इति प्रोक्ता आपो वै नरसूनव।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत" इति स्मृतेः

श्रीमद्रामायणे वाल्मीकीयेऽपि—

"संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः।
ततस्त्वमसि दुर्धर्षस्तस्माद् भावात्सनातनात्।
रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवान्

इति श्रीरामं प्रति ब्रह्मणोक्तत्वाच्च। एवञ्च तत्र तत्र प्रदर्शितबहुवाक्यानामेकवाक्यतया श्रीरामस्यैव तत्तद्रूपधारित्वान्नारायणादिशब्दवाच्यत्वमवगम्यते। अत्रेदं तत्त्वं "नराज्जातानि तत्त्वानि" "आपो वै नरसूनवः" "नरतीति नरः प्रोक्तः परमात्मा सनातन" इतिवचनैर्नरशब्दवाच्य एव स्वजाततत्त्वेषु महदादिषु अप्सु चायनकरणान्नारायण इति संज्ञामवाप्तः" इति प्रतिपत्त्या महर्षिवचनात् श्रीराम एव महदाद्यन्तर्यामित्वेनाप्सु शयनाच्च नारायण इतिसंज्ञां प्राप्तवानित्यवगम्यते द्वयोः परमकारणत्वासंभवेन प्रदर्शितबहुवाक्यानामेकवाक्यतया वाक्यार्थाभिधानस्यौचित्यात् सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामेकस्मिन् पर्यवसानस्य युक्तत्वाच्च।

स्कान्देपि—

"विश्वरूपस्य ते राम विश्वशब्दा हि वाचकाः।
तथापि मूलमन्त्रस्ते विश्वेषां बीजमक्षयम्" इति।

स्मृतयश्च—

"अजेन विश्वरूपेण निर्गुणेन गुणात्मना।
सगुणो निर्गुणो विष्णुर्ज्ञानगम्यो ह्यसौ स्मृत"

नहि तस्य गुणाः सर्वेसर्वैर्मुनिगणैरपि ।
वक्तुं शक्यावियुक्तस्य सत्वाद्यैरखिलेर्गुणैः" इति

किञ्च अज आनन्दरूपो नित्यो ऽणुरव्यक्तोऽचिन्त्योनिरवयवो निर्विकारोज्ञानाश्रय ईश्वरनियम्यो धार्यः शेषभूतश्चात्मा चिच्छब्दाभिधेयः। तथा द्रव्यं ज्ञानशून्यं विकारास्पदं च शुद्धसत्वमिश्रसत्वसत्वशून्यभेदात्त्रिविधमेतदचिच्छब्दाभिधेयम्। तथा निखिलहेयप्रत्यनीकानन्तकल्याणगुणोज्ञानानन्दैकस्वरूपोज्ञानशक्त्याद्विभूषितः सकलजगत्सर्गस्थितिलयकर्ता आर्तजिज्ञास्वर्थार्थिज्ञानिरूपचतुर्विधाधिकारिसमाश्रयणीयो धर्मार्थकाममोक्षाख्यचतुर्विधफलप्रदो महालावण्याद्यास्पद विलक्षणविग्रहयुक्तो लक्ष्मीभूमिलीलानायकश्चेश्वरशब्दाभिधेय इति क्रमेण वेदप्रतिपाद्यचिदचिदीश्वराख्यतत्वत्रयाभिधानदर्शनादत्र रामिति बीजे स्फुटतरमेव यावद्वेदार्थगर्भत्वं सिद्धम्।

तथाचोक्तमगस्त्यसंहितायाम—

रेफो ज्योतिर्मयं तस्मात्कृतमाकारयोजनम्।
मकारोऽभ्युदयार्थत्वात्साचमायेति कीर्त्यते" इति

किञ्च वेदप्रतिपाद्यविशिष्टाद्वैतमपीत्थमत्रसिद्धमिति तस्य तत् सिद्धम्। एवमन्यदप्यूह्य मित्यलम्। पुनः कीदृशं रामिति बीजं प्रणवि प्रकृष्टतया नूयते स्तूयते उपास्यत इति यावदिति प्रणवः ओम् प्रणवंजपतां प्रणवाभिधेयश्रीराममनुभावयतां योगिनां चित्तैकाग्र्यसम्पत्या समाधिलाभः फलमुत्पद्यते।

तदुक्तं भगवत्पतञ्जलिना—

"तज्जपस्तदर्थभावनम्" इति।

तद्भाष्यकारश्चाह—

"प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनं तदस्ययोगिनः प्रणवं जपतः प्रणवार्थे च भावयतश्चित्तमेकाग्रं संपद्यते।

तथाचोक्तम्---
स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते" इति।

तस्येश्वरप्रणिधानस्यासन्नतमः समाधिलाभ फलमिति। सप्रणवो ऽस्मिन्नित्यमस्तीति प्रणवि। र् अ आ म् इत्यत्रपृषोदरादित्वाद्रकारस्याकारादेशरूपे विकारे कृते रेफाकारेण सह द्वयोरकारयोर्दीर्घे पुनर्दीर्घाकारस्योकारादेशेगुणे च कृते बीजात्प्रणवोद्धारसिद्धिरिति भाव।

तदुक्तमभियुक्तैः—

"सर्वेऽर्थो वेदगर्भस्था वेदाश्चाष्टाक्षरे स्थिताः ।
अष्टाक्षरश्च प्रणवे अकारे प्रणवस्थितिः ।
यथैव वटबीजस्थः प्राकृतश्च महाद्रुम. ।
तथैव रामबीजस्थं जगदेतच्चराचरम्" इति ।

अत एवेदमेवाभिप्रेत्य श्रीमहर्षिवाल्मीकिनापि श्रीमद्रामायणे आरण्य-काण्डे सर्ववेदमूलप्रणवार्थप्रतिपादकः—

"अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा ।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह"

इति श्लोक उपनिबद्धः । अकारोकारमकारयोगेनोमिति सिद्धम्भवति । तत्र चाग्रगताकारार्थोराम. मध्यगतोकारार्थो लक्ष्मीत्यपरनाम्नी सीतोत्तर-स्थितमकारार्थोऽयं सर्वजीवनियमनकर्मा लक्ष्मणः । एवमावर्त्यमानः प्रणवार्थः सर्ववेदपारायणजन्यफलदो भवति ।

एतदेवाभिप्रेत्याह व्यासः—

"विष्णोरेकैकनामानि सर्ववेदाधिकं मतम् ।
तादृङ्नामसहस्रेण रामनामसमं मतम्" इति ।

महादेवोऽपि—

'रामरामेति रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनामवरानने" इति ।

विष्णोस्तु—

"यागो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ।
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः'
इत्यादि माहात्म्यम् । अतएव
"रमन्ते योगिनो यस्मिन् सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते"

इत्यधिकरणघञन्तरामपदेन नित्यविभूतिनायको नित्यं नित्यमुक्तानु-भाव्यो "रमोरामयतां वरः' इति वाल्मीकिमते बाहुलकवललब्धकर्तृघञन्त-रामपदेन च लीलाविभूतिनायको मुमुक्षुबुभुक्षुसेव्यः पुरुषोत्तम उच्यते।सीता च पृथिव्यादिसर्वतत्त्वाधिष्ठात्री देवता सुमध्यमा भवति । जीवात्मपरमात्मनां

तद्रूपार्थविभाजकत्वरूपं सुष्ठु मध्यमो व्यापारो यस्याः सा पृष्ठेति बन्धे मोक्षे च सीतारामयोस्तच्छेषत्वेनानुगामी । एवं चोभयविभूतिनायकत्वे विभुत्वे सीतापतित्वे चेतनत्वं रामस्य स्वरूपम् । जीवेश्वरोपाधिविभाजकत्वे रामाऽविनाभूतत्वे सर्वजीवशेषित्वे चेतनत्वे च स्त्रीत्वं सीतायाः स्वरूपम् । सीतातत्कान्तशेषत्वे चेतनत्वे तदनुगामित्वं लक्ष्मणस्यापि स्वरूपमिति सिद्धं भवति । तुशब्देन त्रयाणामात्यन्तिकः स्वरूपभेदो वृत्तिभेदश्चोच्यते । अथेत्यनेन सदा सन्निधानेऽप्यवैमत्यमुच्यते । अन्योऽन्याभिप्रायवेदितृत्वं च लक्ष्मणस्य धनुष्पाणिर्वोक्त्या प्राणप्रियोक्तमशस्त्रसेवनवाक्यं नैव मुधा स्यादिति मन्दस्मेरमुखाम्बुजो रामः कतिचित्पदानि निरायुधो गृहीतमुनिवृत्तिर्जगामेति व्यज्यते सीता स्वभावेन सलोलगामिन्यपि मत्तमातङ्गगामिरामपदानुपदगमना चुम्बकमाणिक्यानुगता स्वर्णशलाकेवासीत् । यद्वा पूर्णेन्दौ गच्छति तज्ज्योत्स्ना न पृथग्गमनार्हा "अनन्या राघवेणाहं कान्तिश्चन्द्रमसा यथा" इत्युक्तेः रामगमनमेव सीतागमनम् । एवं च सौकुमार्यादिविरोधितापि नास्ति । निर्भयविलासगतिरुच्यत इति श्लोकार्थः । पुनः कीदृशं रां बीज "जगदुदाधारभूतम्" उत्कृष्ट आधार आश्रय उदाधारः जगतां स्थावरजङ्गमात्मकप्रपञ्चानामुदाधारो जगदुदाधारस्तं भूतं प्राप्तं भावप्रधाननिर्देशात्तत्वं प्राप्तं तद्रूपमित्यर्थः ।

तथा च श्रुतिः–

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्याम् तत्तेजोऽसृजत" "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति"

तथा रामतापिन्याम्–

"सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्तस्थितान्येव एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" इति ।

स्मृतिरपि–

"सर्ववेदाश्रयत्वाच्च सर्वलोकस्य कारणात्" ।
ईश्वरप्रतिपाद्यत्वादखण्डब्रह्मवाचकः" इति ।

पाद्मेपि–

"त्वं विष्णुस्त्वं परं ब्रह्म योगिध्येयः सनातनः ।
त्वमेव सर्वदेवानामनादि निधनोऽव्ययः ।
त्वं हि नारायणः श्रीमान् सीता लक्ष्मीः सनातनी" इति

रामायणेऽपि—

"संक्षिप्य हि पुरा लोकान्मायया स्वयमेवहि।
महार्णवे शयानोऽप्सुमां त्वं पूर्वमजीजनः" इति।

अगस्त्य संहितायामप्युक्तम्—

"यथा घटश्च कलशः पदार्थस्याभिधायकः।
तथा ब्रह्म च रामश्च नूनमेकार्थतत्पर" इति।
"एवंभूतं जगदाधारभूतं रामं वन्दे स च्चिदानन्दरूपम्" इति

रामतापिन्यामप्युक्तम्।पुनः कीदृशं बीजं 'सबिन्दु' बिन्दुना सह वर्तमानम्। तथाहि सृष्ट्यादौ शब्दार्थसृष्ट्यर्थं परमेश्वरक्षुभितगुणाद्यंशकलाकरणवत् कृततयाविद्याकलाव्यक्तञ्चोच्यते। तच्छब्दार्थवत्यविद्या बिन्दु महत्तत्त्वंचेत्य भिधीयते।महतोऽहंकारःततः पञ्चतन्मात्राः ताभ्योभूतानि तेभ्योऽखिलंजगदित्यर्थसृष्टिक्रम.।बिन्दोर्नाद·सच परा पश्यन्ती मध्यमा वैखरीतिचतुर्विधाख्यामवस्थामनुभूय स्वरवर्णपदवाक्यात्मको भवतीतिशब्दसृष्टिक्रमः। अतःशब्दसृष्टेर्बिन्दुपूर्वकत्वात् वटकणिकानिदर्शनेन बिन्दुशिरस्कं तारकाख्यंबीजमुद्धरेत्। मकारतत्त्वावयवद्योतकोऽमृतरूपश्चन्द्रःतदाकारवात्र बिन्दुस्तद्योजनया प्रकाशानन्दचिदात्मकं बीजमुद्धृतं भवति"मःशिवश्चन्द्रमावेधाः"इतिकोशः।बिन्दुग्रहणं चात्र कलानादयोरप्युपलक्षणम्।ततश्च मन्त्रबीजमस्तके बिन्दुनादकलाः प्रदर्शयेत्। अतोऽर्थसृष्टिर्वाच्या। शब्दसृष्टिस्तु वाचिका। तदेवं तारकस्थस्य बिन्दोरर्थसृष्टिशब्दसृष्टिकारणत्वं दर्शितं भवतीति।अर्थसृष्टिहेतोर्महत्तत्वस्य बिन्दोश्चैकरूपत्वार्थसृष्टेरपि बिन्दुकार्यत्वमुपपद्यते। अत्रांशे श्रुतिरपि मानम्

"इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मन.।
मनसस्तु परा बुद्धिर्बुद्धेर्यस्तु महान्पर·।
महतः परमव्यक्तमव्यक्तात्पुरुषः पर.।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इति।

स्मृतिरपि—

"इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्योबुद्धेः परतस्तु सः।
एवं बुद्धेः परं बुध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम्।
"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते'।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्ययमीश्वरः" ।
अन्दण्डब्रह्मणो रामाज्जगतां प्रेरकस्तथा ।
प्रकृतिर्महान्प्रकृतेस्ततोऽहं त्रिगुणात्मकः ।
रामनाम्नःसमुत्पन्नः प्रणवोमोक्षदायकः" इतिच।

स्मृतिः

"प्रणवं केचिदाहुर्वै बीजं श्रेष्ठं तथा परे ।
तत्तु ते नामवर्णाभ्यां सिद्धमाप्नोति मे मतम्" ।

महारामायणेऽपि —

"अंशांशौ रामनाम्नश्च त्रयः सिद्धा भवन्ति हि ।
बीजमोंकारः सोऽहं च सूत्रमुक्तमितिश्रुतिः"

इत्यादौ श्रीरामनाम्नोवर्णविश्लेषविपर्ययादिक्रमेण सिद्धप्रणवोत्पत्तिरुक्ता भवति ।

पद्मपुराणेऽपि—

"जपतः सर्ववेदांश्च सर्वमन्त्रांश्च पार्वति।
तस्मात्कोटिगुणं पुण्यं रामनाम्नैव लभ्यते' इति ।

आनन्दाख्यसंहितायामपि —

"स्थूलमष्टभुजं प्रोक्तं सूक्ष्मं चैव चतुर्भुजम् ।
परं तु द्विभुजं रूप तस्मादेतत्त्रयं यजेत् ।
आनन्दोद्विविधः प्रोक्तो मूर्त्तश्चामूर्त्त एव च ।
अमूर्त्तस्याश्रयो मूर्त्तः परमात्मा नराकृतिः" इति

पुनः कीदृशं बीजम् "सुव्यक्तम्" सुव्यज्यत प्रकाश्यते चराचरं येन तत्सुव्यक्तम् । अस्मिँश्च बीजे चतुर्व्यूहावतारः स्फुटतरतया प्रतीयमानो दृश्यते। तथाहि रमन्ते योगिनो यस्मिन् रमयति जन्मादिदातृत्वेन चराचरं विश्वमिति वा स्वयं वान्तर्यामित्वेन रमते चराचरविश्वेषु राजते वा "रमिराजिरातिभ्य" औणादिके डप्रत्यये

"महर्षे त्वं समर्थोसि ज्ञातुमेवं विधं नरम्"

इति नरत्वेन वाल्मीकिपृष्टः "तैर्युक्तः श्रयतांनरः" इति नरत्वेनैव नारददत्तप्रत्युत्तरा "नरतीति नरः प्रोक्तः परमात्मा सनातन" इतवचनात् "इक्ष्वाकुवंशप्रभवो रामोनाम" इतिवचनाच्च नररामशब्दयोः पर्यायत्वप्रतीत्या चराचरेषु

नरति व्याप्नोतीति व्युत्पत्या "नृ नये"इत्यस्मादौणादिके कप्रत्यये पृषोदरादित्वान्नलोपे ऋकारस्य यणि सिद्धेन रेण प्रतिपादितोऽखिलहेयप्रत्यनीकानन्तकल्याणगुणाकरो दिव्यमङ्गलविग्रहविशिष्टोऽनन्तपरिजनसेव्यमानः स्वानुरूपदिव्याभरणायुधपरिवृतः परमपदनिलयः सीतासमेत उभयविभूतिनायकः श्रीरामश्चतुर्धाऽवततार। तत्र लीलाविभूतौ स्वकृतधर्माधर्मव्यवस्थाभङ्गाय प्रवृत्तान्काँश्चिन्निरङ्कुशानधमान् निग्रहीतुं स्वयं त्रिपादविभूतेः सकाशात्सकलभागवतैः गेश्वर्य्यपरिपूर्ण एव यदा भूमाववततार तदावतीर्ण इत्युच्यते ।

"स च ब्रह्मानन्दैकविग्रहो रेफरूपार्द्धमात्रात्मक विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसीति न ते विष्णोर्जायमानो न जातो देव-महिम्नः पारमन्तमाय सहस्रधा महिमान. सहस्रस्'

इत्यादिश्रुतिभिर्निर्दिष्टानन्तकल्याणगुणगणाकरत्वं च तस्य सिद्धम् । वीजोद्धृतप्रणवविश्लिष्टवर्णानामकारोकारमकाराणां मध्ये प्रथमाक्षरादकारात्प्रणवावयवाल्लक्ष्मणस्याविर्भावः । तदवयवाद् द्वितीयाक्षरादुकारात्तैजसात्मकस्य शत्रुघ्नस्याविर्भाव. । तदवयवात्तृतीयाक्षरान्मकारात्प्रज्ञात्मकस्य भरतस्याविर्भावः ।

तथाचोक्तं रामतापिन्याम्—

"अकाराक्षरसंभूत. सौमित्रिर्विश्वभावनः ।
उकाराक्षरसंभूत· शत्रुघ्नस्तैजसात्मकः ।
प्राज्ञात्मकस्तु भरतो मकाराक्षरसम्भवः ।
अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः"इति ।

एवं च षडक्षरं तारकमेव ओङ्कारात्मकम्। तथाच तदीयाःषडपि तन्त्रवर्णा ब्रह्मवाचका ब्रह्मवाचकत्वादेव ब्रह्मस्वरूपाः, सच्चिदानन्दरामाववोधकत्वादेव सच्चिदानन्दाख्या इति साधनचतुष्टयसम्पन्नैर्मुमुक्षुभिस्तदेव सततमुपासितव्यम् । ब्रह्मणश्च ओंरूपाख्यः सदाख्य आनन्दाख्य इति त्रिविधभेदेनोपासितव्यताया अभिधानात् ।

तथाचोक्तं गीतायाम्—

"ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति ।

एवं हि ओंकारात्मका रामाद्याख्याश्चतुर्व्यूहरूण बीजस्था उपासितव्या इत्युक्तं भवति ।

तदुक्तं श्रीरामतापिन्याम्—

"इत्योतद्ब्रह्मात्मकं सच्चिदानन्दाख्यमित्युपासितव्यम् । अकारः

प्रथमाक्षरो भवति। उकारो द्वितीयाक्षरो भवति । मकारस्तृतीयाक्षरो भवति। अर्द्धमात्रश्चतुर्थाक्षरो भवति। बिन्दुः पञ्चमाक्षरो भवति। नादः षष्ठाक्षरो भवति" इति।

तत्र हि प्रणवावयवोऽकारो राममन्त्रस्य प्रथमाक्षरः प्रथममक्षरं भवति। "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति महाभाष्यकारोक्तेश्छान्दसत्वाद्वा-लिङ्गव्यत्ययः । एषामकारादयस्त्रयोऽत्रमूर्त्ता अर्द्धमात्रादयस्त्रयस्त्वमूर्त्ता नादात्परे च शक्तिशान्ताख्ये अप्यवस्थे वेदितव्ये। तदेवं रांबीजमेव प्रणवा-त्मकत्वाद्ब्रह्मणो वाचकमिति चतुर्वर्गफलप्रदस्य तस्योपासितव्यत्वं सिद्धम् । किञ्च विलक्षणचित्रजगदाकारनिर्माणातिपट्वी सकलदेहिनामुत्पत्तिस्थिति-संहारकरणशीला मूलप्रकृतिनामधेया मूलप्रकृतिरविकृतिरितिनाम्नी सीतापि प्रणवात्मिका ।

तथाचोक्तम्—

"श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ।
सा सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता ।
प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः " इति ।

प्रणूयते प्रस्तूयते महदाद्याकारनिर्माणे या सा प्रणवा "णु स्तुतौ" इति-धातोः कर्मणि "ऋदोरप्" इत्यप् तस्या भावस्तत्त्वं तस्मात्प्रणवत्वात् प्रकर्षेण क्रियतेऽनया प्रकरोति स्वयमिति वा प्रकृतिः। ब्रह्म प्रणवमूलो वेदस्तद्वदनशीला वेदविचारपरा वदन्तीति तदर्थः। एवं हि बीजस्थप्रणवप्रतिपाद्य.—

"इति रामो वचः श्रुत्वा सह भ्रात्राभिवाद्य च ।
प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सह सीतया" इति

योगिवृन्दवृन्दारकवृन्दाभिवन्द्यपादपद्मद्वन्द्वहस्तगतपुरुषोत्तमत्वत्यागेना-पि गुर्वादिभक्तिविषयं दर्शयन् रामः प्रभाहीनान् राक्षसान् कृत्वा राजते यो महीस्थित इति कृत्स्नाया मह्या युगपत्पर्यायेण वा राजमानो मुनिजनरक्ष-णाद्वा।—

"रामो दाशरथिः शूरो लक्ष्मणानुचरो बली" इति ।

"सीता सुमनसेवाभिवादयांबभूव" इति सहेति चेति चकारात्प्रक्रम्य स्वभक्ताभिवादनं भगवतो नैश्वर्य्यभञ्जनम् । तत्र कौशल्याबालत्वेनैव रामा-भिगमनात् ऐश्वर्यद्रावणे तु सहसा हृदयद्रवणात् ऐश्वर्यमपि हृदयं भिनत्ति । न तु द्रावयति। तेन द्रष्टरि नीचबुद्धिवत् परऽस्मिन्नत्युच्चबुद्धिजननात् भोग्यत्वादौ

भयजननाच्चात्र सहशब्दद्वयं वदति। रामलक्ष्मणयोः प्रस्थानमन्यदेवेति सीतारामयोश्च ततोऽन्यदेवेति च रामस्य गतिचातुर्यादन्यत्र दुर्लभादुभयानुगतिस्तेनैव ज्ञातव्येति कैवल्यार्थिभिर्जीवसहचरत्वेन तत्स्वामित्वेन च श्रीराम एवोपासितव्यः। ऐश्वर्यमोक्षकामैः केवलकैङ्कर्यकामैरपि सीतासख्त्वेन च सेव्यः। तत्सेवने च नातीव देशकालविशेषापेक्षत्वम्। अत्र च प्रणवार्थद्वैविध्यमपि वर्णयन्ति कुशलाः। तथाहि "अकारमकारवाच्ययोरीश्वरजीवयोरुकारः सम्बन्धावगमकः" इति "स्वस्वामिभावेन स्थितौ जीवेश्वरौ प्रणवार्थो एकः। अकारोकारार्थयोः सीतारामयोर्मननान्मुक्तिः" इतिमन्तव्यत्वेन स्थितौ लक्ष्मीनारायणौ प्रणवार्थो द्वितीय "मन ज्ञाने" इति धातोरौणादिके डुवि प्रत्यये टिलोपे मकारो मननार्थकः। ननु लक्ष्मीनारायणवाचकस्य प्रणवस्य सीतारामवाचकत्वं कथमिति चेन्न

"सीता लक्ष्मीर्भवान् विष्णुर्देवो नारायणः प्रभुः"

इत्यगस्त्यवाक्यात्सीतारामयोर्लक्ष्मीनारायणाभ्या स्वरूपैक्यावगमात्। विग्रहभेद इतिचेत् नहि प्रणवे विग्रहभेदवाचकं किंचिल्लिङ्गं दृश्यते। यथा ब्रह्मस्वरूपं सर्वविद्यानुवृत्तम् आनन्दादयः प्रधानस्येत्यत्रोक्ता स्वरूपानुवृत्ता आनन्दादयश्च तथोभयोःस्वरूपमुभयविग्रहानुवृत्तमिति मन्तव्यम् अन्यथा "गायत्रीविवरणरूपरामायणसर्वप्रसिद्धस्तदर्थश्च जानकीरामौ" इति कथं संगच्छेत। आचार्या अपि "गायत्रीमूलमन्त्रद्वयशरणागतिमन्त्रविवरणरूपं रामायणं व्याख्येयम्" इति कथमाहुः "चतुर्वेदसमन्वितमिति सर्ववेदार्थोपबृंहणप्रतिज्ञानम्" च कथं संगच्छेत।

"इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्" इतिन्यायेन स्मृत्यनवकाशदोषप्रसंग इतिचेन्न "अन्यस्मृत्यनवकाशदोषप्रसंगः" इतिन्यायेन चाप्रामाण्यं च स्यात्

"वेदे रामायणे चैव पुराणे भारते तथा।
चरितं रघुनाथस्य शतकोटि प्रविस्तरम्"।

एकैकमक्षरं पुंसां महापातकनाशनम्" इत्यादिभिर्विरोधश्च। यद्वा प्रणवव्यक्तिभेदेन भिन्नभिन्नविग्रहवत्स्वरूपं प्रतिपाद्यत इति सर्वमनवद्यम्। किञ्च बीजाभिन्नप्रणवब्रह्मणोः सर्वारपदत्वेन साम्यादोंकारज्ञानमेव ब्रह्मज्ञानम्। बहुश्रुतिसिद्धप्रकारैरोंकारस्य ब्रह्मधीहेतुत्वमभिप्रेत्यैव ब्रह्मप्रतिपत्तये माण्डूक्योपनिषद् ओंकारमेवोपादिशति–

'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम् भूतं भवद्भविष्यदिति सर्वमोंकार एव। यच्चान्यत्त्रिकालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्माय-

मात्मा ब्रह्म सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः" इति ।

एवं प्रथममात्रादिभेदोऽपि तत्रैव व्याख्यात इति तत एवावगन्तव्यम् । पुनः कीदृशं बीजं श्रुतिमुनिगदितोत्कृष्टषड्व्याप्तिभेदम् । श्रुतयश्च मुनयश्च श्रुतिमुनयःतैर्गदिता उक्ता उत्कृष्टाः समीचीनाः नामरूपयशोगुणस्वरूपमन्त्रभेदेन षड् व्याप्तिभेदा यस्मिन् तत् । तत्र नामव्याप्तौ—

यजुर्वेदीयश्रुतिः—

"न यस्य प्रतिमा अस्ति यस्य नाम महद्यशः" इति ।

बृहदारण्यकेऽपि

"ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति" इति ।

आश्वलायनशाखीयश्रुतिरपि—

"जपान्तेनैव शरीरेण देवता दर्शनं करोति । कलौ नान्येषां भवति । यजूंषि नामेति नामैव ब्रह्मरूपेण श्रुतय आहुः"

अथर्वणेऽपि—

"सदा रामोऽहमित्येतत्तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः" इति ।

महाभारते शान्तिपर्वण्युत्तरार्द्धे—

"ऋग्वेदे स यजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन ! ।
सांख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।
बहूनि मम नामानि कीर्तितानि महर्षिभिः ।
गौणानि तत्र नामानि कर्मजानि च कानि च" इति ।

विष्णुरहस्येऽप्याह

"वेदे रामायणे शास्त्रे पुराणे भारते तथा ।
आदौ मध्ये तथा चान्ते हरिः सर्वत्र कीर्त्यते" इति ।

बृहस्पतिस्मृतौ च—

"यथा प्रलपते मूर्खो देशराज्यादिकं बहु ।
तथा चेत्प्रलपेद्रामं को न मुच्येत बन्धनात्" इति ।

पद्मपुराणेऽपि—

"जपतः सर्ववेदांश्च सर्वमन्त्रांश्च पार्वति ! ।
तस्मात्कोटिगुणं पुण्यं रामनाम्नैव लभ्यते" इति ।

ब्रह्मयामले च—

"रामनाम परं बीजं रामनाम परं जगत् ।
रामनाम परो मन्त्रो रामनाम परा क्रिया" इति ।

अध्यात्मरामायणेऽपि—

"यस्मिन रमन्ते मुनयो विद्ययाऽज्ञानविप्लवे ।
तं गुरु प्राह रामेति रमणाद्राम इत्यपि" इति ।

वृद्धमनुस्मृतौ—

"सप्तकोटिमहामन्त्राश्चित्तविभ्रमकारकाः ।
एक एव परो मन्त्रो राम इत्यक्षरद्वयम्" इति ।

तथा दिव्यमङ्गलविग्रहविशिष्टस्य भवगतो रूपव्याप्तावपि श्रुतिस्मृतयः प्रमाणानि । ननु विग्रहस्य कर्माधीनत्वाद्भगवतो दिव्यमङ्गलविग्रहविशिष्टत्वं कथमिति चेदत्रोच्यते—भगवतो दिव्यमङ्गलविग्रहत्वस्यानेकश्रुतिस्मृतिसिद्धत्वात्तादृक्सन्देहस्यानवकाशात् ।

तथाहि छान्दोग्ये—

"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णस्तस्य कप्यासं पुण्डरीकमेवमक्षिणी" इति । कं जलं पिबतीति कपि नालं तत्रास्ते तिष्ठतीति कप्यासं तेनाम्लानत्वं तस्य प्रतिपादितं तादृशं पुण्डरीकं यथा, एवं तस्याक्षिणी इति कप्यासमित्यस्यार्थः । सुवर्णः अप्राकृतः प्राकृतस्यैव देहस्य कर्माधीनत्वम् भगवद्विग्रहस्याप्राकृतत्वान्न तथात्वम् । सूत्राणि च "ज्योतिषि भावाच्च" "ज्योतिर्दर्शनात्" "रूपोपन्यासाच्च" इति ।

रामतापिन्यामपि—

"अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः"
"पूर्णानन्दैकविग्रहं परं ज्योतिःस्वरूपिणम्"
"द्विभुजः कुण्डली रत्नमाली धीरो धनुर्द्धरः"
"अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिम्" इति ।

स्मृतिश्च—

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति ।

भारते च—

"न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति ।

बृहद्वैष्णवेऽपि—

"यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः ।
स सर्वस्माद्बहिष्कार्य्यः श्रौतस्मार्तविधानतः ।
मुखं तस्यावलोक्यापि सचैलं स्नानमाचरेत्"

ब्रह्माण्डपुराणेऽपि रामतापिन्यामपि—

"सच्चिदानन्दविग्रहः" इति ।

उपनिषदि च—

"तमेतं सच्चिदानन्दविग्रहम्" इति ।
न च विग्रहादिशब्दानां नात्मवाचकत्वमेवेति वाच्यम् ।
"अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम्" इत्यमृतबिन्दूपनिषदि ।
"दुर्दर्शमतिगम्भीरमजं श्यामं विशारदम्" इत्यलातोपनिषदि ।
"पद्मकोशप्रतीकाशम्" इति महोपनिषदि ।
"प्रकृत्या सहितः श्यामः पीतवासा जटाधरः" इति रामतापिन्याम् ।
"पुरुषं कृष्णपिङ्गलम्" इत्यादिना वर्णविभागोक्तेः ।
"जरामरणनिर्मुक्ताः सर्वे धर्मा· स्वभावतः" इत्यलातोपनिषदि ।

जरामरणादेरात्मन्य सक्त वाच्छरीर एव निर्मुक्तिवचनं संगच्छते । "सुस्मितं भावयेन्मुखम्" इत्यादेः श्रीभागवतादिषु बहुशः श्रुत वाच्च ।

रामायणेऽपि—

"वृक्षे वृक्षे हि पश्यामि चीरकृष्णाजिनाम्बरम् ।
गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ।
अपि रामसहस्राणि भीतः पश्यामि रावण ! ।
रामभूतमिदं सर्वमरण्यं प्रतिभाति मे" ।

पाद्मे च—

"पुरा महर्षयः सर्वे दण्डकारण्यवासिन ।
दृष्ट्वा रामं हरिं तत्र भो तुमैच्छन्सुविग्रहम्' इति ।
"रामरूपनिमग्नानि पश्यच्चक्षुर्मनासि च ।
नापकष्टुं हि ते शेकुः पश्यन्तो राममच्युतम् ।
न कश्चिन्मनस्तस्माच्चक्षुषा वा नरोत्तमात् ।
नरश्शक्तोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे ।
यश्च रामं न पश्येत य च रामो न पश्यति ।
निन्दितः स भवेल्लोके स्वात्मा येनं विगर्हते इति ।

रामायणेऽपि मधुरकवि·

"द्विनेत्री द्विभुजाऽनर्घ्यहरिन्माणिक्यवर्णभा ।
या मूर्ती रामचन्द्रस्य रूपं तत्र प्रतिष्ठितम् ।
कोटिशो मूर्तयः सन्तु साद्भुताद्भुतभावका· ।
हरेस्ताभ्योप्युपादेया मूर्तिरेषैव भावदा ।
त्रैलोक्यमोहनं रूपं राममूर्त्यैव संहितम् ।
आशिखन्नखपर्य्यन्तं पूर्णब्रह्मैव भास्वरम्" इति । यशोब्याप्तावपि प्रमाणं श्रुतिः। "सीता लक्ष्मीर्भवान् विष्णु·" इत्युक्तरीत्या विष्णोः परब्रह्माभिधानस्य श्रीरामस्य

"विष्णोर्नुकं वीर्याणि प्रवोचयः पार्थिवानि विममे रजांसि न ते विष्णोर्जायमानो न जातो देवमहिम्नः पारमन्तमाय सहस्रधा महिमानः सहस्रम्" इति ।

ताभिरेव तस्य निर्दोषानन्तकल्याणगुणगणाकरत्वमपि सिद्धम् ।

स्मृतयश्च—

"गुणात्मनस्तेऽपि गुणान् विमातुं यो वा अनन्तस्य गुणाननन्तान् ।
अनुक्रमिष्यन्स तु बालबुद्धि र्नान्तं गुणानामगुणस्य जग्मुः ।
नान्तं विदाम्यहममी मुनयोऽग्रजास्ते मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन्गुणान् दशशताननं आदिदेवः शेषोऽधुनापि समवस्यति नास्यपारम्"

इत्यादयः ।

"वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ।
तस्माद्रामायणं देवि वेद एव न संशयः" इत्यगस्त्यसंहितायाम् ।

"स तु मेधाविनौ दृष्ट्वा वेदार्थपरिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयतः प्रभुः ।
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्" इति वेदोपबृंहणप्रयोजनकरामायणवचनेन यशोव्याप्तिरपि प्रतिपादिता भवति ।
"चरितं रघुनाथस्य शतकोटि प्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम्" इति च ।

स्कन्दपुराणे-

" सकृदुच्चरितं येन रामायणमनुत्तमम् ।
भस्मीभवन्ति पापौघा हृदि रामस्तु तद्भवान्"

तत्र गृहीतनानावतारस्येश्वरस्य लीलैव संसारिजनानामपवर्गादिसाधकता च प्रयोजनम् ।

तथा च ब्रह्मसूत्रम्—

"लोकवच्च लीलाकैवल्यम्" इति ।
"लीला जगत्पतेस्तस्य छन्दतः संप्रवर्तते" इति च ।

आचार्य्या अपि—

"त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।
भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः"

इत्याहुः । किञ्चैकस्वभावतः पृथिव्यादिसंघातस्य भगवच्छरीरत्वं भगवदात्मकत्वं च श्रुतयो वदन्ति "यः पृथिव्यां तिष्ठन् पृथिव्यान्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्" "य पृथिव्यन्तरो यमयति स आत्मान्तर्याम्यमृत" इत्यारभ्य य इत्यारभ्य च "आत्मनि तिष्ठन्नात्मनोऽन्तरोयमात्मा न वेद यस्यात्मा शरीरम् य आत्मा नन्तरो यमयति स आत्मान्तर्याम्यमृतः" इत्याद्याः । इदमेवान्तर्यामितया सर्वक्षेत्रज्ञानामवस्थानं भगवतः सामानाधिकरण्येन व्यपदेशबोधिका स्मृतिरपि—

"अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।
न तदस्ति विना यत्स्यान् मया भूतं चराचरम् ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति ।

"प्रधानक्षेत्रज्ञपतिर्गुणेशः पतिर्विश्वस्यात्मेश्वरेशश्च तं शिवमच्युतम्" इति बृहदारण्ये । "त्रयो लोका एत एव वागेवायं लोकः मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः त्रयो वेदा एत एव वागेवर्ग्वेदः मनोयजुर्वेदः प्राणः

सामवेदः” इति । ज्ञानशक्त्यादिगुणकस्य श्रीरामस्य गुणव्याप्तावपि “यः सर्वज्ञः सर्ववित्”

“पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च”

इत्यादिकाः श्रुतयः प्रमाणानि । “समस्तकल्याणगुणात्मकोऽसौ”

“कोह्यस्मिन्प्रथितो लोके सद्गुणैर्गुणवत्तरः” इत्याद्युपबृंहणानि च ।

ननु कामधेनुचिन्तामणिकल्पद्रुमक्षीरोदपूर्णचन्द्रवत्सीताकान्तस्य गुणैः किं प्रयोजनमिति चेदुच्यते—स्वत एवाप्तसमस्तपुरुषार्थस्यानन्दमहोदधेरपि तस्य गुणानां चेतनाचेतनस्वरूपसत्तास्थितिप्रवृत्तिनिवृत्तिधर्मार्थकाममोक्षरूपप्रयोजनहेतुत्वात्सार्थक्यं भवतीति । न चाचेतनानां सकलपुरुषार्थानर्हत्वात् कथं तेषु भगवद्गुणसार्थक्यमिति शङ्क्यम । सकलचेतनात्मकजगदुत्पत्तिस्थितिसंहारादिरूपभगवद्व्यापाराणां बहुप्रमाणसिद्धत्वात् “भोगमात्रसाम्यलिङ्गात्” “जगद्व्यापारवर्जम्” इत्यादिप्रमाणैस्तदितरचेतनानां जगद्व्यापारादिवर्जनश्रवणाच्च तत्रेश्वरस्य लीलैव प्रयोजनं संसारिचेतनानामपवर्गादिसाधकता च प्रयोजनम ।

तथा च ब्रह्मसूत्रम्—

“लोकवत्तु लीलाकैवल्यम्” इति ।

“लीला जगत्पतेस्तस्य छन्दतः संप्रवर्तते” इति च ।

आचार्या अपि—

“त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।

भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः” इत्याहुः

“वरदसकलमेतत्संश्रितार्थं चकर्थ”

“मात्रार्थं च भवार्थं च जनानामसृजत्प्रभुः” इत्यादि च ।

श्रीमद्रामायणे—

“नास्ति रामस्य सदृशः” इत्यादिवचनैः “विष्णोर्नुकं वीर्याणि” इति श्रुत्या

“यो वा अनन्तस्य गुणाननन्तान” इत्यादिस्मृत्या च ।

अनन्तकल्याणगुणगणव्याप्तिमत्त्वं श्रीरामस्यैवेति तत्प्रतिपादकबीजस्याऽपि तत्त्वमिति सुधियो विभावयन्तु । स्वरूपव्याप्तिरपि श्रीरामस्यैव तत्र तत्र स्फुटमित्यनुसंधेयम् ।

तथाहि—

“दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ।

अभ्यगच्छँस्तदा प्रीता वैदेहीं च यशस्विनीम्”

इत्यारण्यकाण्डरामायणवचनादभिगम्यत्वेन महर्षिनिश्चिता

"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" इतिवत् यः समस्तचराचरकारणसर्वतत्त्वाश्रयमूर्तिः

"सत्यं ज्ञानमनन्तं ब्रह्म वृक्षइव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं सर्वं य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासः सत्यकामः सत्यसंकल्प सर्वकामः सर्वकर्मा सर्वगन्ध. सर्वरसः एप सर्वेश्वर एष भूतपाल एषां लोकानामसंभेदाय"

'न तत्समोऽभ्यधिकश्च दृश्यते तस्य नाम महद्यश'"

इत्यादिलक्षणवेदान्तवेद्यस्वरूपगुणः

"वैकुण्ठे परे लोके श्रिया सार्द्धं जगत्पति' ।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ।
यत्किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः"इतिस्मृतिस्मारितस्थानविशेषोत्तमपरिजनपरिकरादिविभूतिविस्तार. भवान्नारायण वासुदेव-कृष्ण विष्णु-केशव माधव हृषीकेशाच्युत जनार्दन-पुरुषोत्तमाधोक्षज मुकुन्द-मधुसूदन वैकुण्ठ हरि-महेश्वर श्रीपति-श्रीजगन्नाथादिसर्वशब्दवाच्य

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"

इत्यादिना योगिध्येयत्वेन योगशास्त्रोक्तश्च स एवायं सर्वजगदवितुं स्वभक्तहृदयानन्दनः कौशल्यातनयवेषेण भरतप्रसूदशरथकृतवरव्याजेन भक्तानस्माननुजिघृक्षुरिहायातीति दिव्यचक्षुषो महर्षयः । नैतादृशं ज्ञानं लौकिकानामस्ति । अत एव तेषां परमाप्ततमत्वेन रामविषयप्रार्थनपूजनादिव्यापारा नाज्ञानकृता नापि सुकृतिविशेषनरवरबुद्ध्या कृता अपि तूक्तदृष्ट्यैव कृता इति तद्वचनान्यमृतवद्ग्राह्याणि। अत्रैतदाचारेण श्रीरामस्वरूपज्ञानं मुनिनोद्दिष्टमिति मन्तव्यमिति ।। अथ सर्ववेदमयगायत्र्यर्थप्रतिपादकप्रणवार्थाधारभूताकारस्य बीजस्थत्वेन सर्ववेदमयत्वं च रात्त्वराधारभूतबीजार्थप्रतिपादनेन मन्त्रव्याप्तिस्तूक्तप्रायेति सुधीभिराकलनीयम् । पुनः कीदृशं बीजम् "रेफारूढत्रिमूर्ति" रेफोऽत्र रवर्णः तमारूढास्तदुपश्लिष्टा वृक्षारूढा वानरा वृक्षाश्रिता इतिवत् रेफाश्रिताः तिस्रो मूर्त्तयो ब्रह्मविष्णुरुद्ररूपा वर्णा अकारद्वयं मकारश्च यस्मिंस्तत् । तत्र प्रथमाकारो ब्रह्मरूपः, द्वितीयोऽकारो विष्णुरूपः मकारो रुद्ररूपः इति त्रिमूर्तिशब्देन वर्णत्रयमुच्यते । नन्वकारद्वयमकाराणां सृष्ट्यादिशक्त्यभावे कथं ब्रह्मा

द्यात्मकत्वमित्याह्-प्रचुरेति। प्रचुरतरा अतिशयाधिका महती उत्पत्तिस्थिति-संहारशीला शक्तिर्यस्य तत्। न चैतस्य बीजविवरणत्वेन बीजस्यैव तादृश-शक्तिमत्त्वं नत्वकारद्वयमकाराणामिति वाच्यम् बीजस्य तादृशशक्तिमत्त्वे-नैवोपरञ्जकतया तेषामपि तत्सत्त्वात्। अत एव "रेफारूढा मूर्त्तयः स्यु शक्त-यस्तिस्र एव च" इति शक्तित्रयस्यापि रेफारूढत्वेनाभिधानं रामतापिन्यां संग-च्छते। पुनः विश्वोन्निदान विश्वेषां जगतामुत्कृष्टं निदानमादिकारणम् "निदानं त्वादिकारणम्" इत्यमरः। पुनः जरायुजादिभेदेन विविधमनेकधा सकलं स्थावरजङ्गमात्मकं भासमानं प्रपञ्चं जगद्यास्मस्तत्। श्रुतिश्च "रामबीजस्थं जगदेतच्चराचरम्" इति। एवञ्चैवंविशेषणविशिष्टस्य रामिति बीजस्यैव मुमुक्षूणां परमयोगिनामुपास्यत्वमिति परमनिष्कर्षः।

तथा च हारीतस्मृतौ—

"रामित्येकाक्षर रामं योगिनः समुपासते" इति।

राममहिम्नाख्येऽपि—

"कृशानुः शेषाद्यशशिधरयुतो बीजमिति ते
भजन्ति ध्यायन्तस्तव चरणपङ्केरुहयुगम्।
गृहे तेषां पद्मा विहरति मुखे गीः सुललिता
सुभोगान्भुक्त्वान्ते तव वरपदं यान्ति परमम्"

पिप्पलायनसंहितायां श्रुतिश्च—

"स्वप्रकाशः परं ज्योतिः स्वानुभूत्येकचिन्मयः।
तदेव रामचन्द्रस्य मनोराद्यक्षरं स्मृतम् इति।

श्रीरामतापिन्यां च—

"स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वनैव भासते।
जीवत्वेनेदमो यस्य सृष्टिस्थितिलयस्य च।
कारणत्वेन चिच्छक्त्या रज सत्वतमोगुणैः।
यथैव वटबीजस्थ प्राकृतश्च महाद्रुमः।
तथैव रामबीजस्थं जगदेतच्चराचरम्।
रेफारूढा मूर्त्तयः स्युः शक्तयस्तिस्र एव च" इति।

अगस्त्यसंहितायामपि—

"श्रीराममन्त्रराजस्य सम्यगर्थोऽभिधीयते।
संहितोपनिषन्मूलः सर्वकार्य्यार्थसिद्धिदः।

रकारो वह्निवचनः प्रकाशे पर्यवस्यति ।
सच्चिदानन्दरूपोऽस्य परमात्मार्थ उच्यते ।
व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ।
व्यञ्जनैः स्वरसंयोगो विद्धि तत्प्राणयोजनम् ।
रेफो ज्योतिर्मयं तस्मात्कृतमाकारयोजनम् ।
मकारोऽभ्युदयार्थत्वात्सामायेति च कीर्त्यते ।
अयमेवान्तमुत्सृज्य कार्यमेकाक्षरो मनुः ।
सोऽयं बीजं स्वकं तस्मात्समायं ब्रह्म उच्यते ।
सबिन्दुः सोऽपि पुरुषः शिवसूर्येन्दुरूपवान् ।
ज्योतिस्तस्य शिवो रूपं नादः स प्रकृतिर्मता ।
प्रकृतिः पुरुषश्चोभौ समायं ब्रह्म सस्मृतौ ।
बिन्दुनादात्मकं बीजं वह्निः सोमकला मता ।
अग्नीषोमात्मकं विश्वं रामबीजे प्रतिष्ठितम्" इत्युक्तम्

शिवसंहितायां च–

"अक्षरार्थोऽधुनास्यैव विशदीक्रियते मनोः ।
बीजोक्तमुभयार्थत्वं रामनामनि दृश्यते ।
बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते ।
मुक्तिदं साधकानां तन्मकारो मुक्तिदो मतः ।
सरूपत्वादतो रामो भुक्तिमुक्तिफलप्रदः ।
आद्यस्तु तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान् ।
तयोः संयोजनमसीत्यात्मा तत्त्वविदो विदुः ।
तत्त्वमस्यादिवाक्यन्तु केवलं मुक्तिदं यत ।
भुक्तिमुक्तिप्रदं चेदं तस्मादप्यतिरिच्यते ।
रमन्ते योगिनो नित्यं यद्वा रमयति स्वकान् ।
निर्गुणं सच्चिदानन्दं सगुणं चेति कीर्त्यते ।
योनिलिङ्गात्मकं विश्वं रामबीजे प्रतिष्ठतम् ।
रामबीजसमुद्भूतं बहुसोमात्मकं जगत् ।
यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ।
तथैव रामबीजस्थं जगदेतच्चराचरम्" इति ॥ १२ ॥

भाषा—चारों वेद का अर्थ जिसके गर्भ में–कुक्षी में है, जो प्रणव है ( उपासना या स्तुति जिससे की जाती है, उसे तो प्रणव

कहते है वह प्रणव इसमें विद्यमान रहने से यह प्रणवि हुआ ) समस्त विश्व के आधार रूप बिन्दु से जो युक्त और संसार को उत्पन्न करने वाला है, वेद और स्मृति ने जिसके नाम, रूप, यश, गुण, स्वरूप और मन्त्रों की व्यापकता का वर्णन किया है, विष्णु ब्रह्मा और महेश का वाचक अकार आकार, और मकार जिस राम बीज के आश्रित है,*सृष्टि स्थिति और संहार करने वाली महाशक्ति ( ब्रह्मा, बिष्णु, महेश ) जिसमें विद्यमान हैं, और जो अण्डज पिण्डज उष्मज स्थावर भेद से अनेक विध भासमान समस्त ब्रह्माण्ड ( विश्व प्रपञ्च ) का आधार रूप है, वह श्री राम जी का बीज (रा) उपरोक्त विशेषणों से युक्त होनेके कारण समस्त श्रुति स्मृति प्रतिपादित मन्त्रों के सम्राट् ( सवमन्त्रों से श्रेष्ठ ) है॥१२॥

---

*अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येतादृशान्यनन्तकोटिब्रह्माण्डानि सावरणानि ज्वलन्ति। चतुर्मुख-पञ्चमुख-षण्मुख-सप्तमुखादि-संख्याक्रमेण सहस्रावधिमुखान्तैर्नारायणांशै रजोगुणप्रधानैरेकैक सृष्टिकर्तृभिरधिष्ठितानि विष्णुमहेश्वराख्यैर्नारायणांशैः सत्त्वतमोगुण-प्रधानैरेकैकस्थितिसंहारकर्तृभिरधिष्ठितानि महाजलौघमत्स्यबुद्बुदानन्तसङ्घवद् भ्रमन्ति। त्रिपाद्विभूतिमहानारायणोपनिषदि षष्ठाऽध्याये।

इस ब्रह्माण्ड के चारोतरफ स्थित, आवरण(पञ्चमहाभूत महत्तत्त्व अहंकार मूलप्रकृति ) संयुक्त, एतादृश अनन्त कोटि ब्रह्माण्ड प्रकाशित है वे ब्रह्माण्ड चतुर्मुख से आरम्भ कर क्रमशः सहस्रमुखपर्य्यन्त रजोगुणप्रधान, केवल सृष्टि करने वाले नारायणके अंशभूत ब्रह्मा से अधिष्ठित हैं।

और ऐसाही सत्त्वगुण तमोगुण प्रधान, केवल स्थिति और संहार करने वाले नारायण ( नार नाम चौबिशतत्त्व, और जीव समुदाय अयन नाम, निवास स्थान हैं जिसके अथवा चौबिशतत्त्व और जीव समुदाय का निवासस्थान होने से याने अन्तर्व्यापक बहिर्व्यापक होने से ही रामजी की "नारायण" संज्ञा है। क्योंकि ''रमते सर्वभूतेषु स्थावरेषु चरेषु च'' "रमन्ते सर्वभूतानि यस्मिन्निति'' रामः।

तत्राद्येन पदेन रेण भगवान् सीतापतिः प्रोच्यते
श्रीरामो जगतां गुणैकनिलयो हेतुश्च संरक्षकः ।
तच्छेषी पदतोऽप्यतो भगवतोऽनन्यार्हशेषत्वकम्
व्यावृत्तिस्तु सुरान्तरादिगतमत्तच्छेषताया मुहुः॥१३॥

अन्वयप्र०—तत्र (रामबीजे) आद्येन (प्रथमेन) रेण पदेन जगतां हेतुः (त्रिविधकारणम्) संरक्षकः गुणैकनिलयश्च (शौर्यगाम्भीर्यमाधुर्य्यसौलभ्यादिगुणानां प्रधानाश्रयः) भगवान् सीतापतिः श्रीरामः प्रोच्यते (कथ्यते) अतः पदतोऽपि (अकारेण पदेन) तच्छेषी (जीववर्गस्य शेषी नियामकः) अपेः समुच्चायकत्वेन

---

इत्यादि श्रुति स्मृति विहित व्युत्पत्तिके अनुसार नारायण नाम राम जी ) के अंशभूत विष्णु महेश से अधिष्ठित, कारण समुद्र में अनन्त मत्स्य बुद्बुद के झुण्ड समान भ्रमण करते है ।

इसी अर्थ को महर्षि वाल्मीकिने अति स्पष्ट रूप से यों वर्णन किया है कि ("रक्षां विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान्" वा रा. उ. १०४ सं ) भूतमात्र की रक्षा करने के लिये श्रीरामजी विष्णुरूप (विग्रह)धारण किया और "महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः" सृष्टि करने के लिये महार्णव (कारण समुद्र में) विष्णुरूप से शयन करते हुये ब्रह्मा को उत्पन्न किया। और ब्रह्मारूप अपने अंश से शिव को उत्पन्न किया। इस प्रकार महर्षि ने वेद का परम रहस्य अर्थ का वर्णन किया है। अतएव श्रीभाष्यकार १०८ श्रीरामानुजाचार्य्य जी निरवधि, निःसीम, चिदचिद्विशिष्ट पर ब्रह्म के ज्ञाता होने पर भी "यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते" इस स्मृतिको चरितार्थ करते हुये अपने गुरुवर्गों से १८ बार श्रीमद्वाल्मीकीयरामायण पढ कर यह शिक्षा दिए कि वेदप्रतिपाद्य परम कारण जानने की इच्छा हो तो मेरे जैसे अनेकबार विशुद्धगुरु से श्रीमद्-रामायण का अध्ययन करो। विशेष देखना हो तो भूमिका पढ़िये ।

दीर्घाऽऽकारमकारयोः समुच्चयः। अतो दीर्घाकारेण भगवतः(रवाच्य-स्य परमात्मनः श्रीरामस्य) अनन्याऽर्हशेषत्वकं ( श्रीरामस्यैव स्वेतर समस्तचेतनाचेतनानामेकमात्र नियामकत्वम् ) मुहुः ( पुनः ) मकारेण सुरान्तरादिगतसत्त्वच्छेषतायास्तु (निश्चयेन) व्यावृत्तिः (श्रीरामेतरसमस्तसुरादिगततच्छेषताया अनन्यार्हशेषताया अभा वश्च ) प्रोच्यते । अन्यथा आचार्य्यचरणानाम् "रेफारूढत्रि-मूर्त्ति" इति ग्रन्थस्य व्याहतिः स्यात्। अतोऽपिना समुच्चयग्रहणं सङ्गच्छते ॥१३॥

एवं सविस्तरबीजसमुदायार्थमभिधाय सम्प्रति तदवयवतत्तद्वर्णाभिधेयार्थोऽभिधीयते–तत्राद्येनेति। तत्र राममन्त्रबीजविषयकेण आद्येन प्रथमेन पदेन "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति लुकाऽव्यक्तचतुर्थ्यन्तेन रेण रेफेण रमन्ते योगिनो यस्मिन् यद्वा स्वाश्रितान् रमयति भुक्तिमुक्तिप्रदानेन स्वयमेवाऽन्तर्यामितया चराचरेषु रमते "रमयामास धर्मात्मा" इत्युक्तरीत्या श्रीरूपिणीं सीतां रमयति स्वयं वा तया सह रमते। अथवा राति ददाति धर्मार्थकाममोक्षान्, चराचरेषु राजते प्रकाशते' न तत्र सूर्यो भाति'' "य एषोऽन्तरादित्यः" इत्याद्युक्तरीत्याऽन्तर्भावितण्यर्थतया प्रकाशयतीति रः "रमिराति राजिभ्यः' औणादिके डप्रत्यये टिलोप इत्यर्थकेन श्रीरामः प्रोच्यते। रमन्ते योगिनो यस्मिन्नित्यादि व्युत्पत्त्या "अकर्त्तरि च कारके संज्ञायाम्" इत्यधिकरणे घञ् "रामो रमयतां वरः" इत्युक्तेर्बाहुलकात्कर्तरि वा घञ् "राति राजिभ्याम्" औणादिके मप्रत्यये राजेष्टेरात्वे च रामः।

"अनन्या च मया सीता भास्करेण प्रभा यथा।
अनन्या राघवेणाहं भास्करेण प्रभा यथा"।

इत्युक्तरीत्याऽनन्ययाऽनपायिन्या श्रिया सीतया सहितो रामः श्रीरामः अत्र यद्वक्तव्यं तद्बीजव्याख्यायामुक्तप्रायम्। कीदृक् श्रीरामः भगवान्

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा" इत्युक्तेः।

समग्रैश्वर्यादिषडात्मको भगोऽस्यास्तीति भगवान् नित्ययोगे मतुप् सदा समग्रैश्वर्यादिषट्सम्पन्न इत्यर्थः।

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति"

इति च विष्णुपुराणे। पुनः कीदृक् सीतापतिः सीताया अयोनिजाया विदेहराजस्य तपोबललभ्याया विपुलसम्पत्तिवर्द्धिन्याः प्रियेण तुल्यैश्वर्य-शीलवयःकुलाचारादिकायाः "सीता लक्ष्मीर्भवान् विष्णुः" इत्युक्ते. लक्ष्म्याः पतिः सीतापतिः अनेनास्य पुरुषकाररूपसीतासहितस्याविरतं शरणागतपालकत्वं ध्वनितम्। पुनः कीदृक् गुणैकनिलयः गुणानां शौर्यवीर्य-माधुर्य्यकृतज्ञत्वदृढव्रतत्वसर्वज्ञत्व सौलभ्यादीनाम् एकश्चासौ निलयश्च। पुनः जगतां हेतुः कारणं "हेतुर्ना कारणं बीजम्" इत्यमरः। तच्च कारणं त्रिविधं निमित्तोपादानसहकारिभेदात्। तत्र संकल्पविशिष्टवेषेण निमित्तत्वम्। यथा घटस्य दण्डादि। सूक्ष्मचिदचिद्विशिष्टवेषेणोपादानत्वम्। यत्समवेतं कार्य्यमुत्पद्यते तदुपादानम् यथा घटादेर्मृदादिः। सहकारिभूतकालाद्यन्तर्य्यामितया सहकारित्वमिति विभागोऽत्र द्रष्टव्यः। एवं च ब्रह्मविष्णुरुद्रप्रभृतीनामपि सर्वेषां रवाच्यो रामो हेतुरिति बोध्यम्।

तथाच श्रुतिः—

"ओं भृगुर्वै वारुणिर्वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। सोऽब्रवीद्राम एव परं ब्रह्म रामादन्यन्न किञ्चन। यत एते रामादेवोत्पद्यन्ते। राम एव विलीयन्ते। राम एव स्थितिं वसन्ति। तस्माद्राम एव विभुः" इति।

किञ्च श्रुत्यन्तरमपि प्रमाणम्—

"यस्यांशेनैव ब्रह्मविष्णुमहेश्वरा अपि जाताः। महाविष्णुर्यस्य दिव्यगुणाश्च स एव कार्य्यकारणयोः परः परमपुरुषो रामो दाशरथिर्बभूव" इति।

किञ्च—

"रामात्सञ्जायते कामः कामाद्विश्वं प्रजायते।
तस्माद्धनुर्धराः सर्वे द्विभुजा मूलरूपिणः" इति।

पराशरस्मृतौ चोक्तम्—

"राम एव परं ब्रह्म परमात्माभिधीयते।
रामात्परतरन्नास्ति यत्किंचित् स्थूलसूक्ष्मकम्।
ब्रह्मविष्णुशिवाः सर्वे इन्द्रोऽग्निर्वरुणो यमः।
सूर्य्यश्चन्द्रश्च खं भूमिराकाशस्त्वनिलोऽपदः।
सर्वे ते रामचन्द्रस्य तेजसा संप्रतिष्ठिताः।
भूतं भव्यं भविष्यच्च सर्वं रामसमुद्भवम्" इति।

आनन्दाख्यसंहितायामपि चोक्तम्—

"स्थूलमष्टभुजं प्रोक्तं सूक्ष्मं चैव चतुर्भुजम्।

परं तु द्विभुजं रूपं तस्मादेतत्त्रयं यजेत्।
आनन्दो द्विविधः प्रोक्तो मूर्तश्चामूर्त एव च।
अमूर्तस्याश्रयो मूर्तः परमात्मा नराकृतिः।''इति।

पाद्मेऽपि—

"रामान्नास्ति परो देवो रामान्नास्ति परं व्रतम्।
नहि रामात्परो योगो नहि रामात्परो मखः।
ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः।
तमादिदेवं श्रीरामं विशुद्धं परमं भजे" इति।

पञ्चरात्रे बृहद्ब्रह्मसंहितायामपि—

'वासुदेवादिमूर्त्तीनां चतुर्णां कारणं परम्।
चतुर्विंशतिमूर्त्तीनामाश्रयः शरणं मम"

श्रीमद्रामायणे वाल्मीकीयेऽपि—

"महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः।
पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि।
रामस्य पुरुषो लोके सत्यधर्मयशोगुणैः।
समो न विद्यते कश्चिद्विशेषश्च कुतः पुनः"।

अयोध्याकाण्डेऽपि—

"सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः।
श्रियः श्रीश्च भवेदग्र्याः कीर्त्याः कीर्तिः क्षमाक्षमा।
दैवतं देवतानां च भूतानां भूतसत्तमः।
तस्य के ह्यगुणा देवि! देशे वाप्यथवा वने।
पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः।
क्षिप्रं तिसृभिरेताभिः सह रामोऽभिषेक्ष्यते"।

इति सहृदयैराकलनीयम्। संरक्षतीति संरक्षकश्च चकारात्संहर्ता। "यतो वा इमानि" इत्यादिश्रुतिः। 'जन्माद्यस्य यतः"इति ब्रह्मसूत्रम्। "यतः सर्वाणि भूतानि भवन्ति" इत्यादि स्मृतिश्च प्रमाणम्।

पुनस्तच्छेषी तस्य जीववर्गस्य शेषी अतः पदतः अकारेण पदेन उक्तरीत्या प्रथमान्तेन द्वितीयेन भगवता रवान्यस्य श्रीरामस्य अनन्यार्हशेषत्वं प्रोच्यते। अन्यमर्हतीति अन्यार्हः न अन्यार्हः शेषो यस्य सोऽनन्या-

ईशेषस्तस्य भावः तत्त्वम् तदेवेति स्वार्थे कन । मुहुः पुनः सुरान्तरादिगतत-च्छेषताया व्यावृत्तिः प्रोच्यते । श्रीरामापेक्षयाऽन्यः सुरः सुरान्तरं ब्रह्मादि. मयूरव्यंसकादित्वात्समासः । सुरान्तरम् आदिर्येषां ते सुरान्तरादयः तान गता, सती चासौ तच्छेषता अनन्यार्हशेषता च तस्याः। अयं भावः भगवान श्रीराम एव जीववृन्दस्यानन्यशेषी न तु ब्रह्मादिदेवगण इति। एवं च शेषभूतैर्जीववृन्दैः शेषी श्रीराम एव सदाऽवश्योपास्य इति बोध्यम् ॥१३॥

इस प्रकार बीज का समुदायार्थ कह कर, अब उसके अवयवों के अर्थ का उपदेश करते है कि—

भाषा—महर्षिगण, श्रीरामबीज में जो प्रथम रेफपद है, उससे भगवान सीतापति श्रीरामजी को, जगत् का * त्रिविध कारण, संरक्षक, शौर्य्य वीर्य्य माधुर्य्य लावण्य सौहार्द सौलभ्यादि गुणों का प्रधान आधार, जीवों के अन्तर्यामी, और रेफोत्तर अकार पद से समस्त चेतन अचेतनों का शेषी (नियामक) कहते हैं। और आकार पद से, उन में ही अनन्यार्हशेषत्व—जीवों की एक मात्र नियामकता—बतलाते हुए, पुनः मकार पदसे, उन से भिन्न ब्रह्मादि देवताओं की नियामकता की व्यावृत्ति कहते हैं ॥ १३ ॥

**पितापुत्रत्वसम्बन्धो जगत्कारणवाचिना।**
**रक्ष्यरक्षकभावश्च रेण रक्षकवाचिना ॥ १४ ॥**

अन्वयप्र०—जगत्कारणवाचिना रेण ( रेफेण ) पितापुत्रत्व-सम्बन्धः ( प्रोच्यते ) रक्षकवाचिना रेण ( रेफेण ) रक्ष्यरक्षक-भावश्च ( सम्बन्धः प्रोच्यते ) ॥१४॥

किञ्च सकलब्रह्मादिजगत्कारणभूतेन रेण पितापुत्रत्वादिसंबन्धोऽप्य-भिधीयत इत्याह पितापुत्रत्वेन्यादि । जगतामुक्तरीत्या त्रिविधं कारणं वक्ति तच्छीलः स तथोक्तेन रेण पिता च पुत्रश्च पितापुत्रौ तयोर्भाव. पितापुत्रत्वं तच्चा-

---

*सूक्ष्म चिदचिद्विशिष्ट वेष से उपादान कारण, संकल्प विशिष्ट वेष से निमित्त कारण और कालान्तर्यामी वेष से सहकारी कारण है, इस तरह जगत का त्रिविध कारण श्री राम जी ही हैं।

सौ संबन्धश्च पितापुत्रत्वसम्बन्धः प्रोच्यते। क्रियापदमनुकृष्य संबध्यते। रक्षतीति रः "रक्ष पालने" इति धातोरौणादिके डे टिलोपे तत एव तादृशे मप्रयये टेरात्वे तु राम इति रक्षकवाचिना रेण रक्षितुं योग्यो रक्ष्यः रक्षति पालयतीति रक्षकः स च स च तौ तयोर्भावः रक्ष्यरक्षकत्वसंबन्धश्च प्रोच्यत इत्यर्थः। १४।

आगे के श्लोकों से, ब्रह्मादि से कीट पर्य्यन्त समस्त जगत् का, रेफार्थ श्रीरामजीके साथ अनेक तरह का सम्बन्ध दिखलाते है—

भाषा—महर्षिगण जड़ चेतनात्मक जगत् का श्रीरामजी के साथ, रेफ को उसका कारण वाचक होने से पिता पुत्रत्व, और रक्षक वाचक होने से रक्ष्य—रक्षकत्व सम्बन्ध कहते है ॥१ ४ ॥

**शेषशेषित्वसम्बन्धश्चतुर्थ्या लुप्तयोच्यते ।**
**भार्य्याभर्तृत्वसम्बन्धोऽप्यनन्यार्हत्ववाचिना ॥१५॥**
**अकारेणापि विज्ञेयो मध्यस्थेन महामते ! ।**
**स्वस्वामिभावसम्बन्धो मकारेणाथ कथ्यते ॥ १६ ॥**

अन्वयः—हे महामते! सुरसुरानन्द!(र्-अ-आ-म् इत्यत्र रेफान्तर चतुर्थी विभक्तिरासीत् तया "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्याया-जालः" इत्यनेन-लुप्तया चतुर्थ्या (जीवात्मपरमात्मनोः ) शेष-शेषित्वसम्बन्ध उच्यते। अनन्यार्हत्ववाचिना मध्यस्थेन अकारेणापि भार्य्याभर्तृत्वसम्बन्धोऽपि ज्ञेयः । एकेनाऽपिना दीर्घाऽऽकारः समुच्चीयते। द्वितीयेनाऽपिना अनुक्तवात्सल्यादिसम्बन्धःसमुच्चीयते। अतो दीर्घाऽऽकारेणाऽनुक्तवात्सल्यादिसम्बन्धः कथ्यते। अथेत्यन-तरं मकारेण स्वस्वामिभावसम्बन्धः कथ्यते ॥ १५ ॥ १६ ॥

" सुपां सुलुग् " इति रशब्दोत्तरलुप्तया चतुर्थ्या जीवेश्वरयोः शेषशेषित्वसंबन्ध उच्यते निरूप्यते। अयं भावः भगवते हेयप्रत्यनीकानन्तक-ल्याणगुणगणमहार्णवाय रवाच्याय शेषिणे श्रीरामायैव निखिलजीववर्गाःशेष-भूत इति। अत्रन्योत्तरार्द्धस्य उत्तरश्लोकपूर्वार्द्धेन सार्धमन्वय इत्याह-भार्येति।

महती सत्वादिविविदिषया पूज्या मतिर्बुद्धिर्यस्य स तथोक्तः । हे महामते ! सुरसुरानन्द ! अनन्यार्हत्ववाचिना मध्यस्थेनाऽकारेण तु आशिशब्दस्तुशब्दार्थे भार्याभर्तृत्वसंबन्धस्त्वया ज्ञेयो बोध्य इत्यर्थः । अथ अनन्तरम् मन्यत इतिम् "मन ज्ञाने" इति धातोर्ड् विप्रत्यये टिलोपे "वेरपृक्तस्य" इति विलोप इति ज्ञातृवाचिना मकारेण स्वं जीवः स्वामीश्वरः स्वं च स्वामी च तौ तयो भावः स्वस्वामित्त्वसंबन्धः कथ्यते । ॥ १५ ॥ १६ ॥

भाषा—हे सुरसुरानन्द ! रां ( र्-अ-आ-म् ) इस बीज में जो रेफ है, उससे पर चतुर्थी का "सुपा सुलुक्" इस पाणिनीय सूत्र से लोप हो गया है, उस लुप्त चतुर्थी विभक्ति से महर्षिगण, जीवात्मा परमात्मा में शेष-शेषित्व सम्बन्ध कहते है, अनन्यार्हत्व वाचक मध्यस्थ अकार अक्षर से भार्य्याभर्त्तृत्व सम्बन्ध कहते है, दीर्घाकार से, बाकी बचे हुये वात्सल्यादि सभी सम्बन्धों को कहते हैं, और मकार से स्वस्वामिभाव सम्बन्ध कहते है, ऐसा जानों ॥ १५ ॥ १६ ॥

**आधाराधेयभावोऽपि ज्ञेयो रामपदेन तु ।**
**सेव्यसेवकभावस्तु चतुर्थ्या विनिगद्यते ॥ १७ ॥**

अन्वयः-( महर्षिभिः ) रामपदेन तु आधाराधेयभावः ( सम्बन्धः ) विनिगद्यते ( तत्त्वया ) अपि ज्ञेयः ( ज्ञातव्यः ) ( व्यक्तया ) चतुर्थ्या सेव्यसेवकभावो निगद्यते ॥ १७ ॥

निखिलरमणप्रकाशनाधारभूते रामे ।

"यत्प्रयन्त्यभिसंविशन्ति" "यस्मिंश्च प्रलयं यान्ति पुनरच युगक्षये"

इति श्रुतिस्मृतिभ्यां जीवनिकायस्य सिद्ध आधाराधेयभाव इत्याह आधारेति । रामपदेन जीवेश्वरयोराधाराधेयभावः संबन्धो ज्ञेयः । व्यक्तया चतुर्थ्या आयेत्यनेन सेव्यसेवकभावः सम्बन्धो निगद्यते उच्यते । जीववृन्दानामवश्यसेव्यः श्रीराम इति व्यक्तं चतुर्थी वदतीत्याशयः ॥१७॥

षडक्षर मन्त्रराजके बीजकी व्याख्या कर, उसी बीज से सम्बोधित जो स्वरूप; उसका सम्बन्ध दिखलाते है—

भाषा—महर्षिगण, रामपद से, चित् अचित् ( चेतन जड़ ) और

पर-ब्रह्म में आधाराधेयत्व सम्बन्ध कहते है, और व्यक्त ( प्रकट रूप से विद्यमान) जो चतुर्थी (आय), उससे सेव्यसेवकत्व सम्बन्ध कहते है ॥१७॥

**नमः पदेनाऽखण्डेन त्वात्मात्मीयत्वमुच्यते ।**
**षष्ठयन्तेन मकारेण भोग्यभोक्तृत्त्वमप्युत ॥१८॥**

अन्वयम-( महर्षिगणैः ) अखण्डेन नमःपदेन आत्मात्मीयत्वमुच्यते । षष्ठयन्तेन मकारेण भोग्यभोक्तृत्वमुच्यते अप्युत ( त्वयाऽपि आत्मात्मीयत्वं भोग्यभोक्तृत्वं वितर्क्यताम् विशेषेण श्रुतिस्मृतिभ्यां प्रमितिविषयीक्रियताम् ) ॥१८॥

न खण्डश्छेदो यस्मिन सोऽखण्डस्तेन अखण्डेन समुदितेन नमःपदेन जीवेश्वरयोरात्मात्मीयत्वं सम्बन्ध उच्यते । नमःशब्दस्य सखण्डताम-भिप्रेत्याह-तूच्चेति । षष्ठयन्तेन मकारेण भोग्यभोक्तृत्वं सम्बन्ध उच्यते ॥१८।

षडक्षर मन्त्रराज ( तारकब्रह्म ) के आदि चार अक्षर की व्याख्या दिखला अन्तिम पञ्चम और षष्ठ पद की व्याख्या दिखलाते है—

भाषा—महर्षिगण, अखण्ड, नमः, पद से, जड़ चेतन-मय-जगत और परब्रह्म मे आत्मात्मीयत्वसम्बन्ध और षष्ठ्यन्त 'म.' पदसे भोग्य-भोक्तृत्व सम्बन्ध कहते है।हे सुरसुरानन्द! आत्मात्मीयत्व, भोग्यभोक्तृत्वादि सम्बन्धको तू भी श्रुतिस्मृतिद्वारा अपने अंतःकरण में विचारो ॥ १८ ॥

**ज्ञानानन्दस्वरूपोऽवगतिसुखगुणो येन वेद्योऽणुमानो**
**देहादेरप्यपूर्वो विविदितविविधस्तत्प्रियस्तत्सहायः ।**
**नित्यो जीवस्तृतीयेन * तु खलु पदतः प्रोच्यते स्वप्रकाशो**
**जिज्ञासूनां सदेत्थं शुभनतिसुमते!शास्त्रवित्सज्जनानाम् १९**

---

* विदितमेवैतत्तत्रभवतां श्रीवैष्णवानां यत्खलु तारकब्रह्माख्यषडक्षर-मन्त्रराजस्य "सर्वेषु राममन्त्रेषु मन्त्रराजः षडक्षर. । एकधाऽथ द्विधा त्रेधा चतुर्धा पञ्चधा तथा॥ १ ॥ षट्सप्तधाष्टधा चैव बहुधाऽयं व्यवस्थित. । षडक्षरस्य माहात्म्यं शिवो जानाति तत्वत." ॥२॥ इति रामरहस्योपनिषद् छुत्यनुमोदिताष्टा

अन्वयश्च हे शुभमतिसुमते ! महर्षिभिः तृतीयेन मेन पदतः (पदेन) शास्त्रवित्सज्जनानां जिज्ञासूनां सदावेद्यः, ज्ञानानन्दस्वरूपः, अवगतिसुखगुणः, अणुमानः ( अणुपरिमाणः ), देहादेरप्यपूर्वः, विविदितविविधः, तत्प्रियः, तत्सहायः, नित्यः, स्वप्रकाशः, जीवः प्रोच्यते । तु ( स तु जीवः ) इत्थम् ( उक्तप्रकारेण त्वया ज्ञातव्यः) अष्टावयवपक्षेतु—तृतीयेन—दीर्घाकारेण नित्योजीव प्रोच्यते । तु ( पुनः ) मेन चतुर्थऽवयवमकारेण ) पदतः (पदेन) नीत्यजीवादवशिष्टोमुक्तोबद्धश्च जीवः प्रोच्यते । सच नित्योमुक्तो बद्धेजीवः सदा ( सर्वस्मिन्काले ) इत्थंज्ञानान्दादि विशेषणविशिष्टत्वप्रकारेण जिज्ञासूनां वेद्योऽस्तीतिवेदितव्यमितिभावः। अन्यत्सर्वं पूर्ववज्ज्ञातव्यम् ॥ १९ ॥

ननु तृतीयपदमकारेण वाच्य. क इत्याह ज्ञानेति। पदेनेति पदत. तृतीयान्तात्तसि । तृतीयेन पदेन मेन मकारेण जिज्ञासूनां ज्ञातुमिच्छूनां सदा वेद्यो जीवः प्रोच्यते । कीदृशो जीवः ज्ञानानन्दस्वरूपः। पुनः अवगतिर्ज्ञानं सुखं च गुणो यस्य स ज्ञानानन्दगुणक इत्यर्थः। पुनः स कीदृक् अणुः मानं परिमाणं यस्य सोऽणुमानः ।

तदुक्तं श्वेताश्वतरोपनिषदि पंचमाध्याये—

"वालाग्रशतभागस्य शतधा कल्पितस्य च" इति ।

पुनः देहादेरपूर्वो विलक्षणः । पुनः विविदितश्चासौ विविधश्च बद्धादिभेदादनेकधा । पुनः तस्य परमात्मनः प्रियस्तत्प्रियः । स परमात्मा सहायो

---

वयवत्वं तदेवाभिमतं भगवत्पूज्यपादानामाचार्य्यचरणानां श्रीरामानन्दाचार्य्याणाम्। "रेफारूढत्रिमूर्त्ति" इतिन्दुक्तिभिरभिव्यज्यमानत्वेऽपि श्रुतीनां मूलभूतत्वेन परमरहस्यभूतं श्रीभगवद्भागवताचार्य्यकैङ्कर्य्यविधुरैरज्ञायमान श्रीभगवद्भागवताचार्य्यदास्यमात्रावबोध्यं मनोरष्टावयवत्वम् अपितुभ्याम् समुच्चितं श्रीमद्ग्रन्थकारैरितिसुधिभिर्विभाव्यमस्ति । र्-अ-आ-म् राम-आय-न-मः इत्यष्टविधविभक्तस्य "तत्राद्येन पदेन रेण" "तच्छेषी पदतोऽप्यतो" "नित्यो जीवस्तृतीयेन तु" इत्यादिभिर्यथाश्रुताभिप्रायेण षड्विधत्वं निगदितम् । तत्रत्यापितुभ्यामष्टविधत्वं समुच्चितमितितात्पर्यभेदेन न विरोधः शङ्कनीयः

धित्सया ( वाक्यार्थं विधातुं कर्त्तुमिच्छया ) इत्थमेव ( पूर्वोक्तप्रकारेणैव वाक्यार्थः ) बोध्यः ( ज्ञातव्यः ) ॥ २० ॥

एवं रादिपदार्थं क्रमेण प्रतिपाद्य तद्वाक्यार्थन्निरूपयति—मवाच्य इति । तद्विधित्सया मन्त्रपदार्थज्ञानपूर्वकवाक्यार्थं विधातुमिच्छया जानन्तीति ज्ञास्तैर्ज्ञैर्मन्त्रार्थविद्भिः इत्थमेव इति वाक्यार्थो बोध्यो ज्ञातव्य इत्यर्थः । इति किम् ? मेन वाच्यो मवाच्योऽहं जीव. रेण वाच्यो रवाच्यः तस्मै रवाच्याय भगवते परमात्मने शेषिणे श्रीरामायैव सर्वदाऽविच्छिन्ने सर्वस्मिन्काले शेषभूतोऽस्मि भवामीति । एवं राम इत्येतन्निष्ठपदत्रयस्य पदार्थबोधनपूर्वकवाक्यार्थो विशदीकृतो मुमुक्षुभिर्मन्त्रार्थं जिज्ञासुभिरवश्यमविरतं बोध्य इत्याशयः ॥ २० ॥

इसमें सम्पूर्ण बीज का एकत्र शाब्द-बोध कहा गया है—

भा०—हे सुरसुरनन्द मन्त्रराज का वाक्यार्थ स्वशिष्यों के जानने की इच्छा से सर्वज्ञ महर्षियों ने, बीज के वाक्यार्थ को इस प्रकार कहा है:—'म' वाच्य मै, 'र' वाच्य परब्रह्म श्रीरामजी के शेषभूत—यथेष्ट विनियोग के ( चन्दन, कुसुम, ताम्बूलवत् नियुक्ति के ) योग्य हूँ, इसी प्रकार तुम भी जानो ॥ २० ॥

## रामायेति चतुर्थेन श्रिया देव्यास्तु सर्वदा ।
## चेतनाऽचेतनानाञ्च रमणाश्रयतेर्य्यते ॥ २१ ॥

अन्वयम् (हे सुरसुरानन्द ! महर्षिभिः) रामाय इति चतुर्थेन ( पदेन ) श्रिया देव्याः ( सीतादेव्याः ) चेतनाचेतनानाञ्च सर्वदा ( सर्वस्मिन्काले ) रमणाश्रयता ( सीतादेव्या जडचेतनात्मकस्याऽखिलविश्वस्य विलक्षणभोग्यादिप्रदानेन सदा रमयितृत्वम् ) ईर्य्यते (प्रतिपाद्यते) अत्राऽऽगमान्वयपक्षे च—चतुर्थी विभक्ति विद्यतेऽस्मिन् न चतुर्थं तेन चतुर्थेन रामाय — इति पञ्चमषष्ठावयवेन । अन्यत्पूर्ववद्बोध्यम् ॥ २१ ॥

अथ चतुर्थपदार्थमभिदधाति—" रामो रमयतां वरः " रमयामास धर्मात्मा" इत्याद्युक्तरीत्या श्रियं चेतनाचेतनात्मकं विश्वं चाविलक्षणभोग्या–

दिवस्तुप्रदानेन जन्मादिदातृत्वेन चाविरतं रमयतीति रामः। बाहुलकात्क-
र्त्तर्यपि घञ इत्यर्थकेन रामायेति चतुर्थेन पदेन व्यक्तचतुर्थ्यन्तेन श्रिया
देव्या लक्ष्म्या सीतायाश्चेतनाचेतनानां स्थावरजङ्गमात्मकप्रपञ्चानां
च रमणाश्रयता रमयितृत्वं सर्वदा सर्वस्मिन्काले निरन्तरमीर्य्यते प्रतिपाद्य-
त इत्यर्थः। ब्रह्मादिगणैः श्रीयते सेव्यते इति श्रीः "श्रिञ् सेवायाम्" इत्यतो
बाहुलकात्कर्मणि क्विप् "क्विब्वचि" इत्यादिना श्रिञो दीर्घश्च। यद्वा शृणाति
आश्रितदोषान् हिनस्तीति श्रीः "शॄ हिंसायाम्" इति धातोरौणादिके
डीप्रत्यये टिलोपे। यद्वा सर्वविज्ञापनं भगवन्तं श्रावयति स्वयं वात्सल्यजल-
धित्वात् शृणोतीति श्रीः अन्तर्भावितण्यर्थात्केवलाच्च शृणोतेरौणादिके
डुविप्रत्यये टिलोपे, स्वयं श्रयति निजपतिं श्रीरामं जनैश्च श्रावयतीति श्रीः।
किञ्चात्र—

"श्रयन्तीं श्रीयमाणां च शृणतीं शृण्वतीमपि।
शृणाति निखिलान्दोषान् श्रीणाति च गुणैर्जगत्।
श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम्"

इत्यादिनिरुक्तिरप्यनुसंधेया। किञ्च मातृत्वप्रयुक्तवात्सल्यातिशयाऽ
हितं रावणादिकमपि हितार्थान् श्रावयति बोधयतीति श्रीः।

उक्तं श्रीमद्रामायणे—

मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता।
बधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः।
विदितः स हि धर्मात्मा शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि।
प्रसादयस्व त्वं चैनं शरणागतवत्सलम्।
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि' इति।

न चात्र "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया" इतिकोशाच्छ्रीश
ब्देन लक्ष्म्या एव ग्रहणं न सीताया इति शङ्क्यम् राममुद्दिश्य "सीता लक्ष्मी-
र्भवान् विष्णु" इति वाल्मीकीयवचनेन सीतालक्ष्म्योरभेदाभिधानादित्यलम् २१

इसमें 'रामाय' पद का अर्थ दिखाया गया है—

भा०—हे सुरसुरानन्द! महर्षियों ने, 'रामाय' इस चतुर्थ्यन्त पद से, श्रीसीता जी और जड़ चेतनात्मक समस्त विश्व को विलक्षण भोग्यादि देने के कारण श्रीरामजी में रमणाश्रयत्व प्रतिपादन किया है॥ २१॥

ससर्वविधबन्धुत्वं सर्वप्राप्यत्वमेव च।
सर्वप्रापकता तेन तथाचोभयलिङ्गता ॥ २२ ॥

अन्वयमः-( हेसुरसुरानन्द ! अन्तर्य्यामित्वेन जड़चेतनात्मकासंख्यब्रह्माण्डेषु यः स्वयं रमते सर्वान्रमयति स राम इत्यर्थकेन) तेन ( रामायेति पदेन ) एव ( रामस्यैव ) ससर्वविधबन्धुत्वं सर्वप्राप्यत्वं सर्वप्रापकताच ( महर्षिभिरीर्य्यते ) तथाच ( श्रीरामस्य ) उभयलिङ्गता ( सर्वान्तर्य्यामित्वेन पृथिव्यादिप्राकृतहेयवस्तुवस्थितस्यापि परब्रह्मणः श्रीरामस्याखिलहेयगुणात्मकत्वदोषरहितत्वं दिव्यकल्याणगुणाकरत्वञ्चेत्युभयलिङ्गत्वमीर्य्यते इति वेदितव्यम् ) ॥ २२ ॥

किञ्च चराचरेषु रमतेऽन्तर्यामितयेति राम इत्यर्थकेन तेनैव रामायेति पदेन तस्य सर्वप्राप्यत्वं चेर्य्यत इति पूर्वेणैव सम्बन्धः। अयं भावः जातिगुणशौचादिकमनाश्रित्यैव सर्वेषां निषादगृध्रशवरीवानरादिप्रभृतीनां कण्ठमणिरिव प्राप्यः सर्वप्राप्यस्तस्य भावः। अनेन परमसौलभ्यं तस्याभिहितमिति। कीदृशं सर्वप्राप्यत्वं सर्वविधबन्धुत्वेन सह वर्तमानं ससर्वविधबन्धुत्वम् सर्वा विधानं विधाः प्रकारा यस्य स सर्वविधः स चासौ बन्धुश्च श्रीरामस्यैव सर्वविधबन्धुत्वं जीवनिकायैराश्रयणीयम्।

तथाचोक्तं श्रीमद्रामायणे—

"अहं तावन्महाराजे पितृत्वन्नोपलक्षये।
भ्राता भर्त्ता च बन्धुश्च पिता च मम राघवः" इति।

आचार्य्या अपि—

"माता पिता युवतयस्तनया विभूतिः।
सर्वं यदेव नियमेन मदन्वयानाम्" इत्याहुः।

तथा तस्य सर्वप्रापकता च तेनैव पदेनेर्य्यते सर्वान्धर्मार्थकाममोक्षानाभिताम् प्रापयतीति सर्वप्रापकस्तस्य भावः। उभयलिङ्गतापि तस्य तथैवेर्य्यते ॥ २२ ॥

भा०—जो सर्व प्रकार का बन्धु, सबों की प्राप्ति के योग्य, सब कुछ-अर्थ धर्म काम मोक्ष—की प्राप्ति कराने वाला और उभय चिन्ह युक्त है।

( उभय चिन्ह का तात्पर्य अखिल हेय गुण रहितत्व और अखिल दिव्य गुण सहितत्व है ) ॥ २२ ॥

पदेनैवोच्यते सत्यानन्दचिद्रूपता तथा ।
यावद्विभूतिनेतृत्वं रामपादाब्जसन्नते ! ॥ २३ ॥

अन्वयप्र—हे रामपादाब्जसन्नते !"रमन्तेयोगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपेदनासौ परं ब्रह्माभिधीयते" ( इत्यर्थकेन रामायेति चतुर्थ्यन्तेन—पदेनैव ( परब्रह्मश्रीरामस्य ) सत्यानन्द—चिद्रपता उच्यते । तथा यावद्विभूतिनेतृत्वम् उच्यते ॥ २३ ॥

पादावब्जमिव पादाब्जं रामस्य पादाब्जे सम्यक् नतिर्य्यस्य स तत्संबुद्धौ हे रामपादाब्जसन्नते ! सुरसुरानन्द ! "रमन्ते योगिनो यस्मिन्सत्यानन्दे चिदात्मनि" इत्युक्तरीत्या तेनैव रामायेति पदेन तथा तस्य सत्यानन्दचिद्रूपता चोच्यते । यावद्विभूतिनेतृत्वं च नेता नायकः ॥२३॥

भा० — हेरामजीके चरण कमलमें सम्यक्नतिवाले सुरसुरानन्द ! ( जिस अनन्त सच्चिदानन्द परमात्मा में योगी जन रमण करते है, उसी परब्रह्म परमात्मा को राम इस पद से कहते है इत्यर्थक ) 'रामाय' इस चतुर्थ्यन्त पदसे परब्रम्ह श्रीरामजीको सच्चिदानन्दरूप, एवं लीला विभूतिके सहित समस्त त्रिपाद विभूतिके नायक भी कहते है ॥२३॥

रागादिकारणे बन्धौ तेनैव विनिवर्त्त्यते ।
बन्धुत्वप्रतिपत्तिश्च भासमानाऽविचारतः ॥ २४ ॥

अन्वयप्र—तेनैव ( सर्वविधबन्धुत्वप्रतिपादकेन रामायेति पदेनैव ) अविचारतः अविवेकात् रागादिकारणे बन्धौ ( भ्रातृपुत्रकलत्रमित्रादौ भासमाना ( प्रतीयमाना ) बन्धुत्वप्रतिपत्तिश्च बन्धुत्वनिश्चयश्च विनिवर्त्यते ॥ २४ ॥

अविचारतोऽविचारेण भ्रमेण शुक्तौ रजतमिव भासमाना बन्धौ भ्रातृपुत्रकलत्रमित्रादौ बन्धुत्वस्य प्रतिपत्तिर्निश्चयः तेनैव रामायेति पदेन निवर्त्यते

दूरी क्रियते। कीदृशे बन्धौ ? रागादिकारणे सर्वविधबन्धुत्वप्रतिपादनेनैव बन्धौ बन्धुत्वप्रतिपत्तिनिवृत्तिः फलितेति तत्फलितार्थकथनमेवेदमिति बोध्यम्॥२४॥

भा०—सर्वविधबन्धुत्व प्रतिपादक 'रामाय' ( इस चतुर्थ्यन्त ) पद से ही रागादिके कारण भ्राता पुत्र कलत्र पित्रादि में विना विचारे प्रतीयमान बन्धुत्व ( मदीयत्व ) के निश्चय की निवृत्ति होती है ॥ २४ ॥

**तच्चतुर्थ्या स्वानुरूपकैङ्कर्य्यप्रार्थनोच्यते ।**
**विषयान्तरसेवाऽपि प्राप्ता सा विनिवर्त्त्यते ॥२५॥**

अन्वयप्र—तच्चतुर्थ्या ( रामपदोत्तरतादर्थ्यया चतुर्थ्येक वचनङेविभक्त्या ) स्वानुरूपकैङ्कर्य्यप्रार्थना (स्वाधिकारानुगुणां सर्वविधबन्धु परब्रह्मपरमात्मनः श्रीरामस्य यत्कैङ्कर्य्यं तस्य प्रकृष्टयाच्ञा ) उच्यते ( महर्षिभिरितिशेषः ) रागादिवशात् ) प्राप्ता ( या ) विषयान्तरसेवा ( श्रीरामभिन्नदेवताऽऽराधना ) साऽपि विनिवर्त्त्यते ॥२५ ॥

तच्चतुर्थ्या रामपदोत्तरचतुर्थ्या आयेत्यनेन स्वानुरूपं जीवयोग्य स्वामिनो भगवतः कैङ्कर्य्यं तस्य प्रार्थना प्रकृष्टत्वेन याचना उच्यते प्रतिपाद्यते भगवदपेक्षयाऽन्यो विषयो विषयान्तरं ब्रह्मादिस्तस्य रागतः प्राप्ता या सेवा सापि निवर्त्यते सर्वं वाक्यं सावधारणमितिन्यायेन भगवतस्तवैव कैङ्कर्य्यं ममानुरूपं प्रतिभवतु न ब्रह्मादिकैङ्कर्य्यमिति तत्सिद्धिरिति बोध्यम् ॥२५॥

भा०—महर्षिगण, इस ( तादर्थ्य ) चतुर्थी से अर्थात रामपदोत्तरङे विभक्ति से परब्रम्ह परमात्मा श्री रामजी के ही अनुरूप कैंकर्य की प्रार्थना ( याचना ), और ( रागादिवशात ) प्राप्त अन्यों की सेवा की निवृत्ति भी बतलाते है ॥ २५ ॥

**पदेन नेनात्र तु पञ्चमेन प्रकथ्यतेऽथो तदनन्यशेषता ।**
**हेयंतदन्यार्थ्यमपिस्वतन्त्रतानिवर्त्यतेऽतःसततंस्वकीया २६**

अन्वयप्रः—अथो—(चतुर्थ्यन्तपदव्याख्यानानन्तरम्) अत्र षडक्षरमन्त्रौ पञ्चमेनैव तुरेवार्थे नेन ( नकारेण ) पदेन तदनन्यशेषता प्रकथ्यते। तदन्यार्थ्यमपि हेयं (भगवदितरवस्तुनिरूपितजीवनिष्ठमयो

जनत्वं त्याज्यं कथ्यते) अतः स्वकीया स्वतन्त्रता सततं (निरन्तरं यथा स्यात्तथा) निवर्त्यते। अष्टावयवत्वमुररीकृते "पदे न ने नात्र न पञ्चमे न" इत्यत्र पञ्चमशब्दोत्तर तृतीयाविभक्तिरुतसप्तमीविभक्तिरितिसंशयः?तत्रोच्यते—प्रकृतश्रीराममन्त्रराजस्य "एकधाथ द्विधा त्रेधा" इत्यादिरामरहस्योपनिषदि अष्टविधत्वं दृश्यते। षडक्षरत्वन्तु शास्त्रतः प्रत्यक्षतश्च प्रसिद्धमेव "रेफारूढत्रिमूर्ति" इत्यादिग्रन्थस्वारस्यात्'एकधा'इत्याद्युपनिषदुद्घोषादुक्ततृतीयचतुर्थपदव्याख्यानात् वक्ष्यमाणषष्ठपदव्याख्यानाच्च सप्तमी विभक्तिरित्येव निर्णीयते। तथाचात्र प्रकृतमनौ कोषशब्दशास्त्रसिद्धनमइत्यव्ययखण्डे पञ्चमाक्षरे नकारे नार्थप्रकाशकत्वम् इतिप्रथमनकारेण सूचयन द्वितीयतृतीयनकाराभ्यां द्रढितं स्वार्थं प्रकटयन् ग्रंथकारः न पञ्चमे अर्थात् सप्तमे नइत्यव्यये पदे न तदनन्यशेषता न (तदनन्यशेषतैव) प्रकथ्यते महर्षिभिरित्युक्तवान्। द्वौ नञौ स्वार्थं द्रढयतः इतिशब्दशास्त्रव्यवस्थया वेदितव्यम्॥ २६ ॥

अथ सखण्डपक्षमवलम्ब्य पञ्चमपदार्थमाह—पदेनेति। अथो चतुर्थपदव्याख्यानानन्तरं पञ्चमेन पदेन नेन नकारेण तदनन्यशेषता कथ्यते। न अन्यस्य शेषः अनन्यशेषस्तस्य भगवतोऽनन्यशेषस्तदनन्यशेषस्तस्य भावः। इयं त्याज्यं तदन्यार्थ्यं तदन्यप्रयोजनत्वम् "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु" इत्यमरः। स्वकीया स्वतन्त्रता च सततं निवर्त्यते॥२६॥

अब पञ्चम 'न' अक्षर का अर्थ दिखलाते हैं—

भा०—महर्षियोंने यहां पञ्चम पद 'न' से तदनन्यशेषता—जीवको, परब्रह्म परमात्मा श्री रामचन्द्र जी के एकमात्र विनियोग के योग्य—कहते हुए उन से अन्यों के प्रयोजन को त्याज्य बतलाया है। अतः अपनी स्वतन्त्रता का सतत निवारण किया है॥ २६ ॥

**पदेन षष्ठेन म इत्यनेन स्वस्वाम्यनन्यार्हकशेषतापि।**
**समुच्यते चेतनजीवाचिना तत्किङ्करत्वैकप्रयोजनत्वम्॥२७**

अन्वयप्र–चेतनजीववाचिना षष्ठेन म इत्यनेन पदेन तत् किङ्करत्वैकप्रयोजनत्वम् स्वस्वाम्यनन्यार्हकशेषताऽपि समुच्यते महर्षिभि रितिशेषः। अष्टावयवस्त्वेतु षष्ठी विभक्तिर्विद्यते यस्मिन्निति षष्ठं तेन षष्ठेन 'म'इत्येनेन अष्टमेन पदेन ( वस्तुना ) स्वस्वाम्यनन्यार्हकशेषता समुच्यते अन्यत्पूर्ववद्बोध्यम् ॥ २७॥

चेतनश्चासौ जीवश्च चेतनजीवस्तं वक्ति तच्छीलस्तेन चेतनजीववाचिना 'म 'इत्यनेन पदेन स्वस्वाम्यनन्यार्हशेषता समुच्यते प्रतिपाद्यते। स्वस्य जीवस्य स्वाम्यनन्यार्हशेषता भगवदनन्यार्हशेषत्वमित्यर्थः। तस्य भगवतः किंकरस्तत्किकरस्तस्य भावस्तत्किङ्करत्वमेव एकं मुख्यं प्रयोजनं यस्य जीवस्य स तस्य भावस्तत्त्वम्। अपिशब्दाज्जीवस्य भगवत्पारतन्त्र्यस्वरूपं च प्रतिपाद्यते ॥ २७ ॥

पञ्चमाक्षर को निरुपण कर षष्ठाक्षर का निरूपण करत हैं–

भा०–महर्षिगण चेतन जीववाचक छटवां ' मः ' पद से जीव को श्रीरामजीका कैङ्कर्य्य ही मुख्य प्रयोजन, और स्व स्वामि निरूपित अनन्यार्हशेषता कहते है अर्थात् यह जीव दूसरे के नही केवल श्री रघुनाथजी के ही विनियोग के योग्य है ॥ २७ ॥

**उपायार्थपरेणासावखण्डनमसोच्यते ।**
**उपायो हि मवाच्यस्य रवाच्यो राम एव सः ॥२८॥**

अन्वयप्र–( हेसुरसुरानन्द! ) उपायार्थपरेण ( उपायार्थवाचकेन ) अखण्डनमसा ( खण्डरहितनमःशब्देन ) रवाच्यो ( योऽसौरामः सएव मवाचस्य ( जीवस्य ) हीति निश्चयेन उपायः ( लोकपरलोकसाधनम् ) उच्यते ( प्रतिपाद्यते महर्षिभिरिति शेषः ) ॥ २८ ॥

अखण्डपक्षे आह–उपायार्थेति। अखण्डनमःशब्दस्योपायवाचकत्वात् उपायश्चासावर्थश्च उपायार्थः तस्य पर उपायार्थपरस्तेन उपायार्थपरेणउपायार्थवाचकेनाऽखण्डनमसाऽखण्डनमःशब्देन मवाच्यस्य जीवस्य रवाच्यो सौराम एवोपाय उच्यतेप्रतिपाद्यते।हीतिनिश्चितोऽयमर्थः।किञ्च रामित्यनेनाऽनन्या

हशेषत्वं रामायेत्यनेनाऽनन्यभोग्यत्वं नमःशब्देनाऽनन्योपायत्वमित्याशयः। तथाच मवाच्यो जोवो रापायैवं स्वस्मै नान्यस्मै भगवद्भोग्यभूत शेषभूतो दास भूतोऽहमिति वाक्यार्थः फलितः। नन्वत्र दासशब्दस्य शूद्रवाचकत्वेन दासत्वाभिधानं निन्द्यम् "दासनाम तु शूद्राणां न द्विजानां कथंचन" इति निषेधाच्चेति चेन्न "दासः सेवकशूद्रयोः" इति कोशे सेवकवाचिनोऽपि दासशब्दस्य दर्शनेनात्र प्रकरणात्तस्यैव ग्रहणात् नानार्थे सैन्धवमानयेत्यादौ लवणाश्वादीनामुपस्थित्या प्रकरणादिनाऽन्यतरस्यैवेतिवत्। किंच स निषेधो भगवत्संबन्धिरामकृष्णनारायणनृसिंहवामनादिदासान्तातिरिक्तस्थले। यथा शर्मान्तं ब्राह्मणस्य नाम वर्मान्तं क्षत्रियस्य पालितान्तं वैश्यस्य दासान्तं शूद्रस्य। तत्र ब्राह्मणविषये देवदत्तदासविष्णुदत्तदासेति निन्द्यं न तु विष्णुदासनारायणदासादयो दासान्ता निन्द्याः।

तथा च पाद्मे—

"ब्रह्माणं रुद्रमिन्द्रं च यमं वरुणमेव च।
नारायणस्य दासास्ते ये चान्येऽण्डस्य मध्यगाः।
यः परः पुरुषो विष्णुर्नारायण उदाहृतः।
दासभूतमिदं तस्य ब्रह्मादि सकलं जगत्।
सृष्टं पुनस्तथा सर्गे तस्मान्नारायणादुमे!।
तस्य दास्यं चतुर्थ्यन्तं मन्त्रे प्रोक्तं तु पार्वति!।
न वेदयज्ञाध्ययनैर्न व्रतैश्चोपवासकैः।
प्राप्यते वैष्णवो लोको नचादास्येन कुत्रचित्।
तस्माद्दास्यं हरेर्भक्त्या भजेतानन्यमानसः।
प्राप्नोति परमां सिद्धिं कर्मबन्धविमोचनीम्"

श्रीमद्रामायणे हनुमद्वाक्यम्—

"दासोऽहं कोशलेन्द्रस्य रामस्याऽक्लिष्टकर्मणः।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः" इति।

श्रुतिश्च—

"ब्रह्मदासा ब्रह्मदासा ब्रह्माहमेतिकितवाः" इति।

आनन्दगणना तु श्रुतौ न मुक्तस्यानन्दतारतम्यविवक्षया अपितु ब्रह्मणो निरतिशयानन्दत्वविवक्षया।

आनन्दगणना तु यथा तैत्तिरीयोपनिषदि--

"भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्यु र्धावति पञ्चम इति । सैषाऽऽनन्दस्य मीमांसा भवति। युवा स्यात्साधु युवा-ध्यापकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्य गन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणा मानन्दाः। स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः। श्रोत्रि-यस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एकः आजानजानां देवानामानन्दः।श्रोत्रियस्य चाकामहतस्य। ते ये शतमाजानजानां देवानामानन्दाः ।स एकः कर्म्मदेवानां देवानामानन्दः । ये कर्मणा देवानपि यन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः।स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चाऽसावादित्ये । स एकः । स य एववित् । अस्माल्लोकात्प्रेत्य । एतमन्न-मयमात्मानमुपसंक्रामति" इत्यादि।

किञ्च अन्यराजानस्ते क्षय्यलोका भवन्तीत्य विदुषां क्षय्यलोकत्वकार णमनन्यराजत्वमुच्यते । तच्च निष्कृष्टकर्माधीनत्वमेव तन्निवृत्तिश्च विदुषः स स्वराड् भवतीत्यत्र विवक्षिता। अतोऽपि कर्मवश्यत्वमेवात्र निषिध्यते . न स्वाभाविकभगवद्दासत्वम । अतएव "चानन्याधिपति" इति सूत्रे चानन्या-धिपतित्वमेवोक्तं न त्वनधिपतिरिति । तस्मात्स्वाभाविकभगवद्दासत्वमेव पुरुषार्थः।

पाद्मेऽप्युत्तरखण्डे--

"अविच्छिन्ना सदा तेषां विष्णुना संगतिः शुभा ।
तत्समानसुखं नित्यं प्राप्नुवन्ति मनीषिणः ॥
यत्र यत्र हरेर्लोकानाविश्य शुभचेतसः ।
नाप्नुवन्ति पुनः स्वर्गं स्वर्गस्था इव जन्तव. ॥
यथा सौमित्रिभरतौ यथा सकर्षणादयः ।
यथा तेनैव जायन्ते सत्यलोकाद्यपेच्छया ॥

पुनस्तेनैव यास्यन्ति तत्पदं शाश्वतं परम्।
न कर्मबन्धनं जन्म वैष्णवानां च विद्यते।
विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः।
न वै दास्यं परेशस्य बन्धनं परिकीर्तितम्।
सर्वबन्धविनिर्मुक्ता हरिदासा निरामयाः।
आब्रह्मभुवनाल्लोकाः पुनरावृत्तिलक्षणाः।
कर्मबन्धमया दुःखमिश्रसौख्यभयप्रदाः।
बह्वायासकृता दुःखजनिनाशैकतेहव" इत्यादि।

ब्रह्मवैवर्त्तेऽपि —

"हरेरुपासना चात्र सदैव सुखरूपिणी।
न च साधनरूपा सा सिद्धरूपाऽत्र साध्यते" इति।

एवं चोपासनाविशेषजनितसालोक्यादौ तत्तल्लोकादिसुखानुभवपूर्वकं यत्किञ्चिद्भगवत्साक्षात्कारसुखमात्रं न तु ज्येष्ठकैङ्कर्यादिसुखमिति।

"दीयमानन्न गृह्णन्ति विना मत्सेवनं जनाः" इत्युक्तमिति ज्ञेयम्। तस्माद्भगवदनुभवजनितप्रीतिकारितसर्वदेशसर्वकालसर्वावस्थोचितसर्वप्रकारकैङ्कर्यमेव परमपुरुषार्थ इति सिद्धम्। तादृशपरमपुरुषार्थपरायणा अत्राम्बरीषखट्वाङ्गविभीषणहनुमदादयो व्रजलोकाश्च प्रसिद्धाः प्रपन्नत्वेनानुसन्धेयाः। किञ्चैकान्तित्वसबन्धवतो गुरुशापनिमित्तिकशूद्रभावभाजोऽप्यग्निदाहनैमित्तिककरणवतोऽपि ब्रह्मप्राप्तिरित्यत्र वैवस्वतमनुपुत्रपृषध्रवृत्तान्तो नवमस्कन्धस्थो द्रष्टव्यः।

यथा—

"एव शप्त स गुरुणा प्रत्यगृह्णात्कृताञ्जलिः।
अधारयद्व्रतं वीर! ऊर्ध्वरेता मुनिप्रियम्।
वासुदेवे भगवति सर्वाऽऽत्मनि परेऽमले।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्तमः।
विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः।
यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः।
आत्मन्यात्मानमाधाय ज्ञानतृप्त समाहितः।
विचचार महीमेतां जडान्धबधिराकृतिः।
एवंवृत्तो वन गत्वा दृष्ट्वा दावाग्निमुत्थितम्।
तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः" इति।

श्रीमद्रामायणे च–

"बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ।

न हन्यादानृशंस्यार्थमपि शत्रुं परंतप !" इत्युक्त्वा प्रपन्नत्यागो न कश्चिदिति ज्ञेयम् ।

"मोघमन्नं विन्दते अप्रचेतः स्वर्गाल्लोकाद्भ्रश्यते भ्रष्टचेष्टः ।
भीतं प्रपन्नं प्रददाति शत्रवे सेन्द्रा देवाः प्रहरन्ति वज्रम्" इति श्रुतिरपि ।
अतो भगवान्प्रपन्नानङ्गीकरोत्येवेत्यलम् ॥ २८ ॥

सखण्ड 'नमः' पदकी व्याख्या कर, अब अखण्ड 'नमः'
पद के अर्थ को दिखलाते है–

भा०—महर्षिगण, उपायार्थ (साधन) वाचक अखण्ड 'नमः' शब्द से, रकारार्थक रामजी को ही, मकारार्थ जीव का उपाय ( लोक परलोक का साधन ) कहते है ॥ २८ ॥

**बीजेनैवाऽथ जीवस्य स्वरूपं प्रतिपाद्यते ।**
**रामायेति परस्यापि चतुर्थ्या तत्फलस्य च ॥ २९ ॥**
**उपायस्य त्वखण्डेन नमःशब्देन चोच्यते ।**
**सखण्डेन मकारेण षष्ठयन्तेन विरोधिनः ॥३०॥**

अन्वयप्र–( महर्षिभिः ) बीजेन ( षडक्षरमन्त्रराजस्य बीजेन "रां"इत्यनेन) जीवस्य स्वरूपं, रामाय इत्यनेन परस्य(परब्रह्मणः श्रीरामस्य ) स्वरूपं, चतुर्थ्या तत्फलस्य च स्वरूपं, प्रतिपाद्यते । तु (पुनः ) अखण्डेन नमःशब्देन च उपायस्य स्वरूपमुच्यते ( प्रतिपाद्यते ) सखण्डेन षष्ठ्यन्तेन मकारेण विरोधिनः स्वरूपं प्रतिपाद्यते ॥ २९ ॥ ३० ॥

अथ श्लोकद्वयेनाऽर्थपञ्चकमाह-बीजेन रामित्येन जीवस्य स्वरूपं प्रतिपाद्यते । रामायेति रामपदेन परस्य परमात्मनः स्वरूपं प्रतिपाद्यते । चतुर्थ्या व्यक्तचतुर्थ्या आयेत्यनेन तत्फलस्य स्वरूपं प्रतिपाद्यते ॥ २९ ॥

अखण्डेन नमःशब्देन उपायस्य स्वरूपं प्रतिपाद्यते। सखण्डे नमःशब्दे षष्ठ्यन्तेन मकारेण विरोधिनः स्वरूपं प्रतिपाद्यते। एवं च तत्तत्पदेन जीवपरमात्मोपायफलविरोधिरूपार्थपञ्चकस्वरूपप्रतिपादनमभिहितमिति सुधीभिरवगन्तव्यम् ॥ ३० ॥

अब श्रीमदाचार्य्य श्रीरामानन्दस्वामी जी दो श्लोकों से
अर्थपञ्चक का उपदेश करते है—

भा०—महर्षियों ने षडक्षर मन्त्रराज के बीज से जीवका स्वरूप, रामाय इस चतुर्थ्यन्त घटक राम पद से परब्रह्म परमात्मा श्रीरामजी का स्वरूप, और तादर्थ्य चतुर्थी आय से जीव कृत समस्त कर्मों के फल के स्वरूप का प्रति पादन किया है और अखण्ड 'नमः' शब्द से उपाय (साधन) का स्वरूप कहा है। सखण्ड पक्ष मे तो षष्ठ्यन्त मकार पद से भगवत्प्राप्ति के विरोधियों के ( अहङ्कार ममकारादि ) स्वरूप का प्रतिपादन किया है ॥ २९ ॥ ३० ॥

**तात्पर्य्यार्थोऽशेषवेदशास्त्राभिरुचिसंश्रयः ।**
**वाक्यार्थः प्राप्यसम्बन्धि स्वरूपाभिनिरूपणम् ॥३१॥**
**तारकस्य प्रधानार्थः स्वस्वरूपनिरूपणम् ।**
**सम्बन्धस्यानुसन्धानमनुसन्ध्यर्थ इष्यते ॥ ३२ ॥**

अन्वयप—( हे सुरसुरानन्द ! ) अशेषवेदशास्त्राभिरुचिसंश्रयः तारकस्य ( षडक्षरमन्त्रराजस्य ) तात्पर्य्यार्थः। प्राप्यसम्बन्धिस्वरूपाभिनिरूपणम् ( तारकस्य ) वाक्यार्थः। स्वस्वरूपनिरूपणम् ( तारकस्य ) प्रधानार्थः । सम्बन्धस्यानुसन्धानम् ( तारकस्य ) अनुसन्ध्यर्थः ( अनुसंधेयार्थः ) इष्यते ( निरूप्यते ब्रह्मर्षिभिरिति शेषः ) ॥ ३१ ॥ ३२ ॥

अथ मन्त्रराजतारकस्य कस्तात्पर्य्यार्थः का वाक्यार्थः कः प्रधानार्थः कोऽनुसन्धानार्थ इत्यपेक्षायां तत्तत्स्वरूपं निरूपयन्नाह—तात्पर्य्येति युग्मेन। अशेषाणां वेदानां शास्त्राणां चाभिरुचे संश्रयस्तारकस्य तात्पर्य्यार्थ

इष्यते इति द्वितीयेनान्वयः। तथा प्राप्यभगवच्छ्रीरामसंबन्धिस्वरूपस्याभि निरूपणं प्रतिपादनं तस्य वाक्यार्थ इष्यते । तथा स्वस्वरूपस्य जीवस्वरूपस्य निरूपणं प्रतिपादनं तस्य प्रधानार्थ इष्यते । एवमेव जीवपरमात्मनोः संबन्धस्यानेकविधस्यानुपदमुक्तप्रायस्यानुसन्धानमनु-भवोऽहरहरनुसंधानम "उपसर्गे घोः किः" इति धात्रु धातोर्भावे किप्रत्ययः इत्थं "जाप्यस्तत्तारकाख्यः' इत्यारभ्यैतत्पर्य्यन्तैर्द्वाविंशतिभिःपद्यै विस्तरतया तारकश्रीमन्त्रराजार्थो विशदीकृतः प्रथमरहस्यत्वेन मुमुक्षुभि निर्मत्सरैर्निरन्तरमनुसन्धेयः ॥ ३१ ॥ ३२ ॥

षडक्षर (ब्रह्मतारक) मन्त्रराज के षट् पदार्थों को और अर्थपञ्चक को दिखला कर अग्रिम दोश्लोकों से तारक मन्त्र राज के तात्पर्य्यार्थ, वाक्यार्थ, प्रधानार्थ, अनुसन्धनार्थादि के स्वरूप को दिखलाते है--

भा०—( हे सुरसुरानन्द ! ब्रह्मर्षिगण ) समस्त वेद शास्त्र की रुचि का आश्रय षडक्षरमन्त्रराज का तात्पर्य्य है अर्थात समस्त श्रुति स्मृति इतिहास पुराण का पर्य्यवसान जिसमें है, वही षडक्षर श्री-रामतारकमन्त्र का तात्पर्य्यार्थ है, परम प्राप्य परमात्मा श्रीरामजी के स्वरूप का निरूपण करना मन्त्रराज का वाक्यार्थ है, जीव के स्वरूप का निरूपण करना मन्त्रराज का प्रधान अर्थ है, जीवात्मा और परमात्मा के अनेकविध सम्बन्ध का अनुसन्धान करना ही मन्त्रराज का अनुसंन्धार्थ है। (यह निरूपण करते है) ॥ ३१ ॥ ३२ ॥

**उक्त्वेत्थं तारकार्थं तु द्वयार्थः प्रतिपाद्यते ।**
**विमत्सराः प्रपश्यन्तु प्रगृह्णन्त्ववयन्तु च ॥ ३३ ॥**

अन्वयम-( हे सुरसुरानन्द ! ) इत्थम् ( पूर्वोक्तप्रकारेण ) तारकार्थन्तु ( षडक्षरमन्त्रराजस्य विस्तरव्याख्यानम् ) उक्त्वा (अस्माभिः)तु पुनः द्वयार्थः( द्वयमन्त्रस्यार्थः )प्रतिपाद्यते (तमर्थ) विमत्सरा ( मत्सरो नाम अन्येषां शुभकर्म्मणि द्वेषः तद्रहिताः ) भवन्तः प्रपश्यन्तु ( धातूनामनेकार्थत्वाच्छृण्वन्तु विचारयन्तु

वा ) (तमेवार्थं ) प्रगृह्णन्तु ( श्रुत्वा विचार्य्य वा (तमेवार्थं ) प्रगृह्णन्तु ( श्रुत्वा विचार्य्य वा तमेवार्थं स्वीकुर्वन्तु ) ( तमेवार्थम ) श्रवयन्तु ( ध्यायन्तु ) ॥ ३३ ॥

अथ द्वितीयं रहस्यं व्याचिख्यासुराचार्यो द्वयार्थमभिदधाति-उक्त्वेति । इत्थ पूर्वोक्तप्रकारेण तारकार्थमुक्त्वा द्वयस्य "श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नम." इति रामद्वयाख्यमन्त्रस्यार्थः प्रतिपाद्यते मया निरूप्यते। हे निर्मत्सरा. ! भवन्तस्तं प्रपश्यन्तु प्रकृष्टत्वेन चाक्षुषज्ञानविषयं कुर्वन्तुः गृह्णन्तु । प्रकृष्टत्वेन शब्दतो गृह्णन्तु श्रवयन्तु अवगच्छन्तु अर्थतो जानन्त्विति यावत् ॥३३॥

भगवान् श्रीरामान्दस्वामी जी "जाप्यस्तत्तारकाख्यो" यहाँ से आरम्भ कर "तारकस्य प्रधानार्थः" इस ३२ वां श्लोकपर्य्यन्तु षडक्षर मन्त्रराज का विशद व्याख्या कर ३३ वा श्लोक से ४३वा श्लोक पर्य्यन्त द्वयमन्त्र के विस्तर अर्थ का उपदेश अपने शिष्यों को दिये है—

भा०—( हे सुरसुरानन्द ! ( इस प्रकार षडक्षरमन्त्रराजका अर्थ कह कर अब द्वय मन्त्र का अर्थ प्रतिपादन करता हूँ । निर्मत्सर ( राग द्वेषरहित ) होकर उस अर्थ को समझो, उसे विशेष रीति से ग्रहण करो और उसका सदा चिन्तन करो ॥ ३३ ॥

**श्रीरामद्वयमन्त्रमद्भुततमं वाक्यद्वयं षट्पदं**
**वाणाक्षिप्रमिताक्षरन्तु भवता वेद्यो दशार्थान्वितम् ।**
**युक्तं तत्त्रिपदैस्तु तत्र सुमते! पूर्वं शुभस्यास्पदं ।**
**वाक्यं पञ्चदशाक्षरं तदनु दिग्वर्णात्मकं तूत्तरम्॥३४॥**

अन्वयप्र—हे सुमते ! (सुरसुरानन्द !) वेदतत्त्वाभिज्ञामहर्षयः—वाक्यद्वयं षट्पदं वाणाक्षिप्रमिताक्षरम् ( पञ्चविंशतिवर्णात्मकम् ) दशार्थान्वितम् "सीता पुरुषकारार्था श्रीत्यनेन पदेन तु ॥३५॥इत्यारभ्य विरोधिनो निरासस्तु "नमःशब्देन वर्ण्यते ॥४॥इत्यन्तेन ग्रन्थेन

वक्ष्यमाणः पुरुषकारार्था सीता; तस्याः श्रीरामेण शार्कं नित्यसंबन्धः इत्यादिभिर्दशभिरर्थैर्युक्तम् (यतः) अद्भुततमम् (अत्याशु परमकारुणश्रीरामस्य चरणद्वन्द्वे निरतिशतमालसत्वादाश्चर्यजनकम्) श्रीरामद्वयमन्त्रम् (वदन्तीतिशेषः) तु भवता वेद्यः (भवता-सुरसुरानन्देन त्वया-तु-इत्थंभूतःश्रीरामद्वयमन्त्रः अवश्यमेव ज्ञातव्यः) तत्र (श्रीरामद्वयमन्त्रे) पूर्वं वाक्यन्तु शुभस्यास्पदं पञ्चदशाक्षरं त्रिपदैः (त्रिभिः पदैः) युक्तम् (वेदितव्यम्) तदनु (पूर्ववाक्यस्य पश्चात्) उत्तरं वाक्यन्तु (शुभस्यास्पदम्) दिग्वर्णात्मकं (दशाक्षरात्मकम्)त्रिपदैः युक्तम (वेदितव्यम्)॥३४॥

तत्रादौ तदीयवाक्यपदवर्णानामवापोद्धापनिरासाय तेषां स्वरूपबोधार्थं तदीयवाक्यादीन्वदति । हे सुमते! सुरसुरानन्द! भवता श्रीरामद्वयमन्त्रमुक्तस्वरूपवाक्यद्वयं वेद्यं द्विवाक्यं बोध्यमित्यर्थः । वाक्यद्वयमस्ति यस्मिन्निति अर्शआद्यच् । कीदृशं तत् षट्पदानि यस्मिन् तत्षट् पदम् । पुन बाणाक्षिभिः पञ्चविंशत्या प्रमितानि अक्षराणि यस्मिँस्तद्बाणाक्षिप्रमिताक्षरम् पञ्चविंशतिवर्णात्मकमित्यर्थः । पुरुषकाररूपसीतादिभिर्दशभिरर्थैरन्वितं युक्तं दशार्थान्वितम् । तत्र द्वयोर्वाक्ययोर्मध्ये पूर्वं वाक्यम् "सुप्तिङन्तचयो वाक्यम्" इत्युक्तरीत्यासुबन्ततिङन्तचयात्मकं पूर्वार्द्धम् "श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये" इत्येतत् त्रिभिः पदैः "श्रीमद्रामचन्द्रचरणौ"इत्यादिभिर्युक्तं विशिष्टम् । कीदृशं पूर्वं वाक्यं पञ्चदश अक्षराणि श्यादयो वर्णा यस्मिन तत् पंचदशाक्षरम् । पुन. शुभस्य परममङ्गलस्याऽऽस्पदं स्थानं मोक्षपदमिति यावत्। तदनु तत्पश्चादुत्तरं वाक्यम् "श्रीमते रामचन्द्राय नम." इत्येतत्तु दिशो दिग्मिता दशवर्णा अक्षराणि यस्मिन् तत् दिग्वर्णात्मकं दशाकाक्षरम् शुभास्पदं च ॥ ३४ ॥

अब द्वय मन्त्र के अक्षर और पद के वर्णन पूर्वक अवश्य ज्ञातव्य को दिखलाते है—

भा०—हे सुन्दर बुद्धिवाले! सुर सुरानन्द! वेद के मर्मज्ञ महर्षिगण दो वाक्य, छः पद, २५ वर्ण (अक्षर) जिसमे है और 'सीतापुरुषकारार्था' इस ३१ वाँ श्लोक से लेकर 'विरोधिनोनिरासस्तुनमः शब्देन वर्ण्यते' इस ४० सम श्लोक पर्य्यन्त 'श्री सीताजी पुरुषकार का अर्थ है और

उनको श्रीरामजी के साथ नित्य सम्बन्ध है' इत्यादि दश अर्थ से युक्त है। अतः परम कारण श्रीरामजी के चरण में अति शीघ्र साधक के मन को लगा देने से ही आश्चर्य्य जनक श्रीरामद्वयमन्त्र को कहते है।

जिस श्रीरामजी के द्वयमन्त्र में प्रथम वाक्य तो शुभ गुणों के स्थान पन्द्रह अक्षर वाला, तीन पद से युक्त है और उत्तर वाक्यको भी शुभगुण के स्थान, दश अक्षरवाला, तीन पद से युक्त जानो ॥३४॥

**सर्वाधीशेश्वरस्याप्तिहेतुरत्राभिधीयते।**
**सीतापुरुषकारार्था श्रीत्यनेन पदेनतु ॥३५॥**

अन्वयप्रः--(हे सुरसुरानन्द!) अत्र (श्रीरामस्य द्वयमन्त्रे) श्रीत्यनेन पदेन सर्वाधीशेश्वरस्य (सर्वेषामधीशानां जगन्नियन्तॄणां ब्रह्मविष्णुमहेशानामीश्वरस्य नियन्तुः श्रीरामस्य) आप्तिहेतुः (प्राप्तेः कारणम्) पुरुषकारार्था सीता अभिधीयते (कथ्यते) ॥ ३५ ॥

एव तदीयवाक्यादिविभागं प्रदर्श्य वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वात्तत्रास्यार्थबोधाय तदीयतत्पदनामार्थं प्रतिपादयति–सर्वेत्यादिना। अत्र श्रीरामद्वयमन्त्रे श्रीत्यनेन पदेन पुरुषकारः अर्थः प्रयोजनम् यस्याः सा। पुरुषकारायेयं पुरुषकारार्था सीताऽभिधीयते उच्यते। कीदृशी सीता सर्वेषां ब्रह्मादिस्थावरपर्यन्तानामधीश्वरस्य श्रीरामस्याप्तिहेतुः प्राप्तिहेतुः प्राप्तिकारणम्। आप्तेर्हेतुराप्तिहेतुरित्यत्र "देवदत्तस्य गुरुकुलम्" इत्यत्रेव नित्यसाकाङ्क्षत्वात्समासः। अय भावः आश्रितदोषान् शृणाति नाशयति तत्प्रार्थनाः स्वयं शृणोति निजपतिं रामं श्रावयति अहितमपि हितान् श्रयावतीति श्रीरित्यादिव्युत्पत्त्या तत्तदर्थाभिधायिश्रीत्यनेन पदेन आश्रितदोषनिहननशीला तद्विज्ञप्तिश्रवणश्रावणतत्परा अहितहितश्रावणशीला ब्रह्मादिभिःश्रीयमाणा निखिलब्रह्माण्डपूरणसमर्था परमकरुणाजलनिरूपा सदा सदया भगवती प्राप्यसर्वेश्वरप्राप्तिहेतुः सीतोच्यत इति ॥३५॥

"वाक्यार्थज्ञाने पदार्थज्ञानं कारणम्" वाक्यार्थज्ञान मे पदार्थ ज्ञान कारण है। विना पदार्थज्ञान के वाक्यार्थ ज्ञान दुर्लभ है। इस लिये ग्रन्थकार श्रीरामानन्दस्वामीजी सुरसुरानन्दजीसे पदार्थ ज्ञानका उपदेश करते है–

भा०–( हे सुरसुरानन्द ! ) श्रीरामजीके द्वय मन्त्र मे जो प्रथम 'श्री' पद है, उससे सर्वाधीश–ब्रम्हा, विष्णु, महेश्वर–के भी इश्वर श्रीरामजी की प्राप्ति कराने का कारण पुरुषार्थ स्वरूप श्रीसीता जी को कथन करते है ॥ ३५ ॥

**मता पुरुषकारस्य नित्यं सम्बन्ध उच्यते ।**
**रामचन्द्रेतिपदतो वात्सल्यादिगुणस्य च ॥ ३६ ॥**

अन्वयप्रः–( हेसुरसुरानन्द ! महर्षिप्रवरैः ) मता ( मतुप्प्रत्ययेन ) पुरुषकारस्य ( सीतायाः ) श्रीरामेणशाकं ) नित्यसम्बन्धः उच्यते । रामचन्द्रेतिपदतो ( रामचन्द्रेति पदेन ) ( भगवति श्रीरामे ) वात्स्यल्यादि गुणस्य च नित्यसम्बन्ध उच्यते ( कथ्यते ) ॥ ३६ ॥

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।

सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः" इति स्मरणान्नित्ययोगे विहितेन मता मतुपा प्रत्ययेन पुरुषकारस्य सीतारूपस्य "अनन्या च मया सीता भास्करेण प्रभा यथा" इत्युक्तरीत्या प्रभासूर्ययोरिव जातिव्यक्त्योः समवायसबन्ध इव सर्वेश्वरभगवता रामेण सह नित्यसम्बन्धो नित्ययोग उच्यते । रामचन्द्रेति पदतः रामचन्द्रेतिपदेन रामे वात्सल्यादिगुणस्य नित्यसम्बन्ध उच्यते प्रतिपाद्यते इत्यर्थः । ते च वात्सल्य-स्वामित्व सौशील्य सौलभ्य-सर्वज्ञत्व सर्वशक्तित्व-दया कृपानुकम्पा करुणावत्त्व-सौन्दर्य-सौहार्द-क्षमादयः । तत्र वात्सल्यं नाम आश्रितदोषाभ्रातृत्वम्।

तदुक्तं रामायणे–

'न स्मरत्यपकाराणां शतमप्यात्मवत्तया' इति । केचित्तु स्वाश्रिताग स्तिरस्कारबुद्धिर्वात्सल्यमिति वदन्ति ।

तथा चोक्तम्—

"अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ! ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ।
नाहमात्मानमाशंसे मद्भक्तैः साधुभिर्विना ।

श्रियं चात्यन्तिकी ब्रह्मन्! येषां गतिरहं परा ।
ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।
हित्वा मां शरणं याता कथं तांस्त्यक्तुमुत्सहे'' इति।

किञ्च रामोऽपि सुग्रीवं प्रत्याह—

''त्वयि किञ्चित्समापन्ने किं कार्यं सीतया मया ।
भरतेन महाबाहो! लक्ष्मणेन यवीयसा' इति ।

स्वापराधानुसन्धानप्रयुक्तभगवज्जनितभयाभावोऽस्य प्रयोजनमपि बोध्यम् । स्वव्यतिरिक्तसमस्तवस्तुमात्रे स्वकीयत्वाभिमानः स्वामित्वम् ।

''स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम्'

इत्युक्तेः । मत्कार्यमयमवश्यं करिष्यतीति प्रत्ययाय स्वामित्वम्। हीनदीनमलिनबीभत्सकुत्सितादिभिरप्यालिङ्गनसंभाषणादिकर्तृत्वम् सौशील्यम् ।

तथा चोक्तम्—

''हीनैर्दीनैर्मलिनैश्च बीभत्सैः कुत्सितैरपि ।
महतोऽच्छिद्रसंश्लिष्टं सौशील्यं विदुरीश्वरे ।
विराधं नीचबीभत्सं नियुद्धेन समागतौ ।
अपरिक्षणवमेघौ शुद्धाङ्गौ रामलक्ष्मणौ ।
शोणितोत्सिक्तसर्वाङ्गं न्यादं च जटायुषम्
अङ्कमारोप्य पप्रच्छ संचस्कार च तं मृतम् ।
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ।
एष सर्वस्वभूतस्ते परिष्वङ्गो मया कृतः'' इति ।

'न मांसचक्षुरभिवीक्षते' इत्युक्त्या मांसचक्षुरविषयस्य तद्विषयनामापद्य नित्यसन्निहितत्वं सौलभ्यम् ।

''अहं नो माधवो जातः सुहृद सर्वदेहिनाम्' इत्याद्युक्तेः ।

''नारायणः परः साक्षाद्वैकुण्ठनिलयः सदा ।

अर्चावतारतां प्राप्तो भक्तानां हितकाम्यया'' इति भगवद्दौर्लभ्यभयनिवृत्तिरस्य प्रयोजनमपि ।

''यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः''
इत्युक्तेः । सदा वस्तुमात्रविषयकत्रैकालिकज्ञानवत्त्वं सर्वज्ञत्वम् ।

'अज्ञातं नास्ति ते किञ्चित्त्रिषु लोकेषु राघव'।
आत्मानं पूजयन् राम ! पृच्छस्यस्मान् सुहृत्तया' इति वाल्मीकिनोक्तेः अस्य सर्वज्ञत्वानुसंधानात् भगवान्मार्तिं जानाति न वा जानीयाच्चेत्तां निवारयेदिति फलम्। कर्तुं कर्तुं अन्यथा कर्तुं सामर्थ्यं शक्ति। तादृशी सर्वा शक्तिर्यस्य स तस्य भावः।

स्वस्मिन्सर्वशक्तित्वं रामायणे रामः स्वमुखेनैवाह

'नैव देवा न दैतेया न पिशाचा न राक्षसा।
भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणाशिते।
यथा जरा यथा मृत्युर्यथा कालो यथा विधिः।
नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण !।
तथाहं क्रोधसंयुक्तो न निवार्योऽस्म्यसंशयम्।
स देवगंधर्वमनुष्यपन्नगं जगत्ससर्वं परिवर्तयाम्यहम्।
अङ्गुल्यग्रेण तान्हन्याम्" इति।

तथा श्रुतिश्च—

"पराऽस्य शक्तिर्विविधैव श्रुयते स्वाभाविकी ज्ञानबलक्रियाच" इति।

पुनरपि रामायणे

"असाध्यः कुपितो रामो विक्रमेण महायशाः।
आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः।
सतारग्रहनक्षत्रं नभश्चाप्यवसादयेत्।
असौ रामः सुसीदन्तीं श्रीमानभ्युद्धरेन्महीम्।
भित्वा वेलां समुद्रस्य लोकानाऽऽप्लावयेदिमान्।
वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः।
संहृत्य वा पुनर्लोकान् विक्रमेण महायशाः।
शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः"।

इति शत्रुवचनैरपि श्रीरामस्य सर्वशक्तित्वं स्पष्टतरम्प्रतिपादितम् विभूतिद्वयशेषि वा सकलभोग्यपरिपूर्णत्वमवाप्तसमस्तकामत्वम्।

तथा चोक्तं भगवता—

"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि" इति।

वाल्मीकिनाप्येतदेव सूचितम्—

"न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति
लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षयः।
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम्।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया।
सर्वो ह्यभिजनः श्रीमान् श्रीमतः सत्यवादिनः।
नालक्षयत रामस्य कञ्चिदाकारमानने।
उचितं च महाबाहुर्न जहौ हर्षमात्मनः।
शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम्" इत्यादिभिः।

सत्स्वपि हर्षादिकारणेषु भगवति श्रीरामे सततमविक्रियत्वलाभोऽस्य गुणानुसन्धानस्य फलम्। प्रतिकूलाऽनुकूलोदासीनसर्वचेतनाचेतनवस्तुविषय-स्वरूपसत्तोपलम्भनरूपपालनानुगुणव्यापारो दया। यद्वा स्वार्थमनपेक्ष्य परदुःखनिराचिकीर्षया परदुःखे दुःखित्वं सा।

तथा चोक्तं रामायणे—

"व्यसनेषु मनुष्याणां भृशं भवति दुःखितः।
उत्सवेषु च सर्वेषु पितेव परितुष्यति।
दृष्ट एव हि नः शोकमपनेष्यति राघवः।
तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः" इति।

अतो भगवतस्तत्स्वरूपस्थितिप्रवृत्तिसंरक्षणदशायां दयायाः प्राधान्यम्
"देङ् धात्वर्थमादाय निर्मितो यो हरेर्गुणः।
दयाख्यः श्रुतिविख्यातो नित्यो ह्यपि स्वरूपतः" इति चोक्तम्।

कृपा तु—

"रक्षणे सर्वभूतानामहमेव परो विभुः" इति सामर्थ्यसाधनं कृपा। सा परमेश्वरीयस्वसामर्थ्यानुसन्धानाधीनः कालुष्यनाशनो हार्दो भावविशेषो यः। कृपा सा जगदीश्वरात् 'कृपू सामर्थ्ये' इति धातुनिपन्नकृपाशब्दस्यायमर्थो निष्पन्नः।

अनुकम्पा तु—

"रक्षिताश्रितभक्तानामनुरागसुखेच्छया।
भूयोऽभीष्टप्रदानाय ययाताननुधावति।
अनुकम्पा गुणो ह्येष प्रपन्नप्रियगोचरः" इति।

तथा श्रीवासुदेवोऽप्याह–

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।
निर्वैरं मुनिं शान्तं पूयेयेत्यङ्घ्रिरेणुभिः" इति ।

श्रीरामोऽपि तथा–

"जागर्त्तव्यमतन्द्रिभ्यामस्मत्प्रभृति गच्छतु ।
योगक्षेमौ हि सीताया वर्त्तेते लक्ष्मणावयोः ।
यद् यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा ।
तत्तत् प्रदद्या वैदेह्यै यत्रास्या रमते मनः ।
अहं सीतां च राज्यं च प्राणानिष्टान्धनानि च ।
हृष्टो भ्रात्रे स्वयं दद्या भरतायाप्रचोदितः" इति ।

करुणा हि—

" अत्यन्तमृदुचित्तत्वमश्रुपातादिकृद्भवेत् ।
कथं कुर्य्यां कदा कुर्य्यामाश्रितार्त्तिनिवारणम् ।
इतीच्छादुःखदुःखित्वमार्त्तानां रक्षणत्वरा ।
परदुःखानुसंधानाद्विकलीभवनं विभोः ।
कारुण्याख्यगुणो ह्येष आर्तानां भीतिवारकः' इति ।

"भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादि प्रामाण्येनाकृत्यकरण-कृत्याकरणरसानां सर्वरक्षकसर्वकारणादेर्भगवतोऽपि भीत्युत्पत्तौ बाधकाभावः । अत एव परमकारुणिकस्य तस्याश्रयणम्–

"सर्वात्मना मुमुक्षूणामुपादेयतया मतः ।
आर्त्तानां तु विशेषेण चिन्तामणितयाधिकः ।
अयं गुणो न चेद्विष्णुर्दुराराध्यः सतामपि ।
निर्निष्ठोप्यदुःखोप्यसमर्थोपि परः पुमान् ।
तावत् तिष्ठति दुःखानि यावद्दुःखं न नाशयेत् ।
सुखीकृत्य पुरा भक्तान् स्वयं पश्चात्सुखी भवेत् ।
रामस्यैवं स्वभावोयं दृष्टो रामायणे स्फुटः ।
क्रूरः क्रूरतरोऽसत्सु स्याद्वा क्रूरतमोप्ययम् ।
अञ्जलेर्बन्धनादाशु पादयोः पतनादनु ।
प्रेमार्द्रहृदयो रामः आत्मदानात्प्रसीदति ।

दुःखादागामिनः पूर्वं सतां दुःखीत्यहो परः ।
अतोऽलङ्करणं स्यातस्त्रिषु लोकेषु राघव." इत्याद्युक्तेः ।

सौन्दर्यन्तु—

"यथार्हसन्निविष्टानामङ्गानां रुचिराङ्गणाम् ।
शोभोत्कर्षैकसन्दर्भं सौन्दर्यं सुरसत्तम ! ।
अन्योन्यभूषणतया तेषां तु करणैकदर्शनम् ।
आश्चर्यं अनङ्गानां सौन्दर्ये सुदृशां मतम् ।
अङ्गं न येन केनैव दृष्टान्तेण पश्यताम् ।
सुखमुत्पद्यते सद्यः सौन्दर्यं ततः तत्र च ।
इत्यादिवचनैर्लोकोत्तरलावण्यवदङ्गवत्त्वं द्रष्टव्यम् ।

सौहार्दमपि—

द्विजन्मायनपक्षेण येन मा गां हरिः पुनः ।
गुणेन ह्यगुणस्तस्य सौहार्दं परमं हरेः ।
स्वप्रीतेः स्वप्रपत्तेश्च कारणं करुणाम्बुधेः ।
हेत्वन्तरानपेक्षं हि सौहार्दं शाश्वतं हरेः ।

अत्र च

नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न व्रतं न बहुज्ञता ।
इत्यादि प्रल्हादोक्तभागवतवचनानि प्रमाणतयाऽनुसंधेयानि ।

क्षमा तु—

अत्युग्रमनुजन्तूनामानुकूल्यं तिरस्कृताः ।
अत्युग्रानिग्रहोद्दर्कसंकल्पोपरतिः क्षमा इति ।

एवमेव भगवतोऽनन्तगुणानां स्वरूपाणि तत्तद्वचनैरनुसन्धेयानीत्यलम् रामचन्द्रशब्देन सकलजनानन्दकाह्लादजनकत्वमुच्यते ।

"चदि आल्हादने दीप्तौ च" इति धातोरनि प्रत्यये चन्द्रशब्दस्य व्युत्पादनात् उत्तरखण्डे तु दीप्तिरूपार्थमादाय सर्वप्रकाशकताऽभीधीयते ।

तथा च श्रुतिः—

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति ।

स्मृतिश्च–

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति ।

एवं च वात्सल्यादिपुरस्कारेणैव निखिलजनरमणाल्हादकत्वप्रकाशकत्वमिति तस्मिन् वात्सल्यादिगुणस्य नित्यसंबन्धसिद्धिरितीबोध्यम ॥३६॥

भा०–( हे सुरानन्द ! महर्षिगण ) 'मत' से-मतुमप्रत्यय से–पुरुषकार स्वरूप श्रीसीताजी का श्रीरघुनाथ जीके साथ नित्यसम्बन्ध, और 'रामचन्द्र' इस शब्द से परब्रह्म श्रीरामजी में वात्सल्यादि गुणों का नित्य सम्बन्ध कहते है ॥ ३६ ॥

## चरणावित्यनेनैव वात्सल्यादिकसंततेः ।
## विलक्षणस्य दिव्यस्य विग्रहस्याश्रयस्य च ॥३७॥

अन्वयः– (हे सुरसुरानन्द । महर्षिभिः) 'चरणौ' इत्यनेन पदेन वात्सल्यादिकसंततेः विलक्षणस्य दिव्यस्य विग्रहस्य च आश्रयस्य (परब्रह्मश्रीरामेण सह नित्यसम्बन्धः कथ्यते) ॥३७॥

चरणावित्यनेन वात्सल्यादिसंततेराश्रयस्य नित्यसंबन्ध उच्यते इति पूर्वेणैवान्वयः । किंच तेनैव पदेन दिव्यविलक्षणविग्रहाश्रयस्य च नित्यसंबन्धः प्रतिपाद्यत इत्यर्थः ।

सभ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाचातियशाराघवं च महाव्रतम्" ।

इति रामायणेऽभिधानेन चरणावित्यस्य तत्प्रतिपादकत्वमर्थात्कत्वं चरणौ प्रापयति आश्रितान् स्वानुरागात्तेरा । गत्यर्थचरधातोर्नन्द्यादित्वाल्ल्युः । [illegible] णाश्रितपादुकाश्रयणेन भरतस्यापि [illegible] यथावाञ्छितोऽभूत् किमुत चरणाश्रयणेन तिपक्तव्यमित्याशयः ॥ ३७ ॥

भा० –( हे सुरसुरानन्द ! ) महर्षिगण 'चरणौ' पद से वात्सल्यादिगुण और पुरुषकाररूप सीताजीका आश्रयस्वरूप जो विलक्षण श्रीरामजी का दिव्य विग्रह, उसका परब्रह्मरूप श्रीरामजी के साथ नित्य सम्बन्ध कहते हैं ॥ ३७ ॥

शरणेतिपदेनैवोपायस्तद्विग्रहोबुधैः ।
उपायाध्यवसायस्तु प्रपद्य इतिवर्ण्यते ॥३८॥

अन्वयम्–(हेसुरसुरानन्द !) बुधैः (प्राज्ञैः) शरणेतिपदेन च तद्विग्रहएव (परब्रह्मणः श्रीरामस्य विग्रह एव) उपायः (परब्रह्मपरमात्मनः सर्वाधारस्य श्रीरामस्य प्रापकः) वर्ण्यते (कथ्यते)। 'प्रपद्ये' इतिपदेन उपायाध्यवसायस्तु वर्ण्यते (उपायस्य भगवद्विग्रस्य प्रापकत्वेन दृढनिश्चयो निगद्यते) ॥ ३८ ॥

बुधैर्विद्वद्भिः परमार्षैर्महर्षिभिः तस्य विग्रहस्तद्विग्रहाभिन्न उपायः शरणेति पदेन वर्ण्यते। 'प्रपद्ये' इतिपदेन तु उपायाध्यवसायोवर्ण्यते अध्यवसानमध्यवसायो निश्चय उपायस्याध्यावसाय उपायाध्यवसायः ॥३८॥

भा०—पण्डितगण, 'शरण' पद से परब्रह्म स्वरूप श्रीरामजी के विग्रह को परब्रह्म श्रीरामजी की प्राप्ति का उपाय कहते है, अर्थात भगद्विग्रह के चिन्तन से ही भगवत्प्राप्ति होती है, यह कहते है । और 'प्रपद्ये' पद से उस उपायका (परब्रह्मस्वरूप श्रीरामजी के प्रापक जो श्रीराम विग्रह उसका) दृढनिश्चय कहते है ॥ ३८ ॥

प्राप्यं मिथुनमेवेति श्रीमते पदतो मतम् ।
रामचन्द्रेति पदतः स्वामित्वं प्रतिपाद्यते ॥ ३९ ॥

अन्वयम्–श्रीमते पदतः (श्रीमते इतिपदेन) मिथुनमेव (सीतारामस्वरूपमेव) प्राप्यम् इति (महर्षिणां) मतम् रामचन्द्रेतिपदतः (रामचन्द्र इत्यनेन पदेन) (श्रीरामस्य) स्वामित्वं प्रतिपाद्यते (महर्षिभिरितिशेषः) ॥ ३९ ॥

श्रीमते पदतः श्रीमते इति पदेन मिथुनं सीतारामरूपमेव प्राप्यमिति मुमुक्षूणां मतं तैर्मन्यत इत्यर्थः। रामचन्द्रेति पदत पदेन तस्य स्वामित्वं प्रतिपाद्यते वर्ण्यते ॥ ३९ ॥

भा०–(हेसुरसुरानन्द !) 'श्रीमते' इस पद से युगल स्वरूप श्रीसीतारामजी की प्राप्ति महर्षियोंका अभिमत है । अर्थात सीतारामजी के

विग्रह उपाय और विग्रहविशिष्ट स्वरूप प्राप्यहै । और रामचन्द्र पद से श्रीरामजी के स्वामित्व-सब जीवों के एक ही स्वामी-प्रतिपादन करते हैं ॥३९॥

**विभक्त्यायेति पद्धतः शेषवृत्तिर्महात्मभिः ।**
**विरोधिनो निरासस्तु नमःशब्देन वर्ण्यते ॥ ४० ॥**

अन्वयम-( हेसुरसुरानन्द ! ) महात्मभिः ( महर्षिप्रवरैः ) आय इति विभक्त्या ( रामचन्द्रेति प्रातिपदिकोत्तरचतुर्थ्येकवचनङेविभक्त्या ) शेषवृत्तिः ( जीवानां व्यापारः ) वर्ण्यते ( कथ्यते ) नमः शब्देन तु विरोधिनः ( भगवत्प्राप्तेः विरोधिनः अहङ्कारममकाररूपस्य कामक्रोधादेर्वा ) निरासः ( प्रहाणोऽभावो ) वर्ण्यते ( कथ्यते ॥ ४० ॥

महात्मभिर्महर्षिभिर्विभक्त्या रामचन्द्रशब्दोत्तरचतुर्थ्याऽऽयेत्यनेन शेषाणां जीवानां वृत्तिराचरणं वर्ण्यते । नमःशब्देन तु तत्प्राप्तिविरोधिनः कामक्रोधादि जनितान्त यस्य निरासोऽभावो वर्ण्यते कथ्यते ॥ ४० ॥

भा०-( हेसुरसुरानन्द! ) महर्षि प्रवर आयसे—रामचन्द्र इस पद से विहित जो चतुर्थी के एक वचनङे विभक्ति के स्थानमे आदेश हुआ जो आय इससे—जीवों के व्यापार को कहते हैं । और नमः शब्द से भगवत्प्राप्ति के विरोधी अहङ्कार ममकार जन्य जो काम क्रोधादि, उसको दूर करने को कहा है ॥ ४० ॥

**तात्पर्य्यार्थोऽस्य विज्ञेय आचार्य्य रुचिसंश्रयः**
**वाक्यार्थस्तु मताभिज्ञैरेपनिर्णीयते बुधैः ॥ ४१ ॥**
**प्राप्यप्रापकसम्बन्धस्वरूपाभिनिरूपणम् ।**
**प्रधानार्थस्तु तद्युग्मकैङ्कर्य्यस्यप्रधानता ॥ ४२ ॥**
**स्वदोषाभ्यनुसंधानमनुसन्ध्यर्थ उच्यते ।**
**एवमेवानुसन्धेयं मोक्षकामैरहर्दिवम् ॥ ४३ ॥**

अन्वयम्—( हे सुरसुरानन्द ! ) मताभिज्ञैर्बुधैः (सम्प्रदायज्ञैर्विद्वद्भिः) आचार्यरुचिसंश्रयोऽस्य ( श्रीरामद्वयमन्त्रस्य ) तात्पर्यार्थो निर्णीयते । प्राप्यप्रापकसम्बन्धस्वरूपाभिनिरूपणम् (परमात्मजीवात्मनोः सम्बन्धस्य स्वरूपस्य च प्रतिपादनम्) एष तु वाक्यार्थः ( निर्णीयते ) तद्युग्मकैङ्कर्यस्य सीतारामसेवायाः प्रधानता तु प्रधानार्थः ( निर्णीयते ) स्वदोषाभ्यनुसन्धानम् अनुसन्ध्यर्थः ( अनुसन्धानार्थः ) उच्यते । मोक्षकामैरेवमेव ( उक्तरीत्या एव ) अहर्दिवम् ( दिवारात्रम् ) अनुसन्धेयम् ( अनुसन्धातव्यम् ) ॥ ४१ ॥ ४२ ॥ ४३ ॥

ननु द्वयमन्त्ररत्नस्य कस्तात्पर्यार्थः को वाक्यार्थः कः प्रधानार्थः कोऽनुसन्धानार्थ इत्यपेक्षायां तत्तत्स्वरूपं प्रतिपादयंस्तान्निरूपयति—तात्पर्येति त्रिभिः। त्रयाणामेकान्वयः। आचार्यरुचेः संश्रयोऽस्य द्वयमन्त्ररत्नस्य तात्पर्यार्थो मताभिज्ञैर्बुधैर्महर्षिभिर्निर्णीयते निश्चीयते ॥ ४१ ॥

प्राप्यो रामः प्रापको मुमुक्षुर्जीवः तयोः सम्बन्धस्वरूपयोरभिनिरूपणं प्रतिपादनं तु तैरेव वाक्यार्थो निर्णीयते। तौ च तौ युग्मौ च तद्युग्मौ सीतारामौ "युग्मं तु युगलं युगम्" इति कोशात्तयोः सीतारामयोर्युग्मं तद्युग्मं तद्युग्मस्य कैङ्कर्यं तद्युग्मकैङ्कर्यं तस्य प्रधानता तु तैः प्रधानार्थो निर्णीयते॥४२॥ स्वस्यात्मनो दोषाणां रागाद्यपचाराणामभितोऽनुसन्धानमनुसंध्यर्थोऽनुसन्धानार्थ उच्यते। "अहर्दिवम् अहन्यहनि" अचतुरविचतुरइतिवीप्सायां निपातः मोक्षकामैर्मुमुक्षुभिरेवमेवानुसन्धेयमनुसन्धातुं योग्यमित्यर्थः। मोक्षो मुक्तिः। ननु कतिमुक्तिविधा मुक्तयः सन्तीति चेत् शृणु—श्रुतिस्मृतिपुराणेतिहासोक्तरीत्या चतुर्धारित्यध्यवसीयते। अद्वैतमते तु तस्या न कोऽपि विशेषः। ते च यद्यपि तन्त्रभेदे जगदुत्पत्तिप्रकारा भिद्यन्ते तथापि संपन्नस्य सर्वधर्मास्पर्शिसुषुप्त्यवस्थासदृशं सुखदुःखशून्यतयावस्थानं सर्ववादिसम्मतं मुक्तिरित्याहुः। अपरे तु यथारुचि वर्णयन्ति यथादेहनाशो मुक्तिरिति नास्तिकाः। १ खञ्जिये २ पिञ्जिये मोक्ष इति दिगम्बराः। शून्यबोधो वेति शून्यवेदान्तैकदेशिनः। एकविंशतिदुःखध्वंसो वेति नैयायिकाः। लिङ्गभङ्गो वेति केचित्। अविद्यानिवृत्तिर्वेत्यन्ये। स्वरूपप्रतिपत्तिर्वेत्यपरे। चिच्छक्तिर्वेति सांख्याः। परमानन्दो वेति सिद्धान्तवेदिनः।

---

१ सर्वकर्मशून्यता।
२ सर्ववासनाऽभावः।

"वीक्ष्याऽलकावृतमुखं तव कुण्डलश्रि" इतिविभावयन्तः परमभागवताः सात्वताख्याः । कैङ्कर्यलाभो मुक्तिरिति मुनय ऊचु' ।

अत्र प्रमाणम्—

"विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः' इति ।

श्रीमद्रामायणेऽपि—

"कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते" इति ।

एवञ्च सर्वं न्याय्यं युक्तिमत्त्वात् । "वदतां किन्नु दुर्घटम' इतिन्यायेन-सर्वं समञ्जसमिति बोध्यम् । तत्र मोक्षे कामोऽभिलाषो येषां ते मोक्षकामास्तैः एवमेकादशश्लोकैरभिधीयमानदशार्थविशिष्टं श्रुतिस्मृतिपुराणप्रतिपाद्य-महत्त्वं द्वयमन्त्ररत्नमेव मुमुक्षुभिरहरहरनुक्षणमनुसन्धेयम ।

तथा च पाद्मे ब्रह्माणं प्रति हरिवचनम्—

"मामेकं च श्रिया युक्तं भक्तियुक्तो नरोत्तमः ।
द्वयेन मन्त्ररत्नेन मत्प्रियेण भजेत्सदा ।
अचिरान्मत्प्रसादेन मल्लोकं च स गच्छति ।
दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डित एव वा ।
लक्ष्मीं च मां सुरेशेशं द्वयेन शरणं गतः ।
मल्लोकमचिराल्लब्ध्वा मत्सायुज्यं स गच्छति ।
पुरा मन्त्रद्वय ब्रह्मन् ! विष्णुलोके पुरे शुभे ।
तस्मिन्ननन्त पुरे लक्ष्म्यै मया दत्तं सनातनम् ।
लक्ष्म्या लब्धं तया चैव मन्त्ररत्नं द्वयं विभो ?" इति ।

हारीतस्मृतौ च—

"शृणु राजन् ! प्रवक्ष्यामि मन्त्रयोगमनुत्तमम् ।
यथोक्तं विष्णुना पूर्वं ब्रह्मणे परमात्मना ।
सर्वेषामेव मन्त्राणां प्रथमं गुह्यमुत्तमम् ।
मन्त्ररत्नं नृपश्रेष्ठ ! सद्यो मुक्तिफलप्रदम् ।
सर्वैश्वर्यप्रद श्रेष्ठं सर्वेषां सर्वकामदम ।
यस्योच्चारणमात्रेण परितुष्टो भवेद्धरिः ।
देशकालादिनियममरिमित्रादिशोधनम् ।

न स्ववर्गादिदोषश्च पुरश्चरणादिकन्न तु।
ब्राह्मणा क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथोत्तरे।
तस्याधिकारिणः सर्वे सर्वशीलगुणा यदि।
अनन्यसाधना ये तु अनन्यशरणास्तथा।
अनन्यभोग्या ये राजँस्त एवास्याधिकारिणः।
पञ्चविंशाक्षरो मन्त्रः पदैः षड्भिः समन्वितः।
वाक्यद्वयं पर मन्त्रं ज्ञेय रत्नमनुत्तमम्" इति।

स्कान्देऽपि—

"द्वयाख्यं रामचन्द्रस्य मन्त्ररत्नमनुत्तमम्।
पञ्चविंशाक्षरं विद्वान् स याति परमां गतिम्" इति।

विश्वम्भरोपनिषदि च—

प्रथमं श्रीमदिति ततो रामचन्द्रचरणाविति ब्रूयात्। अनन्तरं शरणमिति पदम् पश्चात्प्रपद्य इति वदेत्। पुनश्च श्रीमते इति। अथ रामचन्द्रायेति तदग्रे नम इति। यो दाशरथेर्द्वयाख्यं मन्त्राणां प्रवरं मन्त्ररत्नमधीते। स सर्वान्कामानश्नुते। विपश्चिता सह मोदते इति। इदं च मुमुक्षुभिरवश्यानुष्ठेयं द्वयस्वरूपं श्रुतिस्मृत्यादिष्वप्युपनिबद्धम्।

तथाहि—

"पितरं मातरं दारान् पुत्रान् बन्धून् सखीन्गुरून्।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च।
सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान्।
लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो!" इति।

श्वेताश्वतरश्रुतिश्च—

"यो वै ब्रह्माणं विदधाति पूर्वं वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति।

श्रीमद्रामायणेनाप्येतद्वर्ण्यते "द्वयविवरणरूपत्वादस्य कालक्षेपोऽपि रामायणेनैव इति भूषणे चोक्तम्. अत एव 'रामायणं दीर्घशरणागतिः' इत्यभियुक्तैः। श्रीभाष्यकारैरपि "यावच्छरीरं द्वयमावर्तयेत्" इत्युक्तम्। तत्र बालकाण्डेन श्रीमच्छब्दार्थः। अयोध्याकाण्डेन कल्याणगुणानामुपवर्णनाद्रामचन्द्रशब्दार्थ उक्तः। आरण्यकाण्डेन "ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः" इत्यादिना दिव्यमङ्गलविग्रहवर्णनात् चरणशब्दार्थः। किष्किन्धासुन्दरकाण्डाभ्यां

शरणशब्दार्थः । युद्धकाण्डेन प्रपत्तिः । उत्तरकाण्डेनोत्तरखण्डार्थ इति । एवं च रामचन्द्रद्वयार्थ एव रामायणेन प्रतिपाद्यते तस्य श्रीरामचरितत्वात् ।

किञ्च श्रीमद्भागवते भगवता व्यासेनाऽपि श्रीरामचन्द्रद्वयमन्त्रार्थो निबद्धः—

"यस्याऽमलं नृपसदः सुयशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।
तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतेः शरणं प्रपद्ये" इति ।

तत्र "पादाम्बुजं रघुपतेः शरणं प्रपद्ये"इत्यनेन पूर्वखण्डार्थः प्रतिपादितः । "यस्यामलं नृपसदः सुयशोऽधुनापि गायन्त्यघघ्नमृषयः" इत्यनेनोत्तरखण्डार्थो प्रतिपाद्य श्रीरामचन्द्रस्य सर्वोत्कृष्टत्वं वदता "नाकपालवसुपालकिरीट-जुष्टम्"इत्यनेन नमःशब्दार्थ इति । एवं च सर्वतेजस्वितेजआच्छादकसर्वत-स्तेजस्करसर्वानुग्राहकजगत्कारणभूतश्रीरामचन्द्रशरणागतस्य श्रीरामानुग्रहेण बहिरन्तरप्रकाशस्तत्तेजसां गुणाष्टकाविर्भावपूर्विका स्वरूपाऽवाप्तिर्भवतीति-बोध्यम् ॥ ४३ ॥

श्रीरामजी के मन्त्रद्वय का स्वरूप और पदार्थ कह कर अग्रिम तीन श्लोकों से उसके तात्पर्य्यार्थ, वाक्यार्थ, प्रधानार्थ, और अनुसन्धानार्थ, के स्वरूप का प्रतिपादन करते हैं—

भा०—( हे सुरसुरानन्द ! ) सम्प्रदायज्ञ विद्वान्, आचार्य्य (गुरु) की आज्ञा का अवलम्बन करना, इस द्वयमन्त्र का तात्पर्य्यार्थ कहते हैं। परमात्मा ( श्रीरामजी ) और जीवात्मा के सम्बन्ध और स्वरूप का निरूपण करना यह द्वय मन्त्र का वाक्यार्थ है, युगलमूर्त्ति (श्रीसीताराम जी) की सेवाकी प्रधानता को प्रधानार्थ कहते हैं, और अपने दोषों को पूर्णरूप से अनु-सन्धान करने को द्वय मन्त्रका अनुसन्धेयार्थ कहते हैं; मोक्षकामियों को रात दिन इसी प्रकार से यह अनुसन्धान करने योग्य है॥४१॥४२॥४३॥

**उक्तेत्थं शृणु मन्त्ररत्नविवृतिः सन्मानसाभीष्टदं ।**
**सद्वेद्यं सकृदेव प्रेतिचरमं निर्णीतवाक्यार्थकम् ॥**
**रामीयं हि तदीयमन्त्रनिरतैरुद्बोधनीयं परं ।**
**द्वात्रिंशत्प्रमिताक्षरं मनुपदं द्व्यर्द्धं जगद्विश्रुतम् ॥४४॥**

अन्वयम्—इत्थं (पूर्वोक्तप्रकारेण) मन्त्ररत्नविवृतिः (मन्त्ररत्नस्य द्वयमन्त्रस्य विवरणम्) उक्ता (कथिता) सद्वेद्यं, सन्मानसाभीष्टदं, तदीयमन्त्रनिरतैरुद्बोधनीयं,(तस्य श्रीरामस्याऽयं तदीयः सचासौ मन्त्रश्चेति तदीयमन्त्रः तस्मिन् तदीयमन्त्रे षडक्षरमन्त्रराजे ये निरन्तरं रतास्ते तदीयमन्त्रनिरतास्तैस्तदीयमन्त्रनिरतैराचार्य्यैः उद्बोधनीयम् उत्कृष्टत्वेन ज्ञापनीयम् उत्कृष्टशिष्येभ्य एवोपदेष्टव्यम् नपुनरन्येभ्य इति वेदितव्यम्)निर्णीतवाक्यार्थकम्,जगद्विश्रुतम् द्वात्रिंशत्प्रमिताक्षरं मनुपदं (चतुर्दशपदात्मकम् द्व्यर्द्धं हि (यतः) रामीयं(रामेण प्रोक्तम् अतः) परं (सर्वचरमाख्यमन्त्रेभ्य उत्कृष्टम्) सकृदेवप्रेति चरमं च (चरमश्लोकाख्यम् मन्त्रञ्च) शृणु ॥४४॥-

एवं द्वितीयं रहस्यं सविस्तरं सार्थं प्रतिपाद्याऽथ तृतीयमपि रहस्यं तथा प्रतिपिपादयिषुराह-उक्तेत्थमिति । इत्थमुक्तप्रकारेण मन्त्ररत्नस्य द्वयस्य विवरणं विवृत्तिरुक्ता वर्णिता। निर्णीत वाक्यार्थो यस्य तन्निर्णीतवाक्यार्थकम । रामस्येदं रामीयं वृद्धाच्छः। सकृदेवेति चरमम्।

"सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम"

इति चरमश्लोकमन्त्र शृणु। सकृदेवपेत्यत्र संयुक्ताद्यप्रशब्दे परे वकारस्य लघुत्वं तु' प्रे ह्रे वा''इतिवचनाद्बोध्यम। कीदृश तत् सद्वेद्यम सद्भिर्महात्मभिरवश्यं वेदितु योग्यम। सता मानस मनोभिलषितमभीष्टमीप्सितं ददाति पूरयतीतिसन्मानसाभीष्टदम। तस्य रामस्येमे तदीया ते च ते मन्त्राश्च तदीयमन्त्रा मन्त्रराजमन्त्ररत्नचरमं तेपु नितरां रतैर्निरतैः उत्कृष्टतया बोधनीयमुद्बोधनीयम्। अथ जिज्ञासूनां तत्तदर्थभेदबोधनाय तदीयवर्णादिगणनामाह द्वात्रिंशदिति। पुनः कीदृशं तत् द्वात्रिंशत्संख्याभि' प्रमितानि अक्षराणि वर्णा यस्य तत् द्वात्रिंशत्प्रमिताक्षरम। पुन मनुमितानि चतुर्दशसंख्यानि पदानि यस्मिन् तत् मनुपदम। पूर्वार्द्धोत्तरार्द्धभेदेन द्वे अर्द्धे खण्डे यस्मिँस्तत द्व्यर्द्धम। वेदवेद्यश्रीरामव। तन्मुखोक्तत्वात जगद्विश्रुतं चतुर्दशभुवनात्मकलोकप्रसिद्धम ॥ ४४ ॥

इस प्रकार द्वितीय रहस्य की व्याख्या कर, आगे के श्लोकों से चरममन्त्रके स्वरूप और अर्थ का उपदेश करते है -

भाषा—इस प्रकार मन्त्ररत्न-द्वय मन्त्र-का विवरण कहा है । और "सकृदेव प्रपन्नाय, तवास्मीति च याचते, अभयं सर्व भूतेभ्यो ददाम्येतद् व्रतं मम" जो चरममन्त्र है, जो बत्तीस अक्षरों बारह पदों एवं दो अर्द्धों पूर्वार्द्ध उत्तरार्द्ध—से अंगित, जगत प्रसिद्ध, सत्पुरुषों के मनराभीष्ट का दाता एवं उन से ही जानने योग्य है और जिसका वाक्यार्थ निर्णीत है; उसको सुनो । यह, श्रीरामजी के ही मन्त्र में निरत रहने वालों से परम प्रकाश योग्य है ॥ ४४ ॥

**अत्रोपायान्तरस्याऽथो निवृत्तिः प्रतिपाद्यते ।**
**सकृदित्येवकारेण तूपायनिरपेक्षता ॥ ४५ ॥**

अन्वयम—अथो ( वर्णपदविचारानन्तरम् ) अत्र ( अस्मिन् चरममन्त्रे ) सकृदित्यनेन पदेन उपायान्तरस्य (भगवदपेक्षयाऽन्यस्योपायस्य) निवृत्तिः (अभावः)प्रतिपाद्यते (कथ्यते) एवकारेण तु ( एव इति द्वितीयपदेन तु ) उपायनिरपेक्षता ( उपायस्य भगवद्विग्रहस्य निरतिशयसापेक्षता ) प्रतिपाद्यते ( महर्षिभिरितिशेषः) ॥ ४५ ॥

एवं पदविचारं कृत्वा तत्तदर्थमभिदधाति-अत्रेति । अथो अनन्तरम्पदविचारानन्तरम् अत्र चरमे तृतीये रहस्ये अथवाऽत्र एषु चतुर्दशसु तदीयपदेषु 'सकृत्' इति अनेन प्रथमपदेन उपायान्तरस्य भगवदपेक्षयाऽन्योपायस्य निवृत्तिरभावः प्रतिपाद्यते वर्ण्यते । सर्वासामेवोपायानामपेक्षया प्रपत्तिरेवोपासकानां धर्मार्थकाममोक्षसाधिकेति भावः । एवकारेणेति द्वितीयपदेन तु उपायानां देवतान्तरोपासनायागादीनां निरपेक्षता उपायनिरपेक्षता प्रतिपाद्यत इत्यन्वयः । उक्तसर्वोपायनिरपेक्षा प्रपत्तिरेवोपासकानामुक्तसर्वार्थसाधने बलवत्तरपरमोपाय इति भावः ॥ ४५ ॥

इस प्रकार वर्ण और पद का विचार कर अग्रिम श्लोकों से पदों के अर्थ को दिखलाते है—

भाषा—चरम श्लोक के वर्ण और पदोंकी व्यवस्था करने के बाद

महर्षियों ने चरममन्त्र में 'सकृत्' इस प्रथम पद से, प्रपत्ति से अन्य उपायों की निवृत्ति बतलायी है। और 'एव' इस द्वितीय पद से भगवद्विग्रह रूप उपाय की ही निरतिशय अपेक्षा का प्रतिपादन किया है ॥४५॥

**प्रपन्नायेति पदतस्तूपायस्थानमुच्यते।**
**उपायत्वं भगवतस्तवेति पदतस्तथा ॥४६॥**

अन्वयम—प्रपन्नाय इति पदतः (प्रपन्नाय इति तृतीयपदेन) उपायस्थानम् (उपायस्य भगवद्विग्रहस्य स्थानमाश्रयःस्वरूपम्) उच्यते। तथा तवेति पदतः (तव इति पदेन) भगवतः (श्रीरामस्य) उपायत्वम् (उच्यते) ॥ ४६ ॥

प्रपन्नाय इति अनेन तृतीयेन पदतः पदेन उपायस्थानमुच्यते। प्रपन्नाय प्रपत्तिं कुर्वते उपासकाय उपायस्य बलवत्तरवक्ष्यमाणषड्विधशरणागतिरूपपरमोपायस्य तिष्ठत्यस्मिन्निति स्थानमाश्रय उच्यते प्रतिपाद्यते। तथा तवेति पदतः चतुर्थेन तवेति पदेन।

"यथा त्वं कृपया भूत्या तेजसा महितौजसा।
जुष्ट ईशगुणैः सर्वैस्ततोऽसि भगवान्प्रभुः"

इत्युक्तरीत्या कृपादिसत्य-संकल्पत्वादिगुणगणौघमहार्णवस्य भगवतो रामस्य प्रपत्तिफलदातृकोपायत्वमुच्यते। प्रपत्तिसफलकर्तृत्वेन स एवोपाय इति भावः ॥४६॥

भाषा—'प्रपन्नाय' इस तृतीय पद से उपाय (षड्विध शरणागति) के (स्थान आश्रय) को कहते हैं, तथा 'तव' इस चतुर्थ पद से भगवान् श्रीरामजी को ही उपाय कहते हैं ॥ ४६ ॥

**अस्मीत्युपायस्वीकारः सुमते! मतकोविदैः।**
**समाप्त्यर्थेतिशब्देन तूपायानन्यतोच्यते ॥ ४७ ॥**

अन्वयम—हे सुमते! (सुरसुरानन्द!) मतकोविदैः (सम्प्रदायविद्भिः) अस्मीति (अस्मि—इति पञ्चमेन पदेन) उपायस्वीकारः उच्यते। समाप्त्यर्थेतिशब्देन तु (समाप्त्यर्थकेन "इति" इतिपष्ठेन

पदेन तु ) उपायानन्यता ( उपायात्प्रपत्तेरन्यस्योपायस्याभावः ) उच्यते ( कथ्यते ) ॥ ४७ ॥

हे सुमते! सुरसुरानन्द! मतस्य कोविदैर्वैष्णवमताभिज्ञैः अस्मीति पञ्चमेन पदेन उपायस्य स्वीकारोऽङ्गीकारः प्रतिपाद्यते "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इति कोशात्। समाप्तिः अर्थो यस्य स समाप्त्यर्थः स चासावितिशब्दश्च तेनेतिशब्देन तु उपायानन्यतोच्यते न अन्यः अनन्यस्तस्य भावस्तस्योपायस्यानन्यता उपायानन्यता प्रपत्तौ कृतायामुपाय समाप्तौ नातः परोऽन्य उपाय इतीतिशब्देन षष्ठेन पदेनोच्यत इत्याशयः ॥ ४७ ॥

भाषा—हे सुन्दरमतिवाले सुरसुरानन्द! श्रीसम्प्रदायके मर्मज्ञ विद्वान् "अस्मि" इस पाँचवे पद से उपाय के स्वीकार को कहते हैं। समाप्त्यर्थक "इति" इस छठवें पद से प्रपत्ति की ( शरणागति की ) अनन्यता अर्थात् प्रपत्तिकी अपेक्षा अन्यउपायों के निषेध को कहते हैं॥४७॥

चकारतोऽनुक्तसमुच्चयार्थतो
निगद्यते त्वन्य उपाय आत्मवित्।
उपायसंसेव्यधिकारि रूपं
पदेन वै याचत इत्यनेन ॥ ४८ ॥

अन्वयप्र—हे आत्मविद्! ( सुरसुरानन्द! ) ( मतकोविदैः ) अनुक्तसमुच्चयार्थतः ( अकथितार्थसंग्राहकार्थकेन ) चकारतः ( चकारेण सप्तमपदेन ) अन्यः ( मानसिकप्रपत्तेः भिन्नः ) उपायः ( कायिकवाचिकप्रपत्तिरूपः ) निगद्यते (कथ्यते) याचते इत्यनेन वै पदेन उपायसंसेव्यधिकारिरूपम् ( उपायस्य त्रिविधप्रपत्तेः सम्यक्सेवनशीलस्य अधिकारिणः स्वरूपम् ) निगद्यते ॥ ४८ ॥

अनुक्तानामकथितानामर्थानां समुच्चयोऽर्थो यस्य सोऽनुक्तसमुच्चयार्थस्तेन चकारतश्चकारेण सप्तमपदेन अन्य उपायो निगद्यते अनद्यते प्रपत्त्या बोधनायेति भावः। आत्मानं परमात्मानं वेत्तीति हे आत्मवित्! सुरसुरानन्द! अष्टमेन "याचते" इत्यनेन पदेन उपायं सम्यक् सेवते तच्छील उपायसंसेवी

स चासावधिकारी च तस्य रूपं निगद्यते। सकलार्थसाधकशरणागतिरूपपरमोपायमसेव्यधिकारिस्वरूपं याचन इति पदेन प्रतिपाद्यत इत्यर्थः ॥४८॥

भाषा—हे आत्मवित ! (सुरसुरानन्द !) सम्प्रदाय के ज्ञाता लोग अकथित समुच्चयार्थक 'च' इस सातवें शब्द से मानसिक प्रपत्ति से भिन्न, कायिक और वाचिक प्रपत्तिरूप उपायको कहते है। "याचते" इस आठवें पद से त्रिविध प्रपत्तिरूप उपायों के सम्यक् अनुष्ठान करने वाले अधिकारी के स्वरूप को कहते हैं ॥ ४८ ॥

**अभयमित्यथ प्राप्यप्रतिबन्धकवारणम् ।**
**सर्वभूतेभ्य इत्येव प्राप्यस्य प्रतिबन्धकम् ॥४६॥**

अन्वयस—अथ अभयमिति (इत्यनेन नवमेन पदेन) प्राप्यप्रतिबन्धकवारणम् ( निगद्यते ) ( प्राप्यस्य श्रीरामस्य प्राप्तौ यानि अहंकारममकारकामक्रोधादिरूपाणि प्रतिबन्धकानि तेषां वारणं चित्तवृत्तिनिवर्त्तनं स्वयं भगवता क्रियते इत्युक्तम् ) चतुर्थ्यन्तेन पञ्चम्यन्तेन वा "सर्वभूतेभ्यः" इति ( इत्यनेन दशमेन पदेन ) प्राप्यस्य प्रतिबन्धकम् ( निगद्यते ) अर्थात् भगवत्प्राप्तौ कानि प्रतिबन्धकानि इति प्रश्ने आह—सर्वभूतानि तेभ्यः प्रतिबन्धकेभ्यो-भयहेतुभ्योऽभयं ददामीति । अथवा न केवलं विभीषणायैव अपितु सर्वेभ्यः परस्परप्रतिबन्धकरूपेभ्यो भूतेभ्योऽपि अभयं भयहेतोः जन्ममरणरूपसंसारात् निवृत्तिरूपं यथेप्सितचतुर्विधमोक्षं ददामीति भावो वेदितव्यः ॥ ४९ ॥

अथ अभयमिति नवमेन पदेन प्राप्यस्य भगवतः प्राप्तौ यानि प्रतिबन्धकानि अहं कृतापचारः पापात्माऽनधिकारी जातिवर्णाश्रमतदीयोचितकर्महीनोऽनुचितकर्मानुष्ठाता वेदबाह्यो निन्दितः श्रीनिवासं भगवन्तं श्रीरामं कदा कीदृक् कथं प्राप्स्यामीत्यादिसंशयादीनि विरोधीनि तेषां तादृग्विरोधिप्रतिबन्धकानां निवारणं प्रवृत्तिविघातः प्रतिपाद्यत इत्यनुषज्यते। प्राप्यस्य प्रतिबन्धकं प्राप्यप्रतिबन्धकस्वरूपं सर्वभूतेभ्य इति दशमेन पदेनोच्यत इत्यर्थः । अयमाशयः सर्वभूतेभ्य इति पञ्चमी चतुर्थी च तत्र पञ्चमीपक्षे

संकोचे विनिगमनाविरहात् भयहेतुभ्यः सर्वेभ्यो भूतमात्रेभ्यः सर्वशब्दग्रहणात्स्वस्मादपि अन्यस्माच्च प्रतिबन्धकमात्रात् सत्यसन्धत्वदिव्यकल्याणगुणगणात्मत्वसर्वलोकशरण्यत्वादिविशिष्टो रामोऽहमभय मोक्षं ददामि । चतुर्थीपक्षेऽपि न केवलं विभीषणायैव अपि तु तेभ्यः सर्वेभ्योऽपि अनन्यप्रपत्तौ सर्वावस्थां गतानां पशुपक्षिसरीसृपदेवमनुष्यादिजीवानां सर्वदेशगताना सर्वदाऽधिकारः सूचितः । अत एव

"स तं निपतितं भूमौ शरण्यः शरणागतम् ।
वधार्हमपि काकुत्स्थः कृपया पर्य्यपालयत्"

इतिवायसशरणागतिः सफला संगच्छते इत्यर्थकसर्वभूतेभ्य इति पदेन प्राप्यप्रतिबन्धकमात्रस्वरूपमुच्यत इति ॥४९॥

भाषा०—तदनन्तर 'अभयम्' इस नवमें पदसे भगवत्प्राप्ति के प्रतिबन्धक का निवारण और "सर्वभूतेभ्यः" इस दशवें पद से सर्वभूत को ही भगवत्प्राप्ति का प्रतिबन्धक—अवरोधक कहा है ।

तात्पर्य्य यह है, कि काम, क्रोध, मद, लोभ, अहंकार आदि नीच वृतियों से सम्पन्न समस्त भूत ही भगवत्प्राप्ति के प्रतिबन्धक है । श्रीरामजी इस 'अभयम्' पद से घोषणा करते हैं, कि मैं सभी शरणागतों को इन प्रतिबन्धकों से भय रहित करता हूँ ॥ ४९ ॥

**ददामीति पदेनाऽथोपायस्य सर्वशक्तिता ।**
**एतदित्येव पदतोऽसंशयत्वमितीर्य्यते ॥ ५० ॥**

अन्वयम—अथ ( एकादशेन ) "ददामि" इति ( इत्यनेनैकादशेन) पदेन उपायस्य ( प्रपत्तेः फलदातुः ) सर्वशक्तिता ( सकलप्रयोजननिष्पादकता ) ईर्य्यते (कथ्यते) ( द्वादशेन ) "एतद्" इतिपदतः (इत्यनेन पदेन) असंशयत्वम् (पूर्वोक्तसकलार्थे संशयाभावो वेदितव्यः ) इति ईर्य्यते ( कथ्यते स्वयं भगवता इति शेषः) ॥५०॥

अथ एकादशेन ददामीति पदेन उपायस्य प्रपत्तेः फलदातुः सर्वशक्तिता सर्वार्थसाधकता ईर्य्यते वर्ण्यते । द्वादशेन एतदिति पदतः पदेन तृतीयान्तात्तसि. सर्वत्र सार्वविभक्तिकः उक्तार्थस्याऽसंशयत्वं संशयाभाव एवेर्य्यते पूर्वोक्तेऽर्थेऽत्र संशयो नास्त्येवेति भावः ॥५०॥

भाषा०—पुनः "ददामि" इस ग्यारहवें पद से उपाय-प्रपत्ति के फलदाता श्रीरामजी की सर्वशक्तिता (सकल प्रयोजनकी सम्पादिका) और "एतद्" इस बारहवें पद से स्वयं भगवान् ने पूर्वोक्त समस्त अर्थों में संशयका अभाव कहा है। अर्थादेतत्पूर्वोक्तसमस्तपदार्थमहं ददामि अत्र संशयो न कर्तव्यः। कुतो न संशयः इत्यत आह-व्रतं ममेति। पूर्वोक्तसमस्तपदार्थको मैं देता हूं इसमें संशय नही करना, क्योंकि शरणापन्नजनों को सकल पदार्थ देना यह मेरा व्रत नाम प्रतिज्ञा है। हे सुरसुरानन्द! यह अर्थ स्वयं सत्यसन्ध्य श्रीराम जी कहे है। इसको दृढ निश्चय करो। यह पूर्वोक्त श्लोक का तात्पर्य है ॥ ५० ॥

**व्रतमेतत्पदेनाथो तद्दाढ्यमभिधीयते।**
**निर्भरत्वानुसंधानं ममेति प्रतिपाद्यते ॥ ५१ ॥**

अन्वयम—(हे सुरसुरानन्द!) अथो 'व्रतम्' एतत् पदेन तद्दाढ्र्यम् (पूर्वोक्तसकलार्थे संशयाभावस्य दृढता) अभिधीयते (कथ्यते) ममेति (मम इत्यनेन पदेन) निर्भरत्वानुसन्धानम् (आत्मनो जीवस्य निर्भरत्वस्य निरन्तरं भ्रियमाणत्वस्य ध्रियमाणत्वस्य पुष्यमाणत्वस्यानुसन्धानं चिन्तनम्) प्रतिपाद्यते (निगद्यते महर्षिभिरितिशेषः) ॥ ५१ ॥

त्रयोदशेन ममेति पदेन निर्भरत्वस्य निरन्तरं भ्रियमाणत्वस्य रक्ष्यमाणत्वस्याऽनुसंधानं चिन्तनं प्रतिपाद्यते। "भृञ् भरणे" "डुभृञ् धारणपोषणयोः" आभ्यां कर्मणि "ऋदोरप्" निःशब्दो नैरन्तर्ये प्रपद्यमानोऽवश्यं निरन्तरं सर्वथा मया भरणीय इति चिन्ता तत्परत्वमित्याशयः। पाठक्रमादर्थक्रमो बलीयानिति न्यायेनार्थक्रममादाय चरमेण चतुर्दशेन पदेन दृढस्य भावो दाढर्च तस्य त्रयोदशपदैरभिधीयमानोक्तार्थस्य दाढर्च पुष्टता निश्चयोऽभिधीयते ५१।

भाषा—तदनन्तर 'व्रतम्' इस तेरहवें पद से पूर्वोक्त समस्त अर्थ की दृढता (निश्चय) का कथन किया है और 'मम' इस चौदहवें पद से निर्भरता के अनुसन्धान का प्रतिपादन किया है।

'निर्भरता के अनुसन्धान' से तात्पर्य्य, श्री रामजी के ही ऊपर सब प्रकार का भरोसा रखने, और उन्हें धारक पोषक—धारण और पोषण करनेवाला-समझने तथा उसके अनुसन्धान से है ॥५१॥

**तात्पर्य्यार्थोऽस्य विज्ञेयः शरण्यरुचिसंश्रितम् ।**
**तत्प्रापकस्वरूपस्यवा क्यार्थोऽथ निरूपणम् ॥ ५२ ॥**

अन्वयम—हे सुरसुरानन्द ! अस्य (चरमश्लोकस्य) शरण्यरुचिसंश्रितम् ( शरणे रक्षायां यः साधुः दीनरक्षायाः साधनकर्त्ता श्रीरामः शरण्यः तस्य रुचेः छवेः संश्रितमवलम्बनम् विधातव्यमित्यस्य चरमश्लोकस्य ) तात्पर्यार्थो विज्ञेयः। तत्प्रापकस्वरूपस्य तस्य परब्रह्मणः श्रीरामस्य प्रापकस्वरूपम् छवेराश्रयस्तद्विग्रहः। अथवा प्रापकस्वरूपम् ( पुरुषकाररूपा सीता तस्याः ) निरूपणम् अस्य ( चरमश्लोकस्य ) वाक्यार्थो विज्ञेयः ( विशेषेण ज्ञातव्यः ) ॥ ५२ ॥

एवं तत्पदैः पदार्थमभिधाय संप्रति चरमस्यैतस्य कस्तात्पर्यार्थ को वाक्यार्थः कःप्रधानार्थः कोऽनुसंधानार्थ इति जिज्ञासायां क्रमेण तं तमर्थन्निरूपयति तात्पर्य्येति। शरणे रक्षणे साधुः शरण्य श्रीरामः शरण्य. शरणागतमित्युक्तेः "शरणं गृहरक्षित्रोः रक्षणंच" इति कोशः। तस्य रुचेः प्रसन्नतायाः संश्रितं संश्रयश्चरमश्लोकस्य तात्पर्यार्थो विज्ञेयो विशेषेण ज्ञातव्यः। अथ तत्प्रापकस्वरूपस्य निरूपणं वाक्यार्थो विज्ञेयः ॥५२॥

चरमश्लोक के पदार्थों को कह कर अब तात्पर्य्यार्थ, वाक्यार्थ प्रधानार्थ और अनुसन्धानार्थ का निरूपण करते है।

भाषा—हे सुरसुरानन्द ! दीनों की रक्षा के साधन कर्त्ता श्रीरामजी की छबि या प्रेम का अवलम्बन करना, इस चरम मन्त्र का तात्पर्यार्थ है और परब्रह्म श्रीरामजी की छबिका आश्रय जो तद्विग्रह या पर्पा उस का निरूपण करना अथवा श्रीरामजी के प्रापक पुरुषकार रूप सीता जी के स्वरूप का निरूपण करना चरम मन्त्र का वाक्यार्थ जानो ॥५२॥

निवेदयत मां प्राप्तं विभीषणमुपस्थितम्'' इत्युक्त्या विभीषणस्य वाचिकी गजेन्द्रस्य मानसीत्याद्यूह्यम्। तत्रापि प्रत्येकं सात्विकी राजसी तामसीतिभेदात्षड्विधापि सा त्रिधेति तासामष्टादश भेदाः।

तथाचोक्तं भरद्वाजसंहितायाम्-

"प्रपत्तिरानुकूलस्य संकल्पोऽप्रतिकूलता।
विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा।
कृतानुकूलसंकल्पः प्रातिकूल्यं विवर्जयन्।
विश्वासशाली कृपणः प्रार्थयन्न् त्वणं प्रति।
आत्मानं निक्षिपति यद्धीमान्देवस्य पादयोः।
सा प्रपत्तिरियं सद्यः सर्वपापप्रमोचनी।
आर्त्तानामाशु फलदा सकृदेव कृताह्यसौ।
दृप्तानामपि जन्तूनां देहान्तरनिवारिणी।
एषा च त्रिविधा ज्ञेया कारणत्रयभेदतः।
गुणत्रयविभेदादप्येकैका त्रिविधा पुनः।
प्रणामाङ्कनमुख्येन न्यासलिंगेन केवलम्।
गुर्वधीना हि भवति प्रपत्तिः कायिकी क्वचित्।
अविज्ञातार्थतत्त्वस्य मन्त्रमीरयतः परम्।
गुर्वधीनस्य कस्याऽपि प्रपत्तिर्वाचिकी भवेत्।
न्यासलिङ्गपताऽङ्केन धियार्थज्ञस्य मन्त्रतः।
उपासितगुरोः सम्यक् प्रपत्तिर्मानसी भवेत्।
यदीच्छन् प्रतिकूलानि सर्वभूतानुकम्पनम्।
प्रपद्यते हरिं मोहात्सा प्रपत्तिस्तु तामसी।
अभीप्सयन् विविधांश्च कामान् यदकामैकवत्सलम्।
प्रपद्यते हृषीकेशं तामिमां राजसीं विदुः।
परित्यज्याऽखिलान्कामान् भक्त्यैवात्मेश्वरं हरिम्।
प्रपद्यते दास्यरतिर्यदेषा सा तु सात्त्विकी।
हीना हीनतमाश्चैव रजसा तमसा कृताः।
सत्त्वेन याः प्रयुज्यन्ते मुख्यास्ताः परिकीर्तिताः।
सत्त्वजा मानसीत्येका तत्र मुख्यतमा मता।
तया हि परमां सिद्धिं सद्यो यान्ति मनीषिणः।
प्रणामः कीर्तनं वापि स्मरणं वाऽपि केवलम्।

एकैकमपि चाङ्गाना प्रपत्ति. प्राज्ञसंश्रयात् ।
अन्वयादपि चैकस्य सम्यक् न्यस्तात्मनो हरौ ।
सर्व एव प्रमुच्येरन् नरा: सर्वेऽपरे तथा ॥
बालमूकजडान्धाश्च पङ्गवो वधिरास्तथा ।
सदाचार्य्येण सदिष्टा: प्राप्नुवन्ति सदा गतिम्" इति

केचित्तु—

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच"

इत्यस्यैव चरमत्वं न "सकृदेव प्रपन्नाय" इत्यस्येति वदन्ति । वस्तुतस्तु "सकृदावृत्ति प्रपत्तिः" इति पूर्वाचार्यैः सिद्धान्तितत्वेन चिरंतनोक्तत्वेन च सकृदेवेत्यत्रैव सकृत्पदश्रवणेन चास्यैव चरमत्वमिति सहृदयैरवश्याऽऽकलनीयम ।अस्तु तस्यापि तत्त्वं न तत्रास्माकमाग्रहः । एवं च तादृशप्रपत्तेरपि देशादिनियमाभावः प्रपित्सुभिर्मुमुक्षुभिरवगन्तव्यः।

तथा च सूत्रम्—

"प्रपत्तेर्देशनियमः कालनियमः प्रकारनियमोऽधिकारिनियम. फलनियमश्च नास्ति" इति भगवच्चरणवरणरूपाया: प्रपत्तेर्देशनियमो नाम पुण्यदेशेषु प्रपत्ति: कर्त्तव्या तदन्यदेशेषु नेति नियमो नास्तीत्यादिरर्थोऽस्य द्रष्टव्यः।किंच परमजप्यमिदं पूर्वोक्त रहस्यत्रयं श्रुतिस्मृतिष्वपि महर्षिभिः संसूचनेन प्रतिपादितमस्ति ।

तथाहि श्रुतौ तावत्—

"यो वै ब्रह्माणं विदधाति पूर्वं वेदाँश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।"

अत्र वेदाश्चेति वेदशब्देन सकलवेदमयं रामिति बीजं प्रतिपाद्यते । रमधातुसमानार्थदिवधातुनिष्पन्नोक्तार्थदेवशब्देन रामः मुमुक्षुशब्देन नमः शब्दार्थ इति मन्त्रराजः समुद्धृत सम्पन्नो भवति । अथ देवश्च देवी च 'पुमान स्त्रिया" इतिसाहित्ये एकशेषेण श्रीमच्छब्दार्थः छान्दसत्वाद्द्विवचनाभाव. छन्दसि सर्वविधीनां वैकल्पिकत्वाच्च "न तत्र सूर्य्यो भाति न चन्द्रतारकम" इति श्रुत्यन्तरसंवादात् ।

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम"

इति स्मृतिश्च निखिलतेज प्रकाशकदेवविशेषणात्मशब्देन दीप्त्यर्थ चदिधातुनिष्पन्नचन्द्रशब्दार्थश्च, एकदेशप्रयोगाभिप्रायेण चरणाविति च शेषं तृपात्तमेव उत्तरखण्डार्थस्तु स्पष्ट एव इत्थम् हि मन्त्ररत्नमपि समुद्धृतं भवति । तुल्यन्यायात्तद्गर्भोऽष्टाक्षरश्च समुद्धृत. । सफलया सर्वलोकशरण्यपरमकारुणिकदेवशरणागत्या च सर्वभूताभयप्रदानदर्शनात्तृतीयमपि रहस्यं सूपन्नं भवति ।

एवं श्रीमद्रामायणेऽपि–

"स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दन ।
सीतामुवाचातियशा राघवं च महाव्रतम् ।

इत्यत्र रघुनन्दनो लक्ष्मणो भ्रातुरित्यनेन रामिति बीजमुद्धरणीयम् षष्ट्या संबन्धः । राघवपदेन ङेन्तो रामशब्द श्चोद्धरणीयः । चरणौ गाढं निपीड्येति नमःशब्दार्थ इति मन्त्रराजः समुद्धृत. । सीतामुवाचेति श्रीमच्छब्दः भ्रातुश्चरणावित्यनेन रामचन्द्रचरणाविति प्रतिपादितः । गाढं निपीड्येत्यनेन शरणं प्रपद्य इत्युक्तं भवति । उत्तरखण्डस्त्वर्थतः सिद्ध इति मन्त्ररत्नतद्गर्भोऽष्टाक्षरश्चोद्धृत. । महाव्रतमित्यनेन सकृदेव प्रपन्नायेति तृतीयमपि रहस्यं संसूचितम् ।

एवमेव श्रीमद्भागवते श्रीपाराशर्येणाऽपि–

'यस्याऽमलं नृपसद· सुयशोऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।
तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपते, शरणं प्रपद्ये''

इति श्लोके सर्वविधपापशमनसमर्थम्परमार्थभूत महर्षिभिरहर्दिवसवश्यगेयं सर्ववेदमयं रामिति बीजं व्याख्यातम् अर्चनवन्दनादिना नाकपालादि किरीटजुष्टपदेन नमःशब्दार्थो व्याहृतः रघुपतेरित्यनेन राम इति मन्त्रराजः सूपपन्न. ।

"अनन्या राघवेणाहं भास्करेण प्रभा यथा"

"अनन्या च मया सीता भास्करेण प्रभा यथा"

इत्युक्तरीत्या नित्ययोगभास्करप्रभावन नित्ययोगसीतासहितस्य रघुपतेः पादाम्बुजमित्यनेन "श्रीमद्रामचन्द्रचरणौ" इति शेषंतूपात्तमेव । उत्तरखण्डस्त्वर्थतः सिद्ध इति मन्त्ररत्नम् समुद्धृतम् तद्गर्भोऽष्टाक्षरश्च श्रुत्यन्ते तृतीयरहस्यसाधकोक्तयुक्त्या तृतीयरहस्यमपि समुपपन्नं भवतीति सूचितमित्यलम् ॥ ५३ ॥

भाषा०—( हे सुरसुरानन्द ! ) इस चरम श्लोक का प्रधानार्थ तो सच्चिदानन्दात्मक ईश्वर के स्वरूप का निरूपण करना कहा है । और परमेश्वर ही जीव का धारण भरण पोषण करते हैं, इस बात का निरन्तर चिन्तन करने को चरम श्लोक का अनुसन्ध्यर्थ ( अनुसन्धेयार्थ ) कहते हैं ॥ ५३ ॥

( यहा तक दूसरे प्रश्न—जप क्या है—का उत्तर हुआ )

**अथोच्यते महाप्राज्ञ ! ध्यानं ध्येयस्य चिन्तनम् ।**
**बुधैरात्मरतैर्नित्यं जितप्राणैर्जितेन्द्रियैः ॥ ५४ ॥**

**अन्वयप्र—हे महाप्राज्ञ ! (महामते ! सुरसुरानन्द !) जितेन्द्रियैः ( विषयेभ्यः प्रत्याहृतेन्द्रियैः ) जितप्राणैः (निरुद्धश्वास प्रश्वासैः) नित्यं ( सर्वदा ) आत्मरतैः ( परमात्मनि निरतिशयप्रेमयुक्तैः) बुधैः अथ ( रहस्यत्रयरूपपरमजप्यकथनानन्तरम् ) ध्येयस्य ( परमकारणस्य श्रीरामस्य ) नित्यं चिन्तनम् ( अनुक्षणस्मरणम् ) ध्यानमुच्यते (महर्षिभिरि तिशेषः) ॥ ५४ ॥**

एवं सार्थं साभिप्रायं सप्रमाणं परमार्थभूतं परम-मङ्गलायनं परमश्रेयोमोक्षसाधकं जननमरणात्मकसंसारभयनिवृत्तिकाङ्क्षिभिः फल-रहितविहितकर्मात्यजद्भिर्वैष्णवैरहरहरनुष्ठेयमिदं रहस्यत्रयं परमजप्य-त्वेन समभिधाय संप्रति किं ध्यानमिति तृतीयप्रश्नस्योत्तरं समुपदिशति-अथोच्यत इति। तत्र तावद्ध्यानस्वरूपमाह हे महाप्राज्ञ! महामते! अथ रहस्य-त्रयरूपपरमजप्यकथनानन्तरम् ध्येयस्य ध्यातुमर्हस्य परमात्मनः श्री मद्रामचन्द्रस्य बुधैर्नित्यं चिन्तनमनुक्षणं स्मरणं ध्यानम् "ध्यै चिन्तायाम्" इत्युक्तं ।कीदृशैर्बुधैः. जितानि इन्द्रियाणि यैस्ते तथोक्तैः। विषयेभ्यो वशी-कृतेन्द्रियैः।पुनः जितप्राणैः प्राणायामपरायणैः। नित्यमिति सर्वत्रान्वेति।पुनः आत्मनि परमात्मनि रतिरनुरागो येषां ते तथोक्तैः॥ ५४॥

यहाँ से तृतीय प्रश्न—वैष्णवों का अभिमत ध्यान क्या है ?—का उत्तर प्रारम्भ होता है ।

भाषा- हे महाप्राज्ञ ! ( सुरसुरानन्द ! महर्षिगण ) पुनः जितेन्द्रिय,

निरुद्धश्वास, सदा परमात्म सम्बन्धी निरतिशय प्रेमयुक्त, विद्वानों के ध्येय परम कारण रूप श्रीरामजी के निरन्तर स्मरण को ही ध्यान कहते हैं ॥५४॥

विकचपद्मदलायतवीक्षणं,
विधिभवादिमनोहरसुस्मितम् ।
जनकजादृगपाङ्गसमीक्षितं
प्रणतसत्समनुग्रहकारिणम् ॥५५॥
मुनिमनःसुमधुव्रतचुम्बित-
स्फुटलसन्मकरन्दपदाम्बुजम् ।
बलवदद्भुतदिव्यधनुःशरा-
महितजानुविलम्बिमहाभुजम् ॥५६॥
परार्ध्यहाराङ्गदचारुनूपुरं
सुपद्मकिञ्जल्कपिसङ्गवाससम्
लसद्घनश्यामतनुं गुणाकरं
कृपार्णवं सद्धृदयाम्बुजासनम् ॥५७॥
प्रसन्नलावण्यसुभृन्मुखाम्बुजं
नरं शरण्यं शरणं नरोत्तमम् ।
सहानुजं दाशरथिं महोत्सवं
स्मरामि रामं सह सीतया सदा ॥५८॥

अन्वयप्र- ( हे सुरसुरानन्द ! ) विकचपद्मदलायतवीक्षणम्, ( विकसितपद्मदलायतलोचनम् ) विधिभवादिमनोहरसुस्मितम् ( ब्रह्मशिवादिमनोहरेषद्धास्यम् ) जनकजादृगपाङ्गसमीक्षितम् ( सीतानेत्रकोणेन सादरं दृष्टम् ) प्रणतसत्समनुग्रह-

कारिणम् ( सतां प्रपन्नानां सम्यगनुग्राहकम् ) मुनिमनः सुमधुव्रतचुम्बितस्फुटलसन्मकरन्दपदाम्बुजम् ( मुनिमनांस्येव सुशोभनाः भगवच्चरणचिन्हचिन्तकत्वेन रसज्ञा मधुव्रता भ्रमरास्तैरास्वादिते विकसिते लसन्मकरन्दे पदाम्बुजे यस्य स तम्) बलवदद्भुतदिव्यधनुःशरामहितजानुविलम्बिमहाभुजम् ( विविधबलशक्तिसम्पन्नौ सौन्दर्य्यादिगुणेन मनोहरौ दिव्यौ शार्ङ्गधनुर्बाणाभ्यामासमन्तात्पूजितौ जानुपर्य्यन्त लम्बायमानौ महाबाहू यस्य स तम) परार्ध्यहाराङ्गदचारुनूपुरम् ( अमूल्यमाल्याङ्गदमनोहरनूपुरवन्तम् ) सुपद्मकिंजल्कपिसङ्गवाससम् ( मनोहरकमलकेशरवत्पीताम्बरधरम् ) लसद्घनश्यामतनुम्, गुणाकरम्, कृपाऽर्णवम्, सद्धृदयाम्बुजासनम् ( सत्पुरुषहृदयकमलरूपासनवन्तम् ) प्रसन्नलावण्यसुभृन्मुखाम्बुजम् ( लावण्यमनुक्षणमभिनवसौन्दर्य्यं तद्युक्तप्रसन्नमुखकमलम् ) शरण्यम् ( शरणागतपालकम् ) शरणं ( निखिलब्रह्माण्डरक्षकम् ) महोत्सवम् (महान उत्सव आनन्दावसरो यस्य स महोत्सवस्तम् ) सहानुजम् (अनुजेन लक्ष्मणेन सहितम् ) सीतया सह (वर्त्तमानं) दाशरथिम् ( दशरथराजकुमारम् ) नरोत्तमम् ( नरश्रेष्ठम् ) नरं ( परमात्मानम् ) रामं सदा ( अनुक्षणं ) स्मरामि ( अहं श्रीरामानन्दस्वामीति- शेषः ) ॥५५॥५६॥५७॥५८॥

विकचानि विकसितानि यानि पद्मानि तेषां दलानि विकचपद्मदलानि तत्सदृशे आयते विशाले वीक्षणे नेत्रे यस्य स तम्। सहानुजम्। अनुजेन लक्ष्मणेन सह वर्तमानम्। सीतया श्रीजानक्या सह सहितम्। दशरथस्याऽपत्यं दाशरथिस्तम्। नरोत्तमं नरश्रेष्ठम् 'नरतीति नरः प्रोक्तःपरमात्मा सनातनः" इत्युक्तरीत्या सर्वोत्तमं परमात्मानं रामं सदा तैलधारावदविच्छेदक्षणं स्मरामीति चतुर्थश्लोकेन सहान्वयः। कीदृशं रामं जनकजादृशोऽपाङ्गेन अपरिच्छेद्य सौन्दर्य्यलावण्यवात्सल्यादिगुणाढ्यसीतानेत्रकोणेन समीक्षितं सम्यक् सादरं दृष्टम्। पुनः विधिभवादीनां ब्रह्मशिवादीनामपि मनोहरतीति

मनोहरं सुष्ठु शोभनं स्मितम् ईषद्धसनं यस्य स तम्। प्रणताः प्रपन्नाश्च सन्तश्च प्रणतसन्तस्तेषां समनुग्रहं सर्वभूतेभ्योऽभयं करोति तच्छीलस्तम्॥५५॥

पुनः कीदृशं रामं, मुनीनां मननशीलानां मनांसि मुनिमनांसि तानि मुशोभमानाः रसज्ञा मधुव्रता इव तान्येव वा मधुव्रताः भ्रमरास्तैश्चुम्बिते आस्वादिते स्फुटे विकसिते लसन्तौ सकरन्दौ ययोस्ते पदाम्बुजे यस्य स तम्। पुनः बलवन्तौ सर्वलोकोत्तरप्रशस्तबलयुतौ अद्भुतौ अद्भुतलक्षणसौन्दर्यादिविशिष्टौ दिव्यौ अप्राकृतौ धनुःशराभ्यां शार्ङ्गतद्बाणाभ्यामासमन्तान्महितौ पूजितौ जानुपर्यन्तं विलक्षणतया लम्बेते तच्छीलौ जानुविलम्बिनौ महान्तौ भुजौ यस्य स तम् ॥५६॥

परार्धसंख्यामितानि द्रव्याणि मूल्यत्वेनार्हन्तीति परार्ध्यां अमूल्यः हारश्चाङ्गदौ च चारुनूपुरौ च यस्य स तम्। पुनः शोभमाने पद्मकिञ्जल्कवत् कमलकेशरवत् पिशङ्गे पीते वाससी वस्त्रे यस्य स तम्। पुनः लसन्ती घन इव श्यामा घनश्यामा तनुर्मूर्तिर्यस्य स तम् "स्त्रियां मूर्तिस्तनुस्तनूः" इति कोशः। पुनः कीदृशं रामं, गुणानां वात्सल्यादीनामाकरस्तम्। पुनः कृपायाः अर्णवः कृपार्णवो दयासमुद्रस्तम्। पुनः सतां हृदयं मानसम् अम्बुजमिव सद्धृदया बुजमासां स्थित्याश्रयो यस्य स तथोक्तम् ॥ ५७ ॥

पुनः प्रसन्नं लावण्यमनुत्तममभिनवसौन्दर्यास्पदत्वं सुष्ठु विभर्तीति लावण्यसुभृत् मुखमम्बुजमिव मुखाम्बुजं यस्य स तम्। शरण्यं शरणागतपालनतत्परम्। शरणं जगन्मात्ररक्षकम्। महोत्सवम्-

'न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति"

इति न्यायेन दुःखजन्यविकाररहितमित्यर्थः ॥५८॥

अब ध्यान के योग्य श्रीरामजीके रूपका वर्णन करते हैं-

भाषा०-जिनकी आँखें, खिले कमल दल के समान लम्बायमान हैं; जिनका मधुर मुसकान, ब्रह्मा शिव आदि के मन को भी हरनेवाला है; जो श्री जानकी जी के कटाक्ष से देखे गये हैं, सज्जनों पर, प्रणति मात्र से अनुग्रह करने वाले हैं, जिनका चरण-कमल सरस, विकसित एवं मुनियों के मन रूपी मधु लुब्ध भौंरों से चुम्बित है, जिनकी घुटने तक लम्बी पूज्य-भुजाओं में, सामर्थ्यवान अद्भुत एवं दिव्य धनुष बाण हैं, जो बहुमूल्य एवं सुन्दर हार, अङ्गद ( बिजायठ ) नूपुर एवं कमल केशर

क रागान पीतवस्त्र —पीताम्बर से सुशोभित है; जिनका शरीर मेघ के समान श्याम है, जो गुणों की खान और कृपा का समुद्र है, सज्जनों का हृदय कमल ही जिनका आसन है; जिनका मुखारविन्द प्रसन्न, और लावण्य—अभिनव—सौन्दर्य से अच्छी तरह युक्त है;जो नर (सनातन परमात्मा) शरणागतों की रक्षा में सदा तत्पर, जगन्मात्र का रक्षक, नरोत्तम, दशरथ-तनय एवं महोत्सव रूप है, श्री लक्ष्मण जी एवं श्री सीताजी के सहित ऐसे श्रीरामजी का सदा स्मरण करता हूँ * ॥५५।५६॥५७॥५८॥

**एवं तेऽभिहितं ध्यानं शृणु तन्मुक्तिसाधनम्।**
**मुमुक्षूणां परं वेद्यं विधेयं सुमहामते ! ॥ ५६ ॥**

अन्वयम-हे सुमहामते ! (सुरसुरानन्द !) ते (तुभ्यम्) एवं (पूर्वोक्तप्रकारेण) अभिहितम् (कथितम्) (यत्) मुमुक्षूणां परं वेद्यं (उत्कृष्टरूपेण वेदितुं योग्यम्) विधेयम् (विधातुं कर्तुं योग्यम्) तन्मुक्तिसाधन शृणु ॥ ५९ ॥

अथ मुक्तेः किं साधनमिति चतुर्थप्रश्नस्योत्तरमाह एवमिति हे सुमहामते! सुरसुरानन्द! ते तुभ्यं ध्यानम् एवमुक्तप्रकारेणाभिहितं कथितम्। तत् त्वत्पृष्टं मुक्तिसाधनं सुवक्तव्यं शृणु-कीदृशं तं परमुत्कृष्टम्। पुनः मुमुक्षूणां संसारान्मोक्तुमिच्छावतां सतां विधेयं विधातुं योग्य कर्तव्यमित्यर्थः। तेषामेव वेदितुं योग्य वेद्यं ज्ञातव्यम् "विद ज्ञाने" इति स्मरणात तत. कर्मणि ण्यत ॥५९॥

---

* इसमें श्री वैष्णवधर्म प्रवर्द्धकाचार्य श्री रामानन्द स्वामी जी ने षडक्षर मन्त्रराज के अर्थानुगुण सीता और लक्ष्मण सहित श्री रघुनाथ जी के ध्यान का उपदेश अखिल रामानन्दीय श्री वैष्णवों को दिया इसके विरुद्ध जो कोई भगवच्चिन्तन करे उनको समझना चाहिये कि मैं अपने पूर्वाचार्यों की आज्ञा के प्रतिकूल अनुष्ठान कर रहा हूँ। क्योंकि उक्त पद्य में आचार्य्यके "स्मरामि" इस पद से मैं उक्त विशेषण विशिष्ट का चिन्तन करता हूँ यह कहने का तात्पर्य्य यह है कि मेरा शिष्य भी ऐसाही करे क्योंकि मेरा यही सिद्धान्त है।

श्रीवैष्णवधर्मप्रवर्द्धकाचार्य्य श्रीरामानन्द स्वामी जी "मुक्तेः किं साधनम्" इस चौथे प्रश्न का उत्तर देते हैं

भाषा—हे सुन्दर बुद्धि वाले सुरसुरानन्द ! इस प्रकार ध्यान कहा। अब जो मुमुक्षुओं के जानने योग्य परम कर्त्तव्य है, उस मुक्ति-साधन को सुनो ॥ ५९ ॥

**तप्तेनमूले भुजयोःसमङ्कनं चक्रेणशङ्खेन तथोर्ध्वपुण्ड्रम्**
**श्रुतिश्रुतं नाम च मन्त्रमाले संस्कारभेदाःपरमार्थहेतवः६०**

अन्वयम—(हे सुरसुरानन्द!) श्रुतिश्रुतं (श्रुतिविहितम्) तप्तेन चक्रेण शङ्खेन च भुजयोर्मूले समङ्कनं कर्त्तव्यमिति प्रथमसंस्कारः। तथा श्रुतिश्रुतं ऊर्ध्वपुण्ड्रम् धार्यम् इति द्वितीयसंस्कारः । श्रुतिश्रुतं नाम च ( कार्यम् ) इति तृतीयसंस्कारः। श्रुतिश्रुते मन्त्रमाले मन्त्रो ग्राह्यः इति चतुर्थसंस्कारः। माला धार्या इति पञ्चम संस्कारः। तथा च मार्कण्डेयपुराणम् "अष्टोत्तरशतेनैव तुलसी काष्ठ-संभवाम् । कण्ठादिनाभिपर्यन्तां धारयेद्वैष्णवोत्तमः" इति संस्काराणां भेदाः( इमे सर्वे संस्काराः )परमार्थहेतवः परमार्थस्य भगवतः प्राप्तेः हेतवः कारणानि श्रुतिभिर्निगद्यन्ते ॥ ६० ॥

तत्र तावत्पञ्चसंस्कारसंस्कृतानामेव मुक्तावधिकारिता श्रोतव्य वैष्णवानां तत्कारकान पञ्चसंस्कारांस्तावदादीनाह तप्तेनेति। तप्तेन अग्निनिचितेन चक्रेण हेतिराजभगवत्सुदर्शनप्रतिकृतिरूपेण तथा शङ्खेन पाञ्चजन्येन च भुज-योर्मूले बाह्वोर्मूले समङ्कनमिति प्रथमः संस्कारः।

तथा च स्मृतिः—

"ताप पुण्ड्रं तथा नाम माला मन्त्रश्च पञ्चमः ।
अमी परमसंस्काराः परमैकान्तहेतवः" इति ।

नन्वत्र संस्कारेषु तापपदेन कथं तप्तशङ्खचक्रधारणमेव गृह्यते न पुनः कृच्छ्रचान्द्रायणतप आदिरत आह "श्रुतिश्रुतम्" इति श्रुतौ वेदेऽपि श्रुतं श्रूय-माणमनेन वेदोक्तत्वादस्यानादित्वं भणितम्।

तथा च श्रुतिः—

"पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः अतप्ततनु
र्न तदा मोक्षम् अश्नुते शतास इद्वहन्तस्तत्समासत" इति ऋग्वेदे ॥

अस्यार्थः हे ब्रह्मणस्पते ! चतुर्मुखस्यापि नायक ! प्रभुस्त्वं विश्वतो वि-शेषां सर्वेषां गात्राणि पर्येषि व्याप्नोषि ते व्यापकस्य तव विततं पवित्रचक्रम्।

"सुदर्शनं महस्रार पवित्रं चरणं पविः" इति नैघण्टुकाः ।

श्रीशास्त्रे च—

"पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् ।
पर्यायवाचका ह्येते चक्रस्य प आत्मनः" इति ।

तदा तेन पवित्रेण चक्रेण न तप्ता तनुर्यस्य सोऽतप्ततनुर्मोक्षं नाश्नुते न प्राप्नोति तदेत्यत्र त्यदाद्यत्वाभावश्छान्दसस्तत्र सर्वविधेर्वैकल्पिकत्वात्। तच्च भगवत्पञ्चायुधमात्रस्योपलक्षणम् अतो मोक्षकाङ्क्षिभिरवश्यमेव चक्रादितप्त-तनुभिर्भवितव्यमिति श्रुतिरेव तप्तचक्रादिधारणे जीवान्प्रवर्त्य परमं शिष्ट-परिग्रहीतमपि शिष्टाचारनिदर्शनेन बोधयति—तत् इत् इदं चक्रादि वहन्तः प्राप्नुवन्तो दधतः शतासः शतानि जयविजयविष्वक्सेनगरुडादयः सम् समीचीने उत्कृष्टे स्थाने परमपदे भगवता सहाऽऽसते तिष्ठन्ति इति ।

तथा कठशाखायाम्—

"धृतोर्ध्वपुण्ड्रः धृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं यन्महतो महान्तम् "

इत्यादिनोर्ध्वपुण्ड्रादिधारणं सर्वेषां विहितम् तथा तद्वत् ऊर्ध्वपुण्ड्रं द्वादशसु स्थानेषु सर्वैर्धार्यमिति शेषः ।

इत्थम् तत्र-

"ऊर्ध्वपुण्ड्रं मृदा शुभ्रं यो धत्ते नियमान्मवान् ।
तस्य प्रसाद कुरुते विष्णुर्लोकनमस्कृतः" इति द्वितीयः संस्कारः ।

तृतीयं लक्षयति नाम चेति—

"अस्मिन्मासि भवेद्दीक्षा तन्मूर्तिनामतोदितम् ।
शक्त्यावेशावताराणां वर्जयेन्नाम वैष्णवः" ।

यथा रामकृष्णनारायणादिसम्बन्धेन रामदास एवमादि नाम कुर्यादिति भावः । चतुर्थपञ्चमे लक्षयति 'मालामन्त्रे' इति ।

तत्र माला—

"शङ्खचक्रधरो विद्वान्माला तुलसिजा धृता ।
स जीवन्मुक्त इत्येवं कमलाक्षादिधृक् तथा ।
यज्ञसूत्रं विना विप्रा वेदहीना क्रिया यथा ।
सत्यहीनं यथा वाक्यं मालाहीना न वैष्णवा ।
ब्राह्मणानां यथा संध्या गृहिणां पितृतर्पणम् ।
अदक्षिणो यथा यज्ञो मालाहीना न वैष्णवा ।"

मन्त्रस्तु—

"मन्त्ररूपं प्रवक्ष्यामि शृणु नारद तत्त्वतः ।
रकारादिमकारान्तं मन्त्रे षड्वर्णसंयुतम्" इति ।

एवं च मन्त्रो भगवन्मन्त्रस्तारकादिरिति । पञ्चैते संस्काराणां भेदाः संस्कारभेदाः परमार्थस्य मोक्षस्य हेतवः कारणभूताः "हेतुर्ना कारणं बीजम्" इत्यमरः ॥ ६० ॥

मुमुक्षुओं के परम कर्तव्य-मुक्ति के साधन के स्वरूप-को दिखलाते हैं—

भाषा०—बाहुमूल में तप्त शंख और चक्र से किया हुआ स्पष्ट-चिन्ह, ( मस्तक आदि में ) ऊर्ध्वपुण्ड्र, ( भगवत्सम्बन्धी ) नाम करण, ( तारक ) मन्त्रराज और ( तुलसी की ) माला ही और मोक्ष का कारण स्वरूप वेद विहित संस्कार-भेद- पंच संस्कार हैं ॥६०॥

**परीक्ष्य शिष्यं समुपासकं गुरुर्वर्षं समभ्यर्च्य च देवमग्निम्**
**चक्रादिभिर्हेतिवरैःसुतप्तैर्दिने सुपुण्ये नियतःसमङ्कयेत् ६१**

अन्वयः—गुरुः ( अज्ञानतमोनिरासकः ) वर्षं समुपासकं ( संवत्सरपर्यन्तं सम्यग् उपासितगुरुं ) शिष्यं ( शासनार्हं जिज्ञासुं ) परीक्ष्य ( शिष्यस्य भावश्रद्धादीनां परीक्षां कृत्वा ) देवं ( श्रीरामं ) समभ्यर्च्य ( षोडशोपचारैः संपूज्य ) अग्निञ्च समभ्यर्च्य ( वेदिनिर्माणकुशकण्डिकाकरणपूर्वकं घृतादिहविषा संपूज्य) ( सम्पूजितेन तेनाऽग्निना ) सुतप्तैः ( दाहकरणायोग्यैर्वा संतापकरणायोग्यैः ) हेतिवरैः (भगवदायुधेषु श्रेष्ठैः ) चक्रादिभिः

सुपुण्ये दिने ( श्रीरामनवम्यादितिथियुक्ते वासरे ) नियतः ( समाहितो भूत्वा ) समङ्कयेत् ( चक्रादीनां विहितस्थाने चिन्हं कुर्य्यात् ) ॥६१॥

एवं तत्तत्स्वरूपमभिधाय संप्रति विधिपूर्वकं तत्तत्करणमाह-परीक्ष्येति। गुरुस्तत्त्वोपदेष्टा-

"गुशब्दस्त्वन्धकारस्स्याद्रुशब्दस्तन्निवर्तकः ।
अन्धकारविरोधित्वाद् गुरुरित्यभिधीयते ॥"

इत्युक्तरीत्या अज्ञानान्धकारनिवर्तकः शिष्यं शासनीयं शासनार्हं जिज्ञासुं वर्षं संवत्सरपर्यन्तं समुपासकं निष्कपटतया उपासितगुरुं परीक्ष्य तत्स्वभावश्रद्धादिपरीक्षां कृत्वा,

तदुक्तं भरद्वाजसंहितायाम्-

"उपासितगुरोर्वर्षं विष्णोर्दास्यमभीप्सतः ।
विहिताः पञ्चसंस्काराः युक्तस्यैकान्त्यहेतवः ।।"

इति । देवमुपास्यं श्रीरामं समभ्यर्च्य षोडशोपचारैः संपूज्य; अग्निञ्च समभ्यर्च्य, वेदिकानिर्माणकुशकण्डिकाकरणपूर्वकं घृतादिहविषा सम्पूज्य; तदग्निसुतप्तैर्हेतिवरैर्भगवदायुधश्रेष्ठैश्चक्रादिभिः सुपुण्ये श्रीरामनवम्यादौ दिने नियतः समाहितचित्तः सन् समङ्कयेदित्यन्वयः ॥ ६१ ॥

( पंच संस्कार के स्वरूप को कह कर अब विधिपूर्वक शंख चक्रादि धारण करने को बतलाते हैं )

भाषा०—गुरु, वर्ष भर सम्यक् रीति से उपासना करने वाले शिष्य की परीक्षा कर, देव—श्रीरामजी-की एवं अग्नि की सम्यक प्रकार पूजा कर के, भगवदायुधों में श्रेष्ठ चक्रादि ( शंख—चक्र ) को उसी में तपा कर अच्छे पुण्य दिनों—श्रीरामनवमी जन्माष्टमी आदि-में उससे भली प्रकार अङ्कित करे ॥ ६१ ॥

**तथोर्द्ध्वपुण्ड्रं सुमृदा विधाय,**
**रामादिदासान्तमथो समुच्चरेत् ।**

**मन्त्रं तथैवोपदिशेद्विधानतो,**
**मालां वरां तां तुलसीसमुद्भवाम् ॥६२॥**

अन्वयः—(हे सुरसुरानन्द !) अथो (अनन्तरम्) तथा (शास्त्रविधिर्यथा स्यात् तथा) सुमृदा (शुभ्रमृत्तिकया) (शिष्यस्य ललाटाद्यङ्गे) ऊर्ध्वपुण्ड्रं विधाय (कृत्वा) रामादिदासान्तं (रामदासः कृष्णदास इति) समुच्चरेत् (नाम कुर्यात्) विधानतः (शास्त्रविधिर्यथा स्यात्तथा) तुलसीसमुद्भवां वरां (शुभां-भनां) तां (प्रसिद्धाम्) मालां (शिष्यकण्ठे निधाय) तथैव (शास्त्ररीत्यैव) मन्त्रं (तारकाख्य षडक्षरमन्त्रराजम्) उपदिशेत् ॥ ६२ ॥

तथा सुमृदा शुभ्रमृत्तिकया ऊर्ध्वपुण्ड्रं विधाय कृत्वा अथो अनन्तर रामादिदासान्तन्नाम समुच्चरेत् शिष्यस्य नाम कुर्यात् । राम आदिर्यस्य तत् दासोऽन्तो यस्य तत् रामदासकृष्णदास इत्यादि । एवमधिकारिणं संपाद्य तथैव मन्त्रं तारकादि विधानतो विधानेनोपदिशेत् । तुलसीसमुद्भवा तुलसीकाष्ठनिर्मितां वरां श्रेष्ठां मालां चोपदिशेद् ग्राहयेत् ।

तदुक्तं भरद्वाजसंहितायाम्—

"तापयिष्यन्गुरुः शिष्यं चक्राद्यैर्हेतिभिर्हरेः ।
पुण्येऽह्नि नियतः स्नात्वा स्नातं मन्त्रजलाप्लुतम् ॥
ऋचा दक्षिणतः कुर्याद् वैष्णव्या बद्धकौतुकम् ।
ततः समर्चयेद्देवं स्वार्चायां स्थण्डिलेऽपि वा ।
पश्चिमे स्वेन तन्त्रेण कृत्वाऽग्नेः स्थापनादिकम् ।
मूलमन्त्रेण हुत्वाऽऽज्यं ततः पञ्चदशाहुतीः ॥
एकां पुनश्च सर्वेण पौरुषीभिश्च षोडश ।
हुत्वा त्रिर्विष्णुगायत्र्या वैष्णव्या चाथ हेतिभि. ॥
हविर्निवेद्य देवाय तच्छेषेण तथाहुती ।
अथोपसन्ने हैमानि ताम्राणि राजतानि वा ।
प्रक्षाल्य पञ्चगव्येन मन्त्रतोयाप्लुतानि च ।
बिम्बानि पूर्वहेतीनां स्वभागलिखितानि तै ।
निधाय वह्नौ प्रत्येकं तत्रावाह्य स्वमन्त्रत ।

अर्घ्य पाद्यं तथाचम्यं गन्धं पुष्पं च धूपकम् ।
दीपं च दत्वाऽथाभ्यर्च्य प्रणम्याग्निसमप्रभम् ।
आचार्यः स्वयमादाय नियुक्तो वाऽथ मन्त्रवित् ।
प्राङ्मुखस्योपविष्टस्य न्यसेद्बाहौ च दक्षिणे ।
सुदर्शनं तथा वामे पाञ्चजन्यं स्वमन्त्रत ।
एवं गदां धनुः खड्गं ललाटे मूर्ध्नि वक्षसि ।
चक्रं वा शङ्खचक्रे वा धारयेत्सर्वमेव वा ।
तन्त्रं समाप्य देवेशं सहशिष्यः प्रदक्षिणम् ।
कृत्वा प्रणम्य सान्निध्यं प्रार्थ्य शेषं समापयेत् ।
कुर्य्यात्सर्वत्र कर्मान्ते द्विजैः पुण्याहवाचनम ।
आचार्यस्यार्चनं चैव वासःस्रग्भूषणादिभिः ।
सर्वमङ्गलसंयुक्तमिति चिह्नानि शार्ङ्गिणः ।
धारयित्वा यथोत्साह वैष्णवानभितर्पयेद्" इति ।
एवमूर्ध्वपुण्ड्रादीनामपि विधानं तत्रैव द्रष्टव्यम् ॥ ६२ ॥

भाषा०—( हे गुरसुरानन्द ! ) गुरु, शास्त्र विधि के अनुकूल शिष्य को (ललाट आदि अङ्ग में) शुभ्र ( श्वेत ) मृतिका का ऊर्ध्वपुण्ड्र लगा कर रामदास कृष्णदास ऐसा नाम करण करे। यथा शास्त्र तुलसी के अष्ठोत्तर शत दाने की नाभि पर्य्यन्त लम्बायमान माला शिष्य के गले में पहना दे, और यथा शास्त्र तारक नामक षडक्षर मन्त्रराज का उपदेश दे ॥ ६२ ॥

एवं महान्भागवतः सुसंस्कृतो,
रामस्य भक्तिं च परां प्रकुर्य्यात् ।
महेन्द्रनीलाश्मरुचेः कृपानिधेः,
श्रीजानकीलक्ष्मणसंयुतस्य ॥६३॥

अन्वयार्थ एवं ( पूर्वोक्तपञ्चसंस्कारैः ) सुसंस्कृतः महान् भागवतः ( वैष्णवः ) श्रीजानकीलक्ष्मणसंयुतस्य कृपानिधेः

महेन्द्रनीलाश्मरुचेः ( इन्द्रनीलमणिवच्छ्यामलस्य ) रामस्य परां भक्तिं ( स्मृतिसन्तानरूपां ) प्रकुर्यात ॥६३॥

एवमुक्तप्रकारेण उक्तै पञ्चभिः संस्कारैः सुसंस्कृतो जिज्ञासुर्मुमुक्षुर्महान्भागवतो भगवतः श्रीरामस्य भक्तः सन् श्रीजानकीलक्ष्मणाभ्यां संयुतस्य भास्करप्रभावत्सततमवियुक्तस्य कृपानिधेर्दयामहाजलधेः महेन्द्रनीलाश्मनः इन्द्रनीलमणेरुचिरिवरुचिर्यस्य स तस्य रामस्य परां भक्तिं कुर्य्यादित्यन्वयः ॥ ६३ ॥

भाषा०—इस प्रकार ( पूर्वोक्त पञ्च संस्कारों से ) सुसंस्कृत ( सुन्दर संस्कार युक्त ) महान् वैष्णव, श्रेष्ठ नील मणिवत श्यामल, कृपा सागर, श्रीजानकी लक्ष्मण सहित श्रीरामजी की ( तैल धारावत निरवछिन्न परम प्रेम लक्षणा अथवा स्मृतिसन्तानरूपा ) परा भक्ति करै ॥ ६३ ॥

उपाधिनिर्मुक्तमनेकभेदा
भक्तिः समुक्ता परमात्मसेवनम् ।
अनन्यभावेन मुहुर्मुहुः सदा
महर्षिभिस्तैः खलु तत्परत्वतः॥ ६४ ॥

अन्वयप्र—तैः ( सुप्रसिद्धैर्वाल्मिक्यादिभिः ) महर्षिभिः सदा ( सर्वदा ) खलु ( इति निश्चयेन ) अनन्यभावेन ( अनन्यत्वेन ) तत्परत्वतः (परब्रह्मश्रीरामपरायणतया) मुहुर्मुहुः (वारंवारम्) उपाधिनिर्मुक्तम् ( प्रयोजनान्तरमोचनं यथा स्यात्तथा ) परमात्मसेवनम् परमात्मनः श्रीरामस्य कायिकवाचिकमानसिकभजनम् अनेकभेदा ( श्रवणाद्यनेकप्रकारा भक्तिः ) समुक्ता ( सम्यक् कथिताः ) ॥ ६४ ॥

तत्परत्वतः तत्परत्वेन अनन्यभावेन अनन्यत्वेन उपाधिनिर्मुक्तं कामनाविवर्जितं सदा सर्वदा "सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः" इतिवदविच्छिन्नस्मृतिसन्तानरूपं मुहुर्मुहुः पुनः पुनः परमात्मनो रामस्य

सेवनं भजनं महर्षिभिर्भक्तिः समुक्ता सम्यक् कथिता। कथंभूता सा अनेकभेदा अनेके भेदाः प्रकारा यस्याः सा। अनेके भेदाः के भक्तेरिति चेत् शृणु—

सामान्यतो भक्तेः स्वरूपं नारदपञ्चरात्रे—

"सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते।"

शाण्डिल्यतत्त्वसुधायां च—

"सर्वस्मादधिकस्नेहो भक्तिरित्युच्यते बुधैः।"
सैवैवमूर्ध्वं नयति साक्षात्कारयति ह्यजम्।
तस्मात्सा भूयसी भक्तिः सैका निःश्रेयसेऽप्यलम्।"

सिद्धभक्तेः स्वरूपन्तु तृतीये—

"देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी
जरयत्याशु या कोशं निगीर्णमनलो यथा॥

भक्तिरसामृतसिन्धौ प्रेमस्वरूपम्—

"सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते" इति।

नारदपञ्चरात्रेऽपि—

अनन्यममता विष्णोर्ममता प्रेमसङ्गता।
भक्तिरित्युच्यते भीष्मप्रल्हादोद्धवनारदैः" इति।

एकादशे च—

"शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्माणि च यानि लोके।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः।" इति

शाण्डिल्यसूत्रे परालक्षणम्

'सा पराऽनुरक्तिरीश्वरे' इति ईश्वरे परमगुरौ चन्द्रकलेवाऽनुदिनं वर्द्धमाना वितर्करहिता वा याऽनुरक्तिः सैव परा भक्तिः

सरित्समुद्रांश्च हरेःशरीरं यत्किञ्च भूतं प्रणमेदनन्यः।" इति
अन्येच भक्तेर्भेदाः तत्र तत्र भक्तिरसामृतसिन्धुप्रभृतिग्रन्थे प्रतिपादितास्ते।
तत एवावगन्तव्या मुमुक्षुभिरिह बहुविस्तरभयान्न वर्ण्यन्तइतिदिक् ॥६४॥

भाषा०–अनन्य भाव से सदा सर्वदा निश्चय पूर्वक तत्पर रहने वाले महर्षियों ने, कामना, ममता, अहंता आदि से रहित परमात्मा-श्री रामजी–की सेवा स्वरूप जो भक्ति, उसका अनेक भेद कहा है ॥६४॥

**सा तैलधारासमनित्यसंस्मृति सन्तानरूपेशि परानुरक्तिः**
**भक्तिर्विवेकादिकसप्तजन्या तथा यमाद्यष्टसुबोधकाङ्गा॥६५॥**

अन्वयः–(महर्षिभिः) विवेकादिकसप्तजन्या (१–विवेक-विमोका ऽभ्यास-क्रिया-कल्याणा-ऽनवसादा-ऽनुद्धर्षरूपसप्तसाधन-जन्या) तथा यमाद्यष्टसुबोधकाङ्गा (यमनियमासनप्राणा-यामप्रत्याहारधारणाध्यानसमाधिरूपाणि अष्टौ सुखेन बोधकानि अङ्गानि यस्याः सा) तैलधारासमनित्यसंस्मृति-सन्तानरूपा (तैलधारया समायाः अविच्छिन्नायाः परमात्मनः श्रीरामस्य स्वरूपस्य रूपस्य वा रामपद् स्मृतेः विस्ताररूपा या) ईशि (परब्रह्मणि श्रीरामे) अनुरक्तिः (निरतिशयप्रीतिः कर्त्तव्येति निगदिता) सा परा भक्तिः (त्वया ज्ञातव्येतिशेषः)

परां भक्तिं प्रकुर्यादित्युक्तौ का परेत्यपेक्षायामाह–सा तैलेति। ईष्टे इतीट् "ईश ऐश्वर्ये" अस्मात् क्विप् "ईशावास्यमिदं सर्वम्" इत्यत्र तथा निर्देशात् तस्मिन् ईशि ईश्वरे परमात्मनि अविच्छिन्नया स्निग्धया तैलधारया समायास्तुल्याया नित्याया अविच्छिन्नायाः संस्मृतेः सन्तानो विस्तारो रूपं यस्याः सा अनुरक्तिरनुरागः प्रीतिः सा परा भक्तिरित्यन्वयः तल्लक्षणं पूर्वव्याख्यायामुक्तम्। कीदृशी सा विवेकादिभिः सप्तभिर्जन्या तथा यमादयो ऽष्टौ सुबोधकानि अङ्गानि यस्याः सा ॥६५॥

परमरहस्य प्रचारक भगवान् श्रीरामनन्द स्वामी श्रीसुरसुरानन्द जी से "रामस्य भक्तिं च परां प्रकुर्यात् ॥६२॥" इस कहेहु ये कायिक, वाचिक, मानसिक परा भक्ति का स्वरूप और साधन का प्रतिपादन करते है–

जो विवेक[1] आदि ( विवेक, विमोक, अभ्यास, क्रिया कल्याण, अनवसाद, अनुद्धर्ष ) सात साधनो से उत्पन्न है, और जिसके यम आदिक ( यम, नियम, आसन, प्राणायाम, प्रत्याहार, धारणा, ध्यान, समाधि ) आठ अच्छी तरह बोध कराने वाले अङ्ग है, तैलधारा के समान नित्य संस्मृति–अविरल स्मृति–से उत्पन्न जो श्रीरामजी में परम अनुरक्ति, उसे भक्ति कहते है ॥ ६५ ॥

---

टि० १–"तल्लब्धिर्विवेक–विमोका–ऽभ्यास–क्रिया–कल्याणा–ऽनवसादा–ऽनुद्धर्षेभ्यस्संभवान्निर्वचनाच्च" । इति बोधायनवृत्तिः । तथा च स्वयं बोधायनाचार्य्यैर्विवेकादीनां स्वरूपमभ्युक्तम् । तथाहि "जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः"। दुष्टाहारात्,सात्त्विकाहाराणां विवेचनम् विवेकः । यथा जातिदुष्टम् कलञ्जगृञ्जनादि । आश्रयदुष्टम् अभिशस्त ( महापातकयुक्त ) पतित-चाण्डालादिद्रव्यम् । निमित्तादुष्टम् उच्छिष्टकेशाद्युपहतमन्नं ज्ञातव्यम् । एतद्विषयकमेव परमप्रमाणभूतग्रन्थेभ्यो निष्कृष्ट वचनम"आहारशुद्धौ खलु सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" ( छा ७।२६।२। ) इतिनिर्वचनं बोद्धव्यम् ।

"विमोकः कामानभिष्वङ्गः" विषयसन्निधानेन विषयभोगमन्तरेणैव स्थातुं न शक्नोति येन चित्तविकारेण स चितविकारोऽभिष्वङ्ग इत्युच्यते । कामेन कामिन्यादिविषयेण चित्तविकाराऽभावरूपा ऽनभिष्वङ्गो विमोक इच्युते । अत्र "शान्त उपासीत" इति निर्वचनम् ज्ञातव्यम् ॥

"आरम्भणसंशीलनं पुन. पुनरभ्यास." आरम्भणम् आलम्बनं–शुभाश्रयः तस्य संशीलनम । इतिश्रुतप्रकाशिका । अस्यायमर्थः–परब्रह्म श्रीरामः जगदारभते सृजति पालयति संहरति इत्यतः आरम्भण परब्रह्मश्रीरामः तस्य पुनः २ सदा संशीलनं चिन्तनम् अभ्यासः । अनेनैवाभ्यासेन चिदचिद्विशिष्टपरब्रह्मण एव ध्रुवानुस्मृतिरूपोपासनस्यैव लब्धिर्भवतीतिवेदितव्यम् अतएव "सदा तद्भावभावित:" ( गी. ८।६ ) इति निर्वचनं संगच्छते

"पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया"वेदपाठात्मको ब्रह्मयज्ञः, होमात्मको देवयज्ञः, अतिथिसपर्य्यात्मको मनुष्ययज्ञः, तर्पणात्मक. पितृयज्ञः, बलिहरणात्मको भूतयज्ञः,

पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः ।

एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः" इत्यमरः ।

टि० तथा च मनुः—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥ ७० ॥
पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः।
स गृहेऽपि वसन् नित्यं सूनादोषैर्न लिप्यते ॥ ७१ ॥ अ० ३।
ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा।
नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत्" ॥ म०अ० ४। २१।

'न हापयति शक्तितः' 'यथाशक्ति न हापयेत्' इत्यादिना सदा कर्त्तव्यत्वेन विधानात् "उच्छ्वसन्न स जीवति"। म०।अ०३। ७२ इति निन्दनाच्चावश्यकर्त्तव्यत्व पञ्चानामिति बोद्धव्यम्। आदिना अन्येषामपि यज्ञानामनुष्ठानं शक्तितः यथासाध्य विधातव्यम् इत्यादि क्रियारूपं भगवद्भक्तेः साधनम्। एतत्साधनसम्पन्नो ब्रह्मविदां वरिष्ठो भवतीत्याह–निर्वचनम्—

"क्रियावानेष ब्रह्मविदां वरिष्ठः" (मु० ३। १। ४)

"तमेनं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" (बृ०। ४। ४। २२) इत्यादयोऽनुसन्धेयाः।

"सत्याऽऽर्जवदया दानाऽहिंसाऽनभिध्याः कल्याणानि"

सत्यं भूतहितम्। आर्जवं मनोवाक्कायानामैकरूप्यम्। दया स्वार्थनिरपेक्षपरदुःखप्रहाणेच्छा। दानम् स्वाधीनधनस्य यथादेशं यथाकालं यथा पात्रं यथावस्थं पराधीनत्वसम्पादनम्। अहिंसा मनोवाक्कायतः परपीडानिवृत्तिः। सति सामर्थ्येऽपि परकृतापकारचिन्ताराहित्यमनभिध्या। सत्यादयो ये कल्याणगुणास्तद्गुणवद्भिरेव परमेश्वरो लभ्यो भवतीति ज्ञातव्यम्। तथा च "सत्येन लभ्यः" (मु० ३। १। ५) "तेषामेवैष विरजो ब्रह्मलोकः" (प्र० १। १६) इत्यादि निर्वचनं सङ्गच्छते।

'देशकालवैषम्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्ज दैन्यमभास्वरत्वं मनसोऽवसादः' 'अनवसादाऽनुद्धर्षयोरवसादोद्धर्षविपर्य्ययरूपत्वादवसादोद्धर्षलक्षणमात्रमुक्तं वाक्यकारेण तद्विपर्य्ययरूपो नञर्थोऽर्थात्सिध्यतीति वाक्यकाराभिप्रायः' (इति श्रुतप्रकाशिका) देशकालयोः वैषम्यं वैगुण्यम् अर्थात् ययोर्देशकालयोः सात्विकभावोदयो न भवति तौ देशकालौ विषमौ विगुणौ सात्त्विकगुणरहितौ ज्ञातव्यौ। शोकवस्त्वाद्यनुस्मृतिर्नाम शोकप्रदवस्तु प्रणष्टधनपुत्रादि तस्य अनुस्मृतिनाम चिन्तनम्। तथाच ताभ्यां देशकालवैषम्यशोकप्रदवस्त्वाद्यनुस्मृतिभ्याम् जात मनसो भास्वरात्मकज्ञानाभावरूपं दैन्य खिन्नत्वमवसाद उच्यते।

टि० एवं सति सत्त्वशून्यत्वेन लोभमोहप्रमादजनकरजस्तमोगुणवर्द्धकत्वेन च तद्देशकालयोरवस्थितानामपि स्मारकाशान्तमनसां ध्रुवानुस्मृतिरूपायामुपासनाया मधिकारो न भवतीत्यतः देशकालवैषम्यशोकवस्त्वाद्यनुस्मृतिविपर्ययरूपानव-सादजुष्टमनसाम् 'उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" (बो० वृ०) इति वृत्तिकारबोधितायां प्रत्यक्षताऽऽपन्नायामपवर्गसाधनभूतायां ध्रुवानुस्मृति-रूपायामुपासनायामधिकारो वेदितव्य इति भावः । इममेवार्थम् "नायमात्मा-बलहीनेन लभ्यः" इति निर्वचनमवगमयति । निर्वचनगतबलहीनेनेतिशब्द-स्य मनोबलहीनेनेत्यर्थो वेदितव्यः ।

"तद्विपर्ययजा तुष्टिरुद्धर्षः"

तयोः—देशकालवैषम्यशोकवस्त्वाद्यनुस्मृत्योः—विपर्ययः—देशकालसादृश्यप्रियवस्त्वाद्यनुस्मृतिरूपः—तेन जन्या तुष्टिः—मनोरमदेशकालदर्शनजन्यः स्वकीयत्वेनाऽभिलषितप्राकृतपदार्थस्य स्मरणजन्यश्चाऽप्राकृतपदार्थाऽऽकाङ्क्षा-रहितमनसोऽवस्थाविशेषोऽतिसंतुष्टिर्भक्तेर्बाधिका, तद्विपर्ययस्तु भक्तेः साधकः । अर्थात् अतिमनोरमदेशकालातिप्रियपुत्रकलत्रादिचिन्तनात्तत्रैवातितुष्टत्वेन निविष्टत्वेन च तदन्यचिन्तनाऽशक्तस्य मनसो भगवच्चिन्तनाऽनर्हत्वम् । अतोऽतितुष्टिरूप उद्धर्षः-उत्कृष्टसांसारिकहर्षो मनसो धर्मविशेषो भक्तेर्विरोधी। सांसारिक विषयनिमित्तकोद्धर्षाभाववन्मनसैव भगवान् ध्येयो भवितुमर्हति । अत उद्धर्षाभावस्यैव भक्तिं प्रति साधनत्वं सिद्धम् । तथाच प्राकृतविषयस्य न-श्वरत्वपरिणामित्वदर्शनेन तज्जिहासुः निगृहीतबाह्याभ्यन्तरेन्द्रियः सन् समाहितो भूत्वाऽऽत्मनि स्वस्वरूपे आत्मानं परमात्मानं पश्यत इत्यर्थकम् " शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" ( बृ० ४।४।२३ ) इति निर्वचनञ्च संगच्छते ।

## विवेकादि—

बोधायन वृति में कहा है, कि "उसकी प्राप्ति विवेक, विमोक, अभ्यास, क्रिया, कल्याण, अनवसाद और अनुद्धर्ष से सम्भव है" पुनः वही—बोधायनाचार्य ही—इसका स्पष्टीकरण भी कर देते हैं । कहते हैं, कि "जो अन्न दुष्ट-जाति, दुष्ट-आश्रय और दुष्ट निमित्त नहीं है, उससे शरीर का संशोधन करना विवेक है । अर्थात् दुष्ट आहार से सात्विक आहार का विवेचन करना विवेक है । जैसे--जाति-दुष्ट-अन्न, कलौंजी, गाजर लहसुन प्याज आदि; आश्रय-दुष्ट-अन्न, अभिशाप पाये हुए

महापातक युक्त और चाण्डाल आदि का द्रव्य; निमित्त दुष्ट अन्न, जूठा, केशयुक्त आदि अन्न को जानना चाहिये।" इसी प्रकार इसका अन्य प्रामाणिक ग्रन्थों में भी निर्विवाद वचन मिलता है। जैसे-छान्दोग्योपनिषद के ७।२६।२ में कहा है, कि "आहार की शुद्धता से अवश्य ही सत्त्व की शुद्धि होती है और सत्त्व-शुद्धि से अविचल-स्मृति होती है।"

"विमोक, काम के अनभिष्वङ्ग को कहते है। विषय की समीपता में, उसको भोगने से अपने को नही रोक सकने का जो चित्त में विकार, उसको अभिष्वङ्ग कहते है। अत एव, कामानभिष्वङ्ग, कामिनी आदि विषयों से चित्त में विकार नही होने को समझना चाहिये; इसीको विमोक कहते है।"

"अभ्यास, आरम्भण-आलम्बन-के पुनः पुनः अनुशीलन को कहते है।" श्रुतप्रकाशिका में कहा है, कि-"आरम्भण जो आलम्बन-शुभ आश्रय, उसके बारम्बार अनुशीलन करने को अभ्यास कहते है।" परब्रह्म श्री राम जी से जगत का आरम्भ ( उत्पत्ति ) पालन और संहार होता है,अतएव, श्रीरामजी ही आरम्भण कहे जाते हैं, उन श्रीरामजी के निरन्तर चिन्तन को अभ्यास कहते है। इस प्रकार के अभ्यास से चिदचिद्विशिष्ट परब्रह्म—श्रीरामजी—की अविचल-स्मृति रूप उपासना की प्राप्ति होती है, यही कहा है। अतएव गीता का यह वचन— 'सदा तद्भावभावितः' अर्थात् सदा उनका चिन्तन करना-संगत होता है।

"क्रिया, शक्तिभर पंचमहायज्ञादि के अनुष्ठान को कहा है" वेद-पाठ को ब्रह्म-यज्ञ, होम करने को देवयज्ञ, अतिथि-सेवा को मनुष्य-यज्ञ, तर्पण को पितृ यज्ञ और बलिदान को भूत-यज्ञ कहा है। इस प्रकार "वेद-पाठ, होम, अतिथितर्पण पितृ तर्पण और बलि, इन पाँच महा-यज्ञों का ही नाम ब्रह्मयज्ञादि है" ऐसा अमर कोष में कहा है। मनुस्मृति में भी कहा है, कि—"अध्यापन ब्रह्म यज्ञ, तर्पण पितृयज्ञ, होम देवयज्ञ, बलि भूत यज्ञ, और अतिथि-पूजन, नृयज्ञ—मनुष्य

यज्ञ है । इन पाँचों महा-यज्ञो का जो शक्तिभर नही त्याग करता है, वह गृहमें नित्य बसते हुए भी सूना-दोष से लिप्त नही होता है। मनु, अ. ३ । श्लो० ७१ । (। सूना—दोष, चूल्हा, चक्की, ओखली, झाड़, भूमि जोतने से मरे हुए जीवों की हत्या को कहते है।) पुन मनुने ही ४।२१। में कहा है कि "सदा यथाशक्ति ऋषि-यज्ञ, देव-यज्ञ, भूतयज्ञ, पितृयज्ञ और नृयज्ञ का त्याग नही करना चाहिये।" 'यथा शक्ति नही त्याग करना' इस बचन से, सदा करने का ही विधान होता है। मनु० ने ही ३ । ७ २ में कहा है, कि "उच्छ्वसन्न स जीवति" अर्थात जो ऐसा नही करता, वह साँस लेते हुए भी मुर्दा है।" इस निन्दा बचन से पाचो यज्ञों को अवश्य करने का ही बोध होता है । पंच-महायज्ञादि में आदि शब्द जो आया है, वह भी अन्य यज्ञों के शक्तिभर–यथासाध्य अनुष्ठान करने का ही विधायक है। इन्ही सब क्रियारूप भगवत्प्राप्ति के साधनों से सम्पन्न होने से श्रेष्ठ ब्रह्म ज्ञानी होता है। मुण्डक उपनिषद् के ३ । १ । ४ में कहा है–'क्रियावान् ही, ब्रह्मज्ञनियों में श्रेष्ठ है।" बृहदारण्यकोपनिषद् में भी कहा है, कि–दोषों का नाश करने वाला जो यज्ञ, दान और तपस्या, उससे ब्राह्मण, इश्वर को जानने की इच्छा करता है।" इत्यादि बचन अनुसन्धान योग्य है।

"कल्याण, सत्य, आर्ज्जव, दया, दान, अहिंसा और अनभिध्या है। प्राणिगों का हित करना सत्य, मन, बचन और शारीरिक–व्यवहार की एकता को आर्ज्जव,स्वार्थ-रहित होकर दूसरे के दुःख को दूर करने की इच्छा को दया,अपने अधीन धन को,यथा देश,काल और अवस्था,के अनुसार यथा पात्र को दे देना दान; मन बचन और शारीरिक क्रियासे भी दूसरों को पीड़ा नहीं पहुँचाने को अहिंसा; और सामर्थ्य रहते हुए दूसरों के किये हुए अपकार की चिन्ता की रहितता को अनभिध्या कहते है। इसने कल्याण-गुणों से परमेश्वर की प्राप्ति होती है, यह इससे ज्ञात हुआ ।

मुण्डकोपनिषद में कहा है, कि 'सत्येन लभ्यः' अर्थात् सत्य से प्राप्ति होती है। प्रश्नोपनिषद् । १ । १६ । में कहाहै—"जिसमें कपट, असत्यता और माया नही है, उसीको इस विरज–रजोगुण तमोगुण–शून्य-ब्रह्मलोक की प्राप्ति होती है।" इस (निर्वचन) से उक्त अर्थ संगत होता है।

अनवसाद—देशकाल की विषमता से और शोकप्रद वस्तु आदि की अनुस्मृति से उत्पन्न जो दीनता, उससे मन का प्रकाश नही होने को अवसाद कहते है, अतएव, उपर्युक्त शोक और दीनता से रहित प्रकाश–युक्त मन को अनवसाद कहते है। इसी को श्रुतप्रकाशिका में इस रूप में स्पष्ट किया है—'अनवसाद और अनुद्धर्ष, अवसाद और उद्धर्ष का ही विपर्य्यय रूप से हुआ है, इसीसे वाक्यकारने अवसाद और उद्धर्ष का ही लक्षण किया है। उसके विपर्य्यय से ही उसके अर्थ की सिद्धि हो जाती है, यही वाक्यकार का तात्पर्य है।" देश काल की विषमता को ही वैगुण्य कहते है; अर्थात् जिस देश काल में सात्विक भाव-सत्त्वगुण का उदय नहीं होता, उस देश काल को ही विषम, विगुण और सात्विक गुण रहित जानना चाहिये। शोकप्रद–वस्तु मात्र की अनुस्मृति-नष्ट हुए धनपुत्रादि शोकप्रद वस्तुओं की निरन्तर स्मृति—बनी रहने को यहाँ चिन्तन कहते है। इन दोनो—देश काल की विषमता और चिन्तन से उत्पन्न मन की अप्रकाशकता रूप दैन्य को अवसाद कहते है। इस प्रकार सत्त्वगुण की शून्यता से और लोभ, मोह, प्रमाद को उत्पन्न करने वाला जो रजोगुण तमोगुण, उसकी बढ़तीसे उस देश काल में स्थित अवसाद प्राप्त मन, संदेह दृढ–चिन्ता के कारण उपासना का अधिकारी नही होता, यह तात्पर्य हुआ। देश काल की विषमता और शोक प्रद–वस्तु आदि की अनुस्मृति के विपर्य्यय रूप अनवसाद से युक्त मन ही, मोक्ष-साधन-भूत दृढ–अनुस्मृति-रूप उपासना का अधिकारी होता है। इसी को बोधायन–वृत्ति में इस प्रकार कहा है—

उदारकीर्तेः श्रवणं च कीर्तनं
हरेर्मुदा संस्मरणं पदश्रितिः ।
समर्चनं वन्दनदास्यसख्य-
मात्मार्पणं सा नवधेति गीयते ॥६६॥

अन्वयप उदारकीर्तेः ( अर्थधर्मकाममोक्षप्रदसुयशस्म ) हरेः ( भक्तजनानां कायिकवाचनिकमानसिकदुःखहरणकर्त्तुः श्रीरामस्य सर्वैश्वर्य्यसम्पन्नस्य सज्जनान्तःकरणरमणाश्रयस्य )

---

'उपासनं-स्याद्ध्रुवाऽनुस्मृतिर्दर्शनान्निर्वचनाच्च" अर्थात् दृढ चिन्तन ही उपासना है, ऐसी देखी भी जाती है और निर्वचन भी है। इसी प्रकार "नायमात्मा बलहीनेन लभ्यः" ( मानसिक-बल के बिना आत्मा की प्राप्ति नहीं होती ) इस निर्वचन से भी अवगत है। बलहीन का तात्पर्य मनोबल ही से है।

अनुद्धर्ष "देशकाल की विषमता एवं शोकप्रद वस्तु आदि, की अनुस्मृति की विपरीतता से उत्पन्न तुष्टि को उद्धर्ष कहते हैं; अतएव, इसका ( उद्धर्ष का ) विपरीत अनुद्धर्ष हुआ।

अपनी अभिलाषा के अनुकूल एवं मनोरम देशकाल, धन धाम, पुत्र-कलत्र आदि प्राकृत-पदार्थों का निरन्तर स्मरण करते हुए इसी की पूर्ति-प्राप्ति में इस प्रकार परमनिमग्न, अतितृप्त एवं महाप्रसन्न रहे, कि इससे भिन्न अप्राकृत ( भगवत-चिन्तन आदि ) वस्तुओं की आकांक्षा के बोध एवं प्रवृति से ही रहित हो जाय, इसी उत्कृष्ट सांसारिक हर्ष को उद्धर्ष कहते है; किन्तु यह उद्धर्ष भगवद्भक्ति विरोधी है., अतएव; इसकी विपरीतता ही भक्ति— साधिका हुई, इसी को अनुद्धर्ष कहते है।

इसी को बृ० आ० उ० ४। ४। २३ में इस प्रकार कहा है:-

संसारिक-पदार्थों की नश्वरता एवं परिग्लानि के दर्शन से उसके परित्याग की इच्छा करते हुए बाह्याभ्यन्तर-इन्द्रियों के स्वेच्छागमन को रोकनेवाला एवं निरुद्ध-अन्तःकरण प्राप्त जीवात्मा, अपने स्वरूपमें ही परमात्मा को देखता है।

श्रवणम् (रामस्यपरव्यूहविभवान्तर्य्याम्यर्चाविग्रहस्य स्वाभाविकज्ञान-बलक्रियादिपराशक्तीनाञ्च प्रतिपादकश्रुतिस्मृतीतिहासपुराणादीनां शिष्टमुखतः श्रवणम्) मुदा (हर्षेण) कीर्तनम् (श्रुतस्य स्वयमेवा-न्यान्प्रति कथनम्) (यत्कथितं तस्यैव) संस्मरणम् (सम्यक्स्वान्ते चिन्तनम्) (तदनन्तरम्) पदश्रितिः (पादसेवनम्) समर्चनम् (गन्धादिषोडशोपचारैः सम्यक् पूजनम्) वन्दनदास्यसख्यम् (वन्दनम् अभिवादनं स्तुतिश्च, दास्यं नाम तस्यैवाहं किङ्कर इति बुद्ध्या तत्परिचर्या दासत्वम्, सख्यं नाम सखित्वं सच्चिदान-न्दत्वेन तत्समानत्वम्) आत्मार्पणम् (आत्मनिवेदनम् अर्थात् जीवस्वरूपस्य भगवदधीनत्वबोधनम् वेदितव्यम्) (एतत्पूर्वोक्तात्मिका या भक्तिः) सा नवधा पूर्वोक्तभेदभिन्नतया नवप्रकारिका इति गीयते (निगद्यते महर्षिभिरितिशेषः) ॥६६॥

श्रवणादिनाऽपि तस्या अनेकभेदत्वं प्रतिपादयति-उदारेति। उदारा महती कीर्त्तिर्यस्य तस्य हरेर्भगवतो रामचन्द्रस्य श्रवणं तद्यशोरामायणादेः श्रवणम्। तत्कीर्त्तनम्। मुदा हर्षेण तस्य सम्यक् स्मरणम। तस्य पदयोश्श्रितिः पादयोः सेवनम्। 'श्रिञ्सेवायाम् क्तिन्' पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशः। तस्य समर्चनं गन्धादिषोडशोपचारैः पूजनम्। तस्य वन्दनं च। दास्यं च। सख्युर्भावःसख्यं सखित्वं च एतेषां समाहारस्तथोक्तम्। आत्मार्पणम् आत्मनिवेदनम्। इतीत्थं सा भक्तिर्नवधा नवभिः प्रकारैर्गीयते महर्षिभिरिति शेषः।

तदुक्तं सप्तमस्कन्धे-

"श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इति ॥ ६६ ॥

(परा भक्ति का स्वरूप कह कर; उसका साधन दिखलाते हैं)

भाषा—वह भक्ति; हरि की उदार * कीर्ति का श्रवण, गान एवं स्मरण, उनके चरणों का पूजन तथा वन्दन, दास एवं सखा भाव का

* उदार कीर्ति—सबके प्रति सब प्रकार सहृदयता रखने और अर्थ धर्म काम मोक्ष आदि सब प्रकार के कल्याणों के देने का सुयश ।

ग्रहण तथा आत्म-समर्पण, इस तरह नव प्रकार की कही गयी है। ×

**एकादशीत्यादिमहाव्रतानि**
**कुर्य्याद्विवेधानि हरिप्रियाणि।**
**विद्धा दशम्या यदि साऽरुणोदये**
**स द्वादशीन्तूपवसेद्विहाय ताम् ॥६७॥**

अन्वयः—हरिप्रियाणि ( भगवत्प्रसादकराणि ) विवेधानि ( अरुणोदयवेधादिरहितानि ) एकादशीत्यादिमहाव्रतानि ( भगवत्प्रपत्तये ) स कुर्य्यात् (मुमुक्षुरनुतिष्ठेत्) यदि सा ( एकादशी ) अरुणोदये ( रवेररुणोदयकाले ) दशम्या विद्धा ( स्यात् ) तु(तर्हि)ताम् ( दशमीविद्धामेकादशीम् ) विहाय ( त्यक्त्वा) स ( श्रीवैष्णवः ) द्वादशीमुपवसेत् ॥ ६७ ॥

एवं मुक्तेःपरमसाधनत्वेन भक्तिमभिधाय वैष्णवैर्मुमुक्षुभिस्तत्साधनत्वेन कर्त्तव्यानि व्रतानि निर्णेतुमाह-एकादशीत्यादीति । हरिप्रियाणि हरेः संतोषकारकाणि। विगता वेधा येषां तानि विवेधानि अरुणोदयवेधादिरहितानि एकादशीत्यादिमहाव्रतानि स मुमुक्षुः कुर्य्यादित्यन्वयः। अरुणोदये अरुणोदयकाले यदि सा एकादशी दशम्या विद्धा स्पृष्टा स्यात्तदा तां विहाय द्वादशीमेवोपवसेदित्यर्थः ॥ ६७ ॥

## अपरा भक्ति के वहिरङ्ग साधनों का वर्णन।

भाषा—भगवत्प्राप्ति की इच्छा से साधक गण, परमात्मा को प्रसन्न करने वाले अरुणोदयवेधादिरहित एकादशी आदि महाव्रतों को करें। यदि वह एकादशी अरुणोदय कालमें दशमीतिथि से विद्धा हो, तो उस (दशमीविद्धा एकादशी) को त्यागकर शुद्ध द्वादशी व्रतको करें ॥६७॥

**शुद्धा दशम्या सुयुतेतिभेदा-**
**देकादशी सा द्विविधा च बोध्या।**

---

× आत्म समर्पण के बाद ही पराभक्ति होती है और श्रवणादि आठों के अनुष्ठान से जीव आत्म समर्पण के अधिकारी होता है। अपने को सर्वथा सदा परमात्मा के अधीन समझने को आत्म समर्पण कहते हैं।

वेधोऽपि बोध्यो द्विविधोऽरुणोदये
सूर्य्योदये वा दशमीप्रवेशात् ॥ ६८ ॥

अन्वयप्र—सा एकादशी शुद्धा (अरुणोदयसूर्य्योदयवेधरहिता) दशम्या सुयुता विद्धा चेतिभेदात् द्विविधा बोध्या। अरुणोदये सूर्य्योदये वा दशमीप्रवेशात् वेधोऽपि द्विविधो बोध्यः ( 'ज्ञातव्यो भवद्भिरितिशेषः) ॥६८॥

सा कर्तव्या एकादशी शुद्धा दशम्या सुयुता मिश्रा 'यु मिश्रणेऽमिश्रणे च'' इति स्मरणात् विद्धा चेति भेदात् द्विविधा बोध्या। स वेधः कथं कीदृक् इत्याकाङ्क्षायामाह-वेधोऽपीति। एकादशीभोगात्प्रागेव अरुणोदयेऽरुणोदयकाले अथवा सूर्योदये सूर्य्योदयकाले दशमीप्रवेशाद् वेधोऽपि द्विविधो बोध्य. ॥६८॥

भाषा०—उस एकादशी को, अरुणोदय एवं सूर्य्योदय काल में दशमी तिथिसे रहित रहने पर 'शुद्धा' एवं युक्त होने से विद्धा, इस तरह दो प्रकार की जाननी चाहिये और अरुणोदय एवं सूर्य्योदय,इन दो कालों में दशमी के प्रवेश होने से वेध को भी दो प्रकार का जानना चाहिये ॥ ६८ ॥

स पञ्चपञ्चप्रमितो ह्युषो बुधैः
कालस्तु षट्पञ्चमितोऽरुणोदयः।
प्रातस्तु सप्तेषुमितो निगद्यते
सूर्य्योदयः स्यात्तु ततः परं तथा ॥६९॥

अन्वयप्र—बुधैः पञ्चपञ्चप्रमितः (पञ्चपञ्चानां सङ्ख्यापरकः पञ्चपञ्चः पञ्चपञ्चाशत्तमदण्डात्मकः कालस्तेन प्रमितः प्रमाणितो विभाजितो वा यः षट्पञ्चाशत्तमदण्डात्मकोऽग्रिमकालः ) स (लोकवेदप्रसिद्धः ) उपः (कालः) निगद्यते ततः परम् ( उपः-

कालात्परम्) षट्पञ्चमितः (षट्पञ्चानां सङ्ख्यापूरकः षट्पञ्चस्तेन षट्पञ्चाशत्तमदण्डात्मककालेन प्रमितः प्रमाणितो विभाजितो वा यः सप्तपञ्चाशत्तमादिदण्डचतुष्टयात्मकः कालः) स 'अरुणोदयः'कालो निगद्यते। "प्रातश्चतस्रो घट्योऽरुणोदयः" इति वक्ष्यमाणग्रन्थस्वारस्यात् "षट्पञ्चाशद्घटिकान्ते चतस्रो घटिकास्तु याः। अरुणोदय इत्याहुः" इति ब्रह्माण्डोक्तवचनात् "उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदयः" इति स्कन्दनारदाभ्यामुक्तत्वात् "चतस्रो घटिकाः प्रातररुणोदयनिश्चयः" इति ब्रह्मवैवर्तवचनाच्च। (तस्य षट्पञ्चाशद्घटिकान्ते दण्डचतुष्टयात्मकाऽरुणोदयकालस्य कुक्षिप्रविष्टः) सप्तेषुमितः (सप्तेषुभ्यः परः सप्तेषुपरः तेन सप्तेषुपरेण मितः सप्तेषुमितः सप्तपञ्चाशत्तमदण्डात्मककालाऽव्यवहितोत्तरदण्डत्रयात्मकः कालः) प्रातस्तु (प्रातः काल एव) निगद्यते (कथ्यते) (तुशब्दो ऽत्रावधारणे) तथा ततः परन्तु सूर्योदयस्स्यात् (यथोषःकालाद्भिन्नोऽरुणोदयकालस्तथा रात्रिशेषे दण्डत्रयात्मकप्रातःकालाद्भिन्नः सूर्योदयकालोऽस्तीति वेदितव्यम्। अत्र तुशब्दो भेदे विद्यते "तु पादपूरणे भेदे समुच्चयेऽवधारणे। पक्षान्ते नियोगे च प्रशंसायां विनिग्रहे" इति मेदिनी। यद्यप्यत्र विद्धाशुद्धैकादशीज्ञानस्योपजीव्यत्वेनाऽरुणोदयसूर्योदयज्ञानस्यैवापेक्षितत्वं नोषःप्रातः-कालयोः तथापि ताभ्यां सहचरितत्वेन तयोरपि विमर्शः कृतः साहचर्यात्॥६६॥

ननूपजीव्यत्वेनारुणोदयादिकालज्ञानाय तत्तत्सञ्ज्ञानिर्णयमाह—सप्तेति। पञ्चपञ्चप्रमितः पञ्चपञ्चाशत्तमदण्डात्मककालादूर्ध्वकालो बुधैरुषःकालः स्मृतः प्रवेशकालादारभ्य षट्पञ्चमितः षट्पञ्चाशत्तमदण्डात्मककालादूर्ध्वकालो बुधैररुणोदयो निगद्यते। सप्तेषुमितःसप्तपञ्चमितः सप्तपञ्चाशत्तमदण्डात्मककालादूर्ध्वं बुधैः प्रातर्निगद्यते। ततः प्रातःकालात

परमवशिष्टभागः सूर्योदयः सूर्य्योदयकालस्स्यात्।एवं चोषःकालारुणोदयकाल-प्रातःकालसूर्य्योदयकालभेदात् कालचतुष्टयं सम्पन्नमिति बोध्यम्।

तदुक्तम् -

"पञ्चपञ्च उषःकालः षट्पञ्चारुणोदयः।
सप्तपञ्च भवेत्प्रातः शेषं सूर्य्योदयः स्मृतः" इति॥ ६९॥

भाषा०—विद्वान लोग दिनमान ( अहो रात्र ) ६० दण्ड में ५५ दण्ड बीतजाने पर जो छप्पन मा ५६ दण्ड है, उसको 'उषाकाल' ५६ दण्ड बीत जानेपर बाकी ४ दण्ड समय को 'अरुणोदय' काल ५७ दण्ड बीत जाने पर बाकी ३ दण्ड समय को 'प्रातः काल' और उसके पश्चात ( अर्द्ध सूर्य्य उदित होने के बाद ) सम्पूर्ण समय को 'सूर्य्योदय' काल कहते हैं॥ ६९॥

**प्रातश्चतस्त्रो घट्योऽरुणोदयो-**
**द्विनिश्चयः कालविमर्शिभिः कृतः।**
**तथात्र वेधप्रभृतेर्विभाग-**
**चतुष्टयं तैः कथितं महात्मभिः॥७०॥**

अन्वयम—अरुणोदयस्य स्पष्टीकरणपूर्वकं तत्र दशमीप्रवेशाद्वेधोऽपि विभज्यते—प्रातश्चतस्रेति त्रिभिः। ( हे सुरसुरानन्द ! ) कालविमर्शिभिः (कालज्ञैः) प्रातश्चतस्रो घट्यः ( रात्रिशेषे चतुर्दण्डात्मककालः ) अरुणोदयोद्विनिश्चयः ( अरुणोदय-कालस्योत्कृष्टनिश्चयः) कृतः। तथाऽत्र(यथाऽरुणोदय एव प्रातः कालो निर्णीतः तथैवाऽत्रैकादशीप्रकरणे ) तैर्महात्मभिः ( कालविमर्शिसर्वज्ञपुरुषैः ) वेधप्रभृतेः (अरुणोदयवेधसूर्य्योदय-वेधयोः) विभागचतुष्टयं कथितम्॥७०॥

किञ्च कालविमर्शिभिः कालविचारतत्परैर्ऋषिप्रभृतिभिः प्रातश्चतस्रो घट्यः चतुर्दण्डात्मकः कालः अरुणोदयोद्विनिश्चयः अरुणोदयस्य

उत्कृष्टत्वेन विनिश्चयः कृतः। तथात्र वेधपभूतवेधादरुणमहात्माभावभाग चतुष्टयं कथितम् ॥ ७० ॥

भाषा०- काल ज्ञानियों के द्वारा प्रभात कालीन चार दण्ड का समय, जो अरुणोदयकाल, निश्चित किया गया है, महात्माओं ने चारों तरह के वेध आदि का विचार भी उसी काल में कथन किया है ॥ ७० ॥

घटीत्रयं सार्द्धमथारुणोदय-
वेधोऽतिवेधो द्विघटिस्तु दर्शनात् ।
रविप्रभासस्य तथोदितेऽर्द्धं
सूर्ये महावेध इतीर्यते बुधैः ॥७१॥
योगस्तुरीयस्तु दिवाकरोदये
तेऽर्वाक् सुदापातिशयार्थबोधकाः ।
सर्वेऽपि वेधा मुनिभिर्विनिश्चिता
निर्णेतृभिस्तस्य तु तत्त्वदर्शिभिः ॥७२॥

अन्वयश्च—अथ (अरुणोदयादिकालनिर्णयानन्तरम्) (तत्र चतुर्दण्डात्मकरात्रिशेषे)रविप्रभासस्य दर्शनादर्वाक्(पूर्वम्) सार्द्धं घटीत्रयमरुणोदयवेधो बुधैरीर्यते । ( तत्रैवारुणोदयवेधे रविप्रभासस्य दर्शनादव्यवहितप्राक्) द्विघटिस्तु) तु पादपूरणं द्वे घट्यौ यस्मिन् स द्विदण्डात्मककालः)अतिवेध ईर्यते । तथा ( यथा रविप्रभासस्य दर्शनात्पूर्वमरुणोदयवेधातिवेधौ कथितौ तथैव रविप्रभासस्य दर्शनात्परम्) अर्द्धं सूर्ये उदिते ( सति ) महावेध इति ईर्यते कथ्यते ) इत्यरुणोदयवेधत्रयं कथितम् ॥७१॥

अन्वयप्र—अतः परं पूर्वप्रतिज्ञातसूर्य्योदयवेधः कथ्यते—दिवाकरोदये ( अर्द्धसूर्य्योदयात्परस्मिन् काले दशमीप्रवेशात् ) तुरीयस्तु योग ईर्य्यते (त्वत्रपादपूरणे; चतुर्थो योगवेधः पूर्वप्रतिज्ञातसूर्य्योदयवेधो वा कथ्यते) ननु पूर्वनिर्धारिताऽरुणोदये दशमीप्रवेशेनैव परदिनस्था एकादशी दशमीविद्धतया त्याज्या पुनर्वेधविभागो अनावश्यक इति शङ्कां परिहरन् श्रीमद्ग्रन्थकार आह—सुदोषातिशयार्थबोधका इति । तस्य(वेधस्य) तत्त्वदर्शिभिर्निर्णेतृभिर्विनिश्चितास्ते ( निरुक्ताः) सर्वे पि वेधाः (अरुणोदयवेधातिवेध महावेध सूर्य्योदयवेधाः ) अर्वाक् ( पूर्वम् ) सुदोषातिशयार्थबोधकाः ( सन्तीति शेषः)दशमीविद्धायामेकादश्यामुपवासे कृते सुदोषाणां महापापानामतिशयार्थं बोधयन्ति।अर्थात् अरुणोदयवेधयुतायामेकादश्यामुपवासे कृते यादृङ्महादोषा भवन्ति। ततोऽप्यतिशयमहादोषा अतिवेधयुक्तायामेकादश्यामुपवासे कृते भवन्ति । ततोऽप्यतिशयमहादोषा महावेधयुक्तायामेकादश्यामुपवासे कृते भवन्ति।ततोऽप्यतिशयमहादोषा सूर्य्योदयवेधयुक्तायामेकादश्यां व्रते कृते भवन्ति । उत्तरोत्तराऽऽधिक्यवतां महादोषाणां प्रायश्चित्तान्यपि न्यूनाधिकानि भवन्ति । वेधादीनां दोषावहत्वं तत्प्रायश्चित्तञ्चोक्तं स्मृत्यन्तरे ।

"दशमीशेषसंयुक्ता न तु कार्य्या कथञ्चन ।
जम्भस्येयं पुरा दत्ता दशमीशेषसंयुता ।
उपोषित्वा प्रमादेन प्रायश्चित्त द्विजश्चरेत् ।
प्रायश्चित्तमकुर्वाणस्तत्फलेन विनाशितः ।
स गच्छत्यन्धतामिश्रं नरकञ्च सुदारुणम् ।
अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीव्रतम् ।
दशमीशेषसंयुक्त प्रायश्चित्तमिदं चरेत् ।
तप्तकृच्छ्रं नरः कृत्वा गां दद्याच्च सवत्सकाम् ।

सुवर्णस्यार्धकं देयं तिलाढ्कसमन्वितम्" अत्र दशमीशेषसंयुक्ता इत्युपक्रम्य तिलाढ्कसमन्वितमित्युपसंहृतम्, तथाचोपक्रमोपसंहाराभ्यामतिवेधस्यैव प्रायश्चित्तमिदं व्यवस्थापितं न पुनर्वेधादेः

"उदयात्प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा।
संयुक्तैकादशी नाम वर्ज्येयं धर्मवृद्धये"

इति निषेधवचनबलेन संयुक्तैकादश्याः सूर्योदयाव्यवहितप्राक्दण्डद्वयवेधावगाहित्वेन दण्डद्वयवेधस्य च "अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः" इत्युक्तरीत्याऽतिवेधत्वात्। ननु संयुक्तैकादशीपदं वेधसामान्यसंयुतैकादशीपरं ननु अतिवेधसंयुतैकादशीपरमेवेति चेन्न॥

"अतिवेधस्तु वै प्रोक्तो जम्भासुरफलप्रदः"
"दशमीशेषसंयुक्ता न तु कार्या कथञ्चन।
जम्भस्येयं पुरा दत्ता दशमीशेषसंयुता"

इत्येकवाक्यान्तःपातिदशमीशेषसंयुक्त जम्भपदार्थयोरन्योन्यसम्बन्धित्वेनैकसम्बन्धिज्ञानविधया "नामैकदेशग्रहणे नाममात्रग्रहणम्" इति न्यायेन चातिवेधयुक्तैकादशीपरमेव संयुक्तैकादशीपदम्। अतिवेधप्रायश्चित्तानुरोधेनैव केवलवेधे तन्न्यूनं महावेधादिषु च तदधिकप्रायश्चित्तानुष्ठानं विहितमिति तत्त्वम्॥७२॥

तत्र वेधभेदमाह–घटीत्रयमिति। रविप्रभासस्य रवितेजसो दर्शनात्पूर्वं सार्द्धमर्द्धाधिकं घटिकात्रयमरुणोदयवेधो बुधैर्मतः। तथा सूर्यतेजोदर्शनात् पूर्वं द्विघटिः घटिकाद्वयमतिवेधः। सूर्येऽर्द्धे उदिते पूर्वत्र दशम्यादिना स्पर्शो महावेधः।

हेमाद्रावरुणोदयस्वरूपमुक्तम्—

'निशि प्राप्ते तु यामार्द्धे देववादित्रवादने।
सारस्वतोऽनध्ययनं चारुणोदय उच्यते"। यामार्द्धं मुहूर्त्तद्वयात्मकम्।

अत एव सौरधर्मेषु

"आदित्योदयवेलायां या मुहूर्त्तद्वयान्विता।

सैकादशी तु सपूर्णा विद्धाऽन्या परिकीर्तिता" इति।

यच्च स्कान्दे—

"उदयात्प्राक् चतस्रस्तु घटिका अरुणोदय" इति

तदपि द्वात्रिंशद्घटिकारात्रिमानपक्षे मुहूर्त्तद्वयस्य तावत्परिमाणत्वादुक्तमिति बोध्यम।

येऽपि ब्रह्मवैवर्त्ते-

"चतस्रो घटिकाः प्रातररुणोदयनिश्चयः।

चतुष्टयविभागोऽत्र वेधादीनां किलोदितः।

अरुणोदयवेधः स्यात्सार्द्धं तु घटिकात्रयम्।

अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः।

महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते।

तुरीयस्तत्र विहितो योग. सूर्य्योदये सति"

इत्यादयो वेधास्तेऽपि अर्वाग्दोपातिशयार्था इति निश्चेतव्यम ॥ ७१ ॥

अत एवाऽऽह योगस्तुरीय इति। दि वाकरोदये सूर्योदये सति तुरीयो योग इत्यन्वयः। वेधतत्त्वदर्शिभिर्निर्णेतृभिमुनिभिः अर्वाक् वेधकालात्पूर्वं वेधे सुदोषातिशयार्थबोधकाः सर्वेऽपि ते वेधा निश्चिता इत्यर्थः। यद्यपीत्थं कालवेधनिर्णयोऽत्र वैष्णवमते नाऽतीवोपयुज्यते तथापि मतान्तरे तूपयुज्यत एवेति सहृदयैराकलनीयम्॥ ७२ ॥

भाषा०—विद्वान लोग, सूर्य की प्रभा के दर्शनके पूर्वकेसाढ़े तीन दण्ड के समय में हुए वेध को 'अरुणोदय–वेध' प्रभा १ दर्शन के दो दण्ड पूर्व के समय में हुए वेध को 'अति वेध' प्रभा दर्शन से अर्ध सूर्य्य उदित होने तक के आधे दण्ड समय में हुए वेध को 'महावेध' और सूर्य्योदय हो जाने के बाद से सम्पूर्ण दिन-रातके अन्तर्गत हुए चौथे वेध को'योग-वेध' कहते हैं। तत्व दर्शियों ने, उपर्युक्त सर्व वेध-चारो वेध-का भिन्न

१ आधे सूर्य्य उदित होने के पूर्व के आधे दण्ड समय को 'सूर्य्य प्रभा दर्शन काल' माना है।

भिन्न २ विभाग, एक से दूसरे में महान दोषों की अपेक्षाकृत अधिकता बोध कराने के लियेही विशेष रूप से निश्चित किया है ॥७१॥७२॥

पूर्णेति सूर्योदयकालतः सा
या प्राङ्मुहूर्त्तद्वयसंयुता च ।
अन्या तु विद्धा परिकीर्त्तिता बुधै-
रेकादशी सा त्रिविधाऽपि शुद्धा॥७३॥
एका तु द्वादशीमात्राधिका ज्ञेयोभयात्मिका।
द्वितीया च तृतीया तु तथैवानुभयात्मिका॥७४॥
तत्राद्या तु परैवास्ति ग्राह्या विष्णुपरायणैः ।
शुद्धाप्येकादशी हेया परतो द्वादशी यदि ॥७५॥
उपोष्य द्वादशीं शुद्धान्तस्यामेव च पारणम् ।
उभयोरधिकत्वे तु परोपोष्या विचक्षणैः ॥७६॥

अन्वयम-अष्टषष्टितमे ६८-श्लोके उक्तायाः शुद्धाया विद्धायाश्च निर्णयं दर्शयति श्रीमद्ग्रन्थकारः—पूर्णेति चतुर्भिः । बुधैः या एकादशी सूर्योदयकालतः प्राङ्मुहूर्त्तद्वयसंयुता च(निरुक्तारुणो-दयकालेन मिश्रिता ) सैव शुद्धा पूर्णेति परिकीर्तिता ( कथिता ) अन्या तु निरुक्तारुणोदयकालाभ्यन्तरे दशमीप्रवेशात् विद्धा परिकीर्तिता। शुद्धाऽपि सा एकादशी त्रिविधा।एका तु द्वादशीमात्रा-धिका, द्वितीया चोभयाधिका तथैव ( पूर्वोक्तरीत्यैव ) तृतीया अनुभयाधिका ज्ञेया । अत्राऽऽधिक्यन्तु दिनद्वयसूर्य्यस्पर्शित्वम् । तथाच यस्या एकादश्या द्वादशी दिनद्वयसूर्य्यस्पर्शिनी सा एकादशी द्वादशीमात्राऽधिका । यदा एकादशीद्वादश्यौ दिनद्वयं सूर्य्यस्पर्शिन्यौ तदैकादशी उभयाधिका। यदा एकादशीद्वादश्यौ

दिनद्वयं नहि स्पृशतः तदा अनुभयाधिका ज्ञातव्या। अर्थात् यदा रविवासरे दशमी ५५।५९। ततः न्यूनैव नत्वधिका। तथा सोमवारे एकादशी५८।०ततःन्यूनैव नत्वधिका। भौमवारे च द्वादशी६०।बुधवासरेऽपि द्वादशी०।१।तदा द्वादशीमात्राधिका शुद्धा एकादशी ज्ञेया ॥१॥यदा रवौ दशमी५५।५९ततः नाधिका सोमे एकादशी ६०।०। मङ्गलवारे एकादशी ०।१। तदूर्ध्वमहोरात्रव्यापिनी द्वादशी बुधवारे द्वादशी ०।५। तदा शुद्धाऽप्येकादशी उभयाधिका ज्ञेया ॥ २ ॥ यदा रवौ दशमी ५५।५९। सोमे एकादशी ५७।० मंगलवासरे च द्वादशी ५८।० तदा शुद्धा एकादशी अनुभयाधिका ज्ञेया ॥३॥ तत्र ( तासु तिसृषु शुद्धैकादशीषु मध्ये ) आद्या तु ( द्वादशीमात्राधिका तु ) परैव ( परदिनस्थैव ) विष्णुपरायणैः (वैष्णवैः ) ग्राह्या ( उपोष्याऽस्तीति शेषः ) ( अस्यैव विवरणमग्रिमग्रन्थेन स्वयं श्रीमदाचार्यैः क्रियते) यदि परतः( पूर्वदिनस्थद्वादशीभोगात्परेऽह्न्यपि ) किञ्चिद्द्वादशी ( स्यादित्यर्थः ) तदा शुद्धाऽपि एकादशी हेया (त्याज्या भवतीति शेषः) शुद्धां द्वादशीमुपोष्य (उपवासं कृत्वा) तस्यामेवचपारणम् ( पलात्मिकायामपि परदिनस्थायां द्वादश्यामेव पारणं विधातव्यम् । तथाचोक्त पाद्मे—"अरुणोदयवेलायां कृत्य सर्वसमाचरेत्। कलायामपि द्वादश्यां पारणा तत्र चोदिता" इति। केचित्तु तत्र पारणाया असम्भवात् सूर्योदयात्प्रागेव पारणं विधातव्यमित्याहुः ॥७३॥७४॥७५॥७६॥

एवं तदुपजीव्यत्वेन कालवेधौ निर्णीय संप्रत्येकादशीभेदमाह पूर्णेति। सूर्योदयकालतः प्राङ्मुहूर्त्तद्वयसंयुता या एकादशी सा पूर्णा संपूर्णा शुद्धा। अन्या तु विद्धा। शुद्धाऽपि एकादशी वक्ष्यमाणरीत्या बुधैः त्रिविधा परिकीर्तिता ॥ ७३ ॥

तथैवाह-एकेति। तत्र द्वादशीमात्रं द्वादश्येवाधिका यस्यां सा। द्वितीया

उभयाधिका च। अनुभयाधिका तथा तृतीया। एवं च शुद्धा त्रिविधा द्वादशीमात्राधिका उभयाऽधिका अनुभयाधिका चेतिभेदात्। तत्राद्या परैव।

तथा च हेमाद्रिमदनरत्नधृतभागवतादितन्त्रे—

"सम्पूर्णैकादशी त्याज्या परतो द्वादशी यदि।
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्।
न गर्भे विशते जन्तुरित्याह भगवान्हरिः"। इति

उभयोराधिक्ये कैमुतिकन्यायेनैव प्राप्तपरत्रोपवासानुवादो भृगुनारदाभ्यामुक्तः।

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि"। इति

अनुभयाधिका तु पूर्वैवेत्थं संदेह एव अत्राऽऽधिक्याऽनाधिक्ये सूर्योदयानन्तरानुवृत्त्यननुवृत्तिरूपे बोध्ये न तु षष्टिघटिकोत्तरत्वतदभावरूपे ॥७४॥

तत्र ग्राह्यामाह तत्रेति। तत्र तासु आद्या द्वादशीमात्राधिका विष्णुपरायणैः वैष्णवैः परैव ग्राह्याऽस्ति यदि परतो द्वादशी वर्द्धमाना तदा शुद्धाऽपि एकादशी हेया-हातुं त्यक्तुं योग्या त्याज्या ॥ ७५ ॥

नन्वेवं व्रतलोपः स्यादतआह-उपोष्येति। तत्र शुद्धामेकादशीलेशरहिताम् षष्टिदण्डात्मिकां द्वादशीमुपोष्य तस्यामेव उपवासदिनोत्तरावशिष्टद्वादश्यामेव मुमुक्षुः पारणं कुर्यादिति शेषः। उभयोरधिकत्वे विचक्षणैः परैवोपोष्या ७६

भाषा—विद्वान लोग, सूर्योदय काल से पूर्व दो मुहूर्त-चार दण्ड एकादशी तिथि संयुक्त शुद्धा-एकादशी को पूर्णा, और उससे भिन्न को विद्धा कहते है; तथा उपर्युक्त शुद्धा एकादशी भी तीन प्रकार की कही गयी है * ॥ ७३ ॥

भाषा—पहली वह, जिसमें द्वादशी की मात्रा अधिक हो; दूसरी, जिसमें एकादशी—द्वादशी दोनों की मात्रा अधिक हो; और तीसरी, जिसमें दोनों की मात्रा अधिक नहीं—कम हो × ॥ ७४ ॥

---

*उपर्युक्त चारों श्लोको मे एकादशी की व्यवस्था इतनी चुस्त-रीति से की गयी है, कि उसके सहज-बोध में रुकावट सी पड़ जाती है; अतएव, सुगमता के लिए यहां कुछ खुलासा कर दिया गया है:—

इस श्लोक में जो यह कहा गया है, कि सूर्योदय काल से चार दण्ड पूर्व से ही एकादशी तिथि वर्तमान रहे, तो उसे शुद्धा एकादशी कहते हैं, इसका

इन तीनों में पहली में परतिथि का-द्वादशी का व्रत ही वैष्णवों के ग्रहण योग्य है। क्योंकि, यदि द्वादशी अपने बाद वाली—आगामी तिथि तक चली जाय, तो ऐसी अवस्था में शुद्धा एकादशी भी हेय है।

तब द्वादशी को ही उपवास-व्रत करके पिछली द्वादशी में

---

तात्पर्य यह नहीं है, कि उक्त चार दण्ड पूर्व और पहले से एकादशी वर्तमान रहने पर शुद्धा एकादशी होगी ही नहीं, बल्कि यह है, कि अधिक रहे तो अच्छा ही है, किन्तु अन्ततो चारदण्ड से कम नहीं होना चाहिये; क्योंकि इससे कम होने पर तो विद्धा एकादशी हो जायगी—शुद्धा नहीं, जैसा, कि पहले ही निरूपण किया जा चुका है ॥७३॥

× 'मात्राधिक्यवती' का तात्पर्य ऐसी तिथि से है, जो दो दिवस, सूर्य्य की विद्यमानता मे वर्तमान रहे। तात्पर्य यह, कि सूर्य के उगने से डूबने तकके अन्तर्गत जो तिथि रही हो, वही यदि दूसरे दिवस भी चली जाय तो वह तिथि मात्राधिक्यवती हुई। अतः द्वादशी मात्राधिक्यवती का अर्थ यह हुआ, कि द्वादशी दो दिवस सूर्य की विद्यमानता में वर्तमान रहे। द्वादशीमात्राधिक्यवती इस तरह कही जायगी, आज शुद्धा एकादशी में सूर्योदय हुआ और कल द्वादशी मे, पुनः शेष द्वादशी परसों भी चली गयी। इस अवस्था मे प्रथम द्वादशी में व्रत; और आगामी द्वादशी में पारणा होगी। द॰५५-५१। ए.५८-०द्वा. ६०-०२ २-५०, इसी प्रकार 'उभयमात्राधिक्यवती', को भी समझना चाहिये, अर्थात् सूर्य की विद्यमानता में दो दिवस एकादशी भी रहे और द्वादशी भी; यथा दशमी तिथि को चारदण्ड रात्रि शेष रहते एकादशी प्रवेश कर आगामी दिवस और रात्रि में बीतती हुई पुनः आगामी दिन मे भी आगयी। फिर इसी दिन सूर्य-विद्यमान कालमें द्वादशी भी प्रविष्ट हो गयी, फिर वह भी शेष दिवस एवं रात्रि मे गुजरती हुई आगे के दिन में भी पहुँच गयी। इस प्रकार सूर्य-विद्यमान-काल में, दो दिन एकादशी, और द्वादशी भी बीती। इसी को 'उभय मात्राधिक्यवती' कहते है। यथा दशमी ५५।५६ एकादशी प्रथम दिन ६०—० दण्ड द्वितीय दिन १ दण्ड; पुनः आजही इस एक दण्ड के बाद द्वादशी ६० दण्ड और फिर कलभी एकाध दण्ड। इस अवस्था मे प्रथम दिन की एकादशी में व्रत न कर दूसरे दिन की द्वादशी मिश्र एकादशी की जायगी और आगामी द्वादशी मे पारणा होगी। इसका एक दूसरा भेद इस प्रकार भी हो सकता है, कि जैसे आज दशमी १० दण्ड, पुनः एकादशी शेष दिनरात बीतती

पारण करना चाहिए। बुद्धिमान लोग, उभय की अधिकता होने पर पिछली एकादशी तिथि को ही उपवास-व्रत करते हैं

[ यहाँ पर 'अनुभयमात्राधिक्यवती' के विषय में इस लिये कुछ विचार नहीं किया गया है, कि वह वैष्णवों-स्मार्तों दोनों के लिये निर्विवाद है अर्थात् एकादशी को व्रत, द्वादशी को पारणा ] ॥ ७५ ॥ ७६ ॥

---

हुई कल्ह १२ दण्ड तक पहुंची फिर बाद द्वादशी प्रविष्ट हुई और उसी प्रकार आगामी दिन भी १५ दण्ड तक गयी; इस तरह सूर्य्य के विद्यमान काल में एकादशी भी और द्वादशी भी दो दो दिवस रही; क्योंकि दशमी को १० दण्ड दिन बीतने पर ही एकादशी प्रविष्ट होकर दूसरे दिन तक चली आयी है और उसी प्रकार द्वादशी भी। इसमें भी पिछली ही एकादशी व्रत होगा, क्योंकि पहिली तो दशमी से विद्धा हो गयी है। तीसरी 'अनुभयाधिकामात्रावती, वह है, जिसमें एकादशी और द्वादशी दोनो, सूर्य-विद्यमान काल में एकही एक दिन ही हो। यथा-दशमी ५० दण्ड एकादशी ५२ दण्ड द्वादशी ५३ दण्ड। इस में दो तिथियों में मेल, बराबर रात्रि के समय में ही हुआ करता है, इसी कारण दोनो तिथि सूर्य के विद्यमान काल में एकही एक दिन रही। यह स्मार्त्त एवं वैष्णव दोनो के लिये एकसा ग्राह्य है अर्थात् एकादशी ही को व्रत और द्वादशी को पारण। यही कारण है, कि उपर्युक्त दोनों का खास निर्णय आगामी श्लोकों में किया गया है, किन्तु इसका नहीं।

धर्म सिन्धु आदि निर्णय ग्रन्थों में एकादशी पर विचार करते हुए उपर्युक्त शुद्धा एकादशी के चार विभाग किये गये है, उसमें तीन तो इसी ग्रन्थ वाले विभाग है और एक 'एकादशीमात्राधिक्यवती' के नामका स्वतन्त्र भी है। इसको इसी ग्रंथ में वंजुलिनी और त्रिस्पृशा द्वादशी के नाम से लिखा है। इसका तात्पर्य यह है, कि शुद्धा एकादशी तो सूर्य्य विद्यमान काल में दो दिन रहे, परन्तु द्वादशी एकही दिन; यथा—आज सोमवार को दशमी ५५। ५६ पला है, अतएव ४ दण्ड रात्रि से ही एकादशी प्रारम्भ हुई फिर मंगलवार को सारा दिनरात ६० दण्ड एकादशी हीं रही. और फिर बुधवार को भी एकाध दण्ड पहुँची; इसके बाद द्वादशी प्रविष्ट हुई और वह ५५ दण्ड तक रही, पुनः ४ दण्ड रात्रि से त्रयोदशी का प्रवेश हो गया, इस प्रकार सूर्यविद्यमान काल में मंगलवार और बुधवार दो दिन तो एकादशी तिथि रही, परन्तु द्वादशी केवल बुधवार को ही, और इसी दिन ४ दण्ड शेष

**उन्मीलिनी वञ्जुलिनी सुपुण्याः**
**सा त्रिस्पृशाऽथो खलु पक्षवर्धनी।**
**जया तथाऽष्टौ विजया जयन्ती**
**द्वादश्य एता इति पापनाशनी ॥७७॥**

अन्वयम-अथो (एकादशीनिर्णयकथनानन्तरम्) उन्मीलिनी, वञ्जुलिनी, त्रिस्पृशा, पक्षवर्धनी, जया, विजया, जयन्ती, तथा पापनाशिनी इति (भेदतः) एता अष्टौ द्वादश्यः खलु इति निश्चयेन सुपुण्याः (ज्ञातव्याः) ॥ ७७ ॥

अथैकादशीसहचरितद्वादशीविषयकनिर्णयमप्याह-उन्मीलिनीत्यादि-इति। एता उन्मीलिनीप्रभृतयोऽष्टौ द्वादश्यः सुष्ठु पुण्यं यासां ताः सुपुण्या मुमुक्षुभिरुपोष्या इत्यर्थः।

तदुक्तं तत्तल्लक्षणपूर्वकं ब्रह्मवैवर्ते—

"उन्मीलिनी वञ्जुलिनी त्रिस्पृशा पक्षवर्धनी।
जया च विजया चैव जयन्ती पापनाशिनी।
द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज!"। इति

पाद्मे च—

"एकादशी तु संपूर्णा वर्द्धते पुनरेव सा।
द्वादशी न च वर्द्धेत कथितोन्मीलिनीति सा।
संपूर्णैकादशी यत्र द्वादशी च यथा भवेत्।
त्रयोदश्यां मुहूर्त्तोर्द्धं वञ्जुली सा हरिप्रिया।
शुक्ले पक्षेऽथवा कृष्णे यदा भवति वञ्जुली।
एकादशीदिने भुक्त्वा द्वादश्यां कारयेद्व्रतम्"।

---

रात्रि में त्रयोदशी प्रविष्ट हो गयी। इसमें द्वादशी का क्षय निश्चितरूपेण समझना चाहिये, क्योंकि विना ऐसा हुए 'एकादशीमात्राधिक्यवती' हो ही नहीं सकती। यदि द्वादशी भी आगामी दिन चली जाय, तो 'उभयमात्राधिक्यवती'। हो जायगी, इसी लिये इसे उपर्युक्त प्रकार सेही समझना चाहिये। इसमें वैष्णवों को दूसरे दिन की एकादशी का व्रत और आगामी त्रयोदशी में पारणा होगी। (उपर्युक्त विवेचनाओं से यह स्पष्ट है, कि अनुभयाधिका एकादशी के सिवा अन्य सभी अवस्थाओं में वैष्णवों के लिये द्वादशी ही व्रत होगा) ॥७४॥

नारदस्त्रिस्पृशालक्षणमाह—

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति।
कुहूराके यदा वृद्धि प्रयाते पक्षवर्द्धनी।
विहायैकादशी तत्र द्वादशीं समुपोषयेत्"।

ब्राह्मे-

"जया च विजया चैव जयन्ती पापनाशनी।
सर्वपापहरा ह्येताः कर्त्तव्याः फलकाङ्क्षिभिः
द्वादश्यां तु सिते पक्षे यदा ऋक्षं पुनर्वसु।
नाम्ना सा तु जया ख्याता तिथीनामुत्तमा तिथिः।
यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत्।
विजया सा तिथिः प्रोक्ता तिथीनामुत्तमा तिथिः।
यदा तु शुक्लद्वादश्यां प्राजापत्यं प्रजायते।
जयन्ती नाम सा ज्ञेया सर्वपापहरा तिथिः
यदा तु शुक्लद्वादश्यां पुष्यं भवति कर्हि चित्।
तदा सा तु महापुण्या कथिता पापनाशिनी" इति ॥७७॥

## द्वादशी वर्णन।

भाषा०—उन्मीलिनी, वञ्जुलिनी, त्रिस्पृशा, पक्षवर्धनी, जया, विजया, जयन्ती, पापनाशिनी, इस तरह सुपुण्या ( उत्तम पुण्यवाली ) द्वादशी आठ प्रकार की है + ॥ ७७ ॥

---

+ इस श्लोक में जो आठ प्रकार की द्वादशी कही गयी है, उसका विशेष वर्णन भिन्न ग्रन्थो में इस प्रकार है:—

पद्मपुराण—

उन्मीलिनी = जो सम्पूर्ण एकादशी आगामी दिन में भी बढ़कर चली जाती है, और इस पिछले दिन वाली एकादशी के उपरान्त द्वादशी प्रविष्ट होती एव पुनः इसी दिन समाप्त भी हो जाती है; किन्तु, नही तो इस दिन त्रयोदशी का प्रवेश हो, न यही बढ़कर आगामी दिन में जा सके, तो इसे उन्मीलिनी द्वादशी कहते हैं; ( यह 'एकादशी मात्राधिका' का ही एक भेद है )

वञ्जुलिनी = जहाँ सम्पूर्णा एकादशी के बाद द्वादशी प्रविष्ट होकर इस दिन रात में बीतती हुई आगामी दिन में भी एक दण्ड प्रविष्ट हो जाय, और

आषाढभाद्रोर्जसितेषु संगता
मैत्रश्रवोऽन्त्यादिगतद्व्युपान्त्यैः।
चेद्द्वादशी तत्र न पारणं बुधः
पादैः प्रकुर्याद्व्रतवृन्दहारिणी ॥ ७८ ॥

अन्वयप्र० आषाढभाद्रोर्जसितेषु ( आषाढभाद्रकार्तिकमासानां शुक्लपक्षेषु ) चेत् ( यदि ) या द्वादशी मैत्रश्रवोन्त्यादिगत-

---

उसके उपरान्त त्रयोदशी का प्रवेश हो, तो इसे वञ्जुलिनी कहते है। ( यह, द्वादशीमात्राधिका ही है )

नारद पुराण—

त्रिस्पृशा—एक ही दिन मे, एकादशी, द्वादशी और शेष रात्रि में त्रयोदशी का भी प्रवेश हो जाय, तीन तिथियों का स्पर्श होने के कारण इसे त्रिस्पृशा कहते है।

( यह भी एकादशी मात्राधिका का ही दूसरा भेद है। उन्मीलिनी से इसमे सिर्फ प्रभेद इतना ही है, कि उसमें द्वादशी, रात तक पूरी होकर ही समाप्त होती है, नही घटती; नही बढती, किन्तु इसमें द्वादशी, कुछ रात्रि रहते ही समाप्त हो जाती और बाद इसी दिन, त्रयोदशी का भी प्रवेश हो जाता है।

पक्षवर्द्धिनी—कृष्ण या शुक्ल, किसी पक्ष की यदि वृद्धि हो जाय, अर्थात् वह पक्ष १६ दिनो का हो जाय, तो उस पक्ष में द्वादशी व्रत होगा, इसी द्वादशी-व्रत को पक्षवर्द्धिनी कहते है।

अनुभयाधिका के सिवा तो सभी अवस्था मे वैष्णवों के लिये द्वादशी व्रत या दूसरी एकादशी का निर्णय हैहीं, अतएव, यह व्यवस्था इसी के लिये लागू होती देख पड़ती है।

ब्रह्मपुराण—

जया, विजया, जयन्ती और पाप नाशीनीः—

शुक्ल पक्ष की द्वादशी में, यदि पुनर्वसु-नक्षत्र का संयोग हो, तो जया; यदि श्रवण नक्षत्र का हो, तो विजया, यदि प्राजापत्य ( रोहिणी-नक्षत्र ) का हो, तो जयन्ती; और यदि पुष्य नक्षत्र का हो, तो पाप नाशिनी कहते है।

द्व्युपान्त्यैः पादैः सङ्गता ( अनुराधाश्रवणरेवतीनक्षत्राणां क्रमशः प्रथमद्वितीयतृतीयचरणसंयुक्ता स्यात् ) सा व्रतवृन्दहारिणी, ज्ञेया तत्र ( तस्यां द्वादश्यां ) बुधः पारणं न प्रकुर्य्यात् ॥७८॥

एवं व्रतार्हद्वादशीरुक्त्वा निषिद्धपारणद्वादशीनिर्णयमाह—आषाढेति। आषाढभाद्रोर्जसितेषु आषाढमासभाद्रमासकार्तिकमाससंबन्धिशुक्लपक्षेषु चेद्यदि द्वादशी मैत्रश्रवोन्त्यादिगतद्व्युपान्त्यैः पादैः क्रमेणानुराधाश्रवणरेवतीगताऽऽदिचरणद्वितीयचरणतृतीयचरणैः संगता संयुक्ता स्यात् तदा तत्र तस्यां द्वादश्यां पारणं बुधो न प्रकुर्यात्। कीदृशी द्वादशी सा व्रतवृन्दानाम् एकादशीव्रतसमूहानां हारिणी नाशिनीत्यर्थः।

तथोक्तम्—

"आभाकासितपक्षेषु मैत्रश्रवणरेवती।
संगमेनैव भोक्तव्यं द्वादशी द्वादशं हरेत्।
आद्ये हि पादे स्वपितीह विष्णुः।
मध्ये हि विष्णोः परिवर्त्तनं च।
रेवत्युपान्ते विजहाति निद्रां।
तत्राऽन्नभोजी नरकं व्रजेच्च।
आभाकासितपक्षेषु मैत्रश्रवणरेवती।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवः।
निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम्"।

किञ्च—

"मैत्राद्यपादे स्वपितीह विष्णुः।
श्रवोद्वितीये परिवर्त्तमेति।
रेवत्युपान्त्ये विजहाति निद्रां।
न पारणं तत्र बुधः प्रकुर्यात्"।

अत्रायं निष्कर्षः—एकपलोनषट्पञ्चाशद्दण्डात्मकदशम्या उपरि पलामात्रस्याऽप्या-ऽऽधिक्येऽरुणोदयवेधमाश्रित्य एकादशीं विद्धामपहाय द्वादशीमेवोपवसेत्। 'शुद्धान्तु एकादशीमेव' तथैवोक्तत्वादिति। आषाढभाद्रकार्तिकशुक्लद्वादशीषु तत्र क्रमेणाऽनुराधाश्रवणरेवतीनक्षत्रसंगतद्वादशी द्वादशैकादशीव्रतविघातिकेति। तत्र पारणनिषेध इति केचित्। अन्ये तूक्तयुक्त्याऽऽषाढसितपक्षीयानुराधाप्रथमचरणसंगतद्वादश्यां विष्णोः स्वापस्मरणात्तत्रैव पारणनिषेधः द्वितीयचरणाऽऽदिसंगतद्वादश्यां पारणकरणे न दोषः।

एवं भाद्रे श्रवणद्वितीयचरणसंगतसितद्वादश्यां विष्णोः परिवर्तनस्मरणात्तत्रैव निषेधो नान्यत्र रेवतीसंगतद्वादश्यामप्येवमेवेति वदन्ति ॥ ७८ ॥

भाषा०—आषाढ़, भादो एवं कार्तिक महीने के शुक्ल पक्ष की द्वादशी, यदि अनुराधा, श्रवण एवं रेवती के प्रथम-द्वितीय-तृतीयचरणों से युक्त हो, तो विद्वान लोग इसमें पारणा न करें, क्यों कि यह, व्रत-समूहों के पुण्य को हरण करने वाली है ॥ ७८ ॥

**मासे मधौ या नवमी सुयुक्ता**
**शुक्लाऽदितीशेन शुभेन भेन।**
**कर्के महापुण्यतमा सुलग्ने**
**जातोऽत्र रामः स्वयमेव विष्णुः ॥ ७९ ॥**

अन्वयप्र—मधौ ( चैत्रे ) मासे अदितीशेन शुभेन भेन (पुनर्वसुनक्षत्रेण) सुयुक्ता महापुण्यतमा या शुक्ला नवमी अत्र [अस्यां नवम्यां] कर्के सुलग्ने विष्णुः (व्यापकः) रामः स्वयमेव जातः ("आविरासीत्सकलया कौशल्यायां परःपुमान्" इत्यगस्त्यसंहितोक्तवचनादिभिः स्वयमेव परः पुमान् परमपुरुष—परवासुदेव—पुरुषोत्तम-महाविष्णु—आदिनारायणपदवाच्य त्रिपादविभूतावपि परधाम्नि स्थितो यो रामः स स्वयमेव प्रादुर्भूतः इतितत्वम्) ॥७९॥

अथश्रीरामनवमीव्रतनिर्णयमाह।

"मधुर्दैत्यो मधुश्चैत्रो मधूकोऽपि मधुः स्मृत" इति कोषात् मधौ चैत्रमासे शुक्ला नवमी या शुभेन शुभावहेन भेन नक्षत्रेण।

"नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्" इत्यमरः। सुयुक्ता कीदृशेन भेन अदितीशेन अदितिरीशः स्वामी यस्य स तथोक्तेन पुनर्वसुनक्षत्रेणेत्यर्थः कीदृशी नवमी महदतिशयं पुण्यं यस्यां सा। कर्के शोभने लग्ने विष्णुः स्वयमेवात्र एवंगुणगणविशिष्टायां नवम्यां रामो रामरूपः सन् जातः। अत एव सा रामनवमीतिलोकविख्याता ॥ ७९ ॥

भाषा०—चैत्र मास के शुक्ल पक्ष की पुनर्वसु नक्षत्रादि सहित

और महापुण्यतम कर्क लग्न से युक्त नवमी तथि में स्वयमेव विष्णु ( व्यापक ) राम अवतीर्ण हुए पर धाम से उतर आये ॥७९॥

**तामष्टमीवेधयुतां विहाय**
**व्रतोत्सवं तत्र तु वैष्णवश्चरेत्**
**असङ्ख्यसूर्य्यग्रहतोऽधिका सदा**
**या केवला सा नवमीप्युपोष्या ॥ ८० ॥**

अन्वयश्च—वैष्णवः अष्टमीवेधयुतां तां ( नवमीम् ) विहाय तत्र तु (अविद्धायाम्) व्रतोत्सवं ( व्रतमुपवासः, उत्सवः आनन्द-जनककार्य्यम् ) चरेत ( कुर्य्यात ) या (चैत्रशुक्ला ) नवमी केवला ( नाम पुनर्वसुनक्षत्रादिरहिता अपिअसङ्ख्यसूर्य्यग्रहतो-ऽधिका ( श्रेष्ठा ) साऽपि (श्रीवैष्णवैः) सदा उपोष्या (उपासितुं योग्या ) ॥ ८० ॥

वैष्णवोऽष्टमीवेधयुतां तां नवमीं विहाय तत्राऽविद्धायां सऋक्षायां व्रतोत्सवं व्रतं च उत्सवश्च स श्रीरामादिपूजनादिः चरेदाचरेत्कुर्य्यादि-त्यर्थः । या तु मधुमासशुक्ला नवमी केवला पुनर्वसुनक्षत्ररहिता साऽपि असङ्ख्यसूर्य्यस्य ग्रहतो ग्रहणतोऽधिका सापि मुमुक्षुभिर्वैष्णवैरुपोष्या ।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यपेरकारलोपः पिहितं पुरुषोत्तममित्यत्रेव । एवं च चैत्रशुक्लपक्षनवम्यां रामनवमीव्रतमिति निश्चितम् । तच्च परविद्धायां मध्याह्नव्यापिन्यां कार्य्यम् ।

तथा चोक्तमगस्त्यसंहितायाम्—

"चैत्रशुद्धा तु नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् "

दिनद्वयऋक्षयुक्तमध्याह्नव्याप्तावव्याप्तावेकदेशव्याप्तौ वा परैवो-पोष्या ।

तदुक्तं तत्रैव—

"नवमी चाऽष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां च दशम्यां पारणं भवेत्" । इति

तत्रैव—

"चैत्रे मासे नवम्यां तु जातो रामः स्वयं हरिः ।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ।
श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहाधिका ।
केवलाऽपि सदोपोष्या नवमीशब्दसंग्रहात् ।
तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमी व्रतम् ।"

किञ्चाऽपरमपि अगस्त्यसंहितायामुक्तम्—

"चैत्रे नवम्यां प्राक् पक्षे दिवा पुण्ये पुनर्वसौ ।
उदये गुरुगौरांशे स्वोच्चस्थे ग्रहपञ्चके ।
मेषं पूषणि संप्राप्ते लग्ने कर्कटकाह्वये ।
आविरासीत्सकलया कौशल्यायां परः पुमान् ।"

तत्र प्राक्पक्षे शुक्लपक्षे अन्यत्र तथा श्रवणात् । उदये लग्ने गुरुगौरांशे गुरुनवांशे

"तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा ।
तत्र जागरणं कुर्य्याद्रघुनाथपरो भुवि"
भुवीत्येतत्स्वर्गादिव्यावृत्त्यर्थम् ।
"प्रातर्दशम्यां कृत्वा तु संध्यायाः कालिकीः क्रियाः ।
संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः ।
ब्राह्मणान्भोजयेद्भक्त्या दक्षिणाभिस्तु तोषयेत् ।
गोभूतिलहिरण्याद्यैर्वस्त्रालङ्करणैस्तथा ।
रामम्भक्त्या प्रयत्नेन पूजयेत्परया मुदा ।
एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतम् ।
अनेकजन्मसिद्धानि पातकानि बहून्यपि ।
भस्मीकृत्य व्रजेदेतत्तद्विष्णोः परमं पदम् ।
सर्वेषामप्ययं धर्मो भुक्तिमुक्त्येकसाधनः ।
अशुद्धो वापि पापिष्ठः कृत्वेदं व्रतमुत्तमम् ।
पूज्यः स्यात्सर्वभूतानां यथा रामस्तथैव सः ।
यस्तु रामनवम्यान्तु भुङ्क्ते स च नराधमः ।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ।
अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम् ।
व्रतान्यन्यानि कुरुते न तेषां फलभाग्भवेत् ।

रहस्यकृतपापानि ख्यातानि सुबहून्यपि ।
महान्ति च प्रणश्यन्ति श्रीरामनवमीव्रतात् ।
एकामपि नरो भक्त्या श्रीरामनवमीं मुने ।
उपोष्य कृतकृत्यः स्यात् सर्वपापैः प्रमुच्यते ।
नरो रामनवम्यां तु श्रीरामप्रतिमाप्रदः ।
विधानेन मुनिश्रेष्ठ स मुक्तोनाऽत्रसंशयः" ।
विधानेनेत्यनेन प्रतिमादानविधिमाह–

सुतीक्ष्ण उवाच–

"श्रीरामप्रतिमा दानं विधानं वा कथं मुने ! ।
कथय त्वयि रामेऽपि भक्त्याऽस्य मम विस्तरात् ।

अगस्त्य उवाच–

कथयिष्यामि तद्विद्वन् ! प्रतिमादानमुत्तमम् ।
विधानं वाऽपि यत्नेन यतस्त्वं वैष्णवोत्तमः" ।

विधिश्चाऽपि तत्रैव–

"अष्टम्यां चैत्रमासे तु शुक्लपक्षे जितेन्द्रियः ।
दन्तधावनपूर्वं तु प्रातः स्नायाद्यथाविधि ।
नद्यां तडागे कूपे वा ह्रदे प्रस्रवणेऽपि वा ।
ततः सन्ध्यादिकाः कार्य्याः संस्मरन् राघवं हृदि ।
गृहमासाद्य विप्रेन्द्र ! कुर्य्यादौपासनादिकाः ।
दातुं कुटुम्बिनं विप्रं वेदशास्त्रापरं सदा ।
श्रीरामपूजानिरतं सुशील दम्भवर्जितम् ।
विधिज्ञं राममन्त्राणां राममन्त्रैकसाधनम् ।
आहूय भक्त्या सपूज्य वृणुयात्प्रार्थयन्निति ।
श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम ! ।
भक्त्याऽऽचार्य्यो भव प्रीतः श्रीरामोऽसि त्वमेव च ।
इत्युक्त्वा पूज्य विप्र तं स्नापयित्वा ततः परम् ।
तैलेनाभ्यज्य सुस्नायाच्चिन्तयन् राघवं हृदि ।
तत्र तैलेन चाभ्यज्य स्नापयित्वा प्रयत्नतः ।
श्वेताम्बरधरः श्वेतगन्धमाल्यानि धारयन् ।
अर्चितो भूषितश्चैव कृतमध्यान्हिकक्रियः ।
अर्चितः कृतार्चन ।

आचार्य्यं भोजयेद्भक्त्या सात्त्विकान्नैः सुविस्तरम्।
भुञ्जीत स्वयमप्येवं हृदि राममनुस्मरन्।
एकभुक्तव्रती तत्र सहाऽऽचार्यो जितेन्द्रियः।
शृण्वन् रामकथां दिव्यामहःशेषं नयेन्मुने!।
सायं संध्यादिकाः कुर्यात् क्रिया राममनुस्मरन्।
आचार्यसहितो रात्रावधःशायी जितेन्द्रियः।
वसेत्स्वयं न चैकान्ते श्रीरामार्पितमानसः।
ततः प्रातः समुत्थाय स्नात्वा संध्यां यथाविधि।
प्रातः सर्वाणि कर्माणि शीघ्रमेव समापयेत्।
ततः स्वस्थमना भूत्वा विद्वद्भिः सहितोऽनघ!।
स्वगृहे चोत्तरे देशे रामस्योत्तममण्डपम्।
स्वगृहे स्वगृहसमीपे।
चतुर्द्वारं पताकाढ्यं सुवितानं सुतोरणम्।
मनोरमं महोत्सेधं पुष्पाद्यैः समलंकृतम्।
शङ्खचक्रहनूमद्भिः प्राग्द्वारे समलङ्कृतम्।
गरुन्मच्छार्ङ्गबाणैश्च दक्षिणे समलङ्कृतम्।
मध्ये हस्तचतुष्काढ्यवेदिकायुक्तमायतम्।
प्रविश्य नृत्यगीतैश्च वाद्यैश्चाऽपि सुसंयुतम्।
पुण्याहं वाचयेत्तत्र विद्वद्भिः प्रीतमानसः।
ततः संकल्पयेदेवं राममेव स्मरन्मुने!।
अस्यां रामनवम्यां च रामाराधनतत्परः।
उपोष्याऽष्टसु यामेषु पूजयित्वा यथाविधि।
इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः।
श्रीरामप्रीतये दास्ये रामभक्ताय धीमते।
प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे।
अनेकजन्मसिद्धानि अनन्तानि महान्ति च।
विलिखेत्सर्वतोभद्रं वेदिकोपरि सुन्दरम्।
मध्ये तीर्थोदकैर्युक्तं पात्रं संस्थाप्य चार्चितम्।
सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत्।
ततः स्वर्णमयीं रामप्रतिमां पलमात्रतः
निर्मितां द्विभुजां दिव्यां वामाङ्कस्थितजानकीम्।
बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने!।

वामेनाऽधःकरेणाऽऽराद्देवीमालिङ्ग्य संस्थिताम् ।
सिंहासने राजतेऽत्र पलद्वयविनिर्मिते ।
पञ्चामृतस्नानपूर्वं संपूज्य विधिवत्ततः ।
मूलमन्त्रेण नियतो न्यासपूर्वमतन्द्रितः ।
दिवैवं विधिवत्कृत्वा रात्रौ जागरणं ततः ।
दिव्यां रामकथां श्रुत्वा रामभक्तैः समन्वितः ।
नृत्यगीतादिभिश्चैव रामस्तोत्रैरनेकधा ।
यामाष्टके तथा पूज्या गन्धपुष्पाक्षतादिभिः ।
कर्पूरागुरुकस्तूरीकह्लाराद्यैरनेकधा ।
पूजयन्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः ।
ततः प्रातः समुत्थाय स्नानसन्ध्यादिकाः क्रियाः।
समाप्य विधिवद्रात्रौ पूजयेद्विधिवन्मुने ! ।
ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित ।
पूर्वोक्त पद्मकुण्डे वा स्थण्डिले वा समाहितः ।
लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः ।
साज्येन पायसेनैव स्मरन्नामान्यनन्यधीः ।
ततो भक्त्या सुसंतोष्य आचार्यं पूजयेन्मुने !।
कुण्डलाभ्यां सरत्नाभ्यामङ्गुलीयैरनेकधा ।
गन्धपुष्पाक्षतैर्वस्त्रैर्विचित्रैः सुमनोहरैः ।
ततो रामं स्मरन् दद्यादेवं मन्त्रमुदीरयेत् ।
इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् ।
चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ।
श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः।
इति दत्वा विधानेन दद्याद्वै दक्षिणां भुवम् ।
अन्येभ्यश्च यथान्यायं गाहिरण्यादि शक्तित ।
दद्याद्वासोयुगं धान्यं यथा विभवमादृत ।
ब्राह्मणैः सह भुञ्जीत ततो दद्याच्च दक्षिणाम्
ब्रह्महत्यादिपापेभ्यो मुच्यते नाऽत्र संशयः ।
बहुना किमिहोक्तेन मुक्तिस्तस्य करे स्थिता ।
कुरुक्षेत्रे महापुण्ये सूर्यपर्वण्यशेषतः ।
तुलापुरुषदानाद्यैः कृतैर्यल्लभ्यते फलम् ।
तत्फलं लभते मर्त्यो दानेनाऽनेन सुव्रत !" ।

इतीत्थं श्रीरामप्रतिमादानसहितरामनवमीव्रतनिर्णयो राममन्त्रादिपरै मुमुक्षुभिरवश्यमेव परमादरेण द्रष्टव्यो मन्तव्य उपासितव्यःपलमात्रतइत्यत्र-

"गुञ्जाभिः पञ्चभिश्चैको माषस्तु परिकीर्तितः ।
दशमाषमितः　　कर्षपलकर्षचतुष्टयम्"

इति प्रमाणं बोध्यम् । किञ्चाऽत्र तत्तद्ग्रन्थोक्त रामनवमीव्रतपूजा विधिना षोडशोपचारैः सीताभरतादिभ्रातृसहितं सपार्षदं सभृत्यं सायुधं सहर्षिमन्त्रिगणं ससुग्रीवहनुमदादिवानरगणं रामं सम्पूजयेत् । तत्प्रकारो ग्रन्थान्तरेभ्योऽवगन्तव्यः विस्तरभयान् नेह लिख्यते इति ज्ञेयम् ॥ ८० ॥

भाषा—श्रीवैष्णगण, अष्टमीविद्धा नवमी को छोड़ कर वेधरहित नवमी में व्रत एवं उत्सव करे । पुनर्वसु नक्षत्रादि रहित नवमी मात्र भी असंख्य सूर्य्य ग्रहण से अधिक फल (महत्व) वाली है, वह भी श्री वैष्णवों के करने योग्य है ॥ ८० ॥

**पुष्यान्वितायां तु कुजे नवम्यां**
**श्रीमाधवे मासि सिते हलाग्रतः ।**
**भुवोऽर्चयित्वा जनकेन कर्षणे**
**सीताऽविरासीद्व्रतमत्र कुर्यात् ॥ ८१ ॥**

अन्वयप्र०—श्रीमाधवे मासि ( वैशाखे मासे ) सिते ( शुक्ले पक्षे ) कुजे ( मङ्गलवासरे ) पुष्यान्वितायां ( पुष्यनक्षत्र युक्तायाम् ) नवम्यां [ तिथौ ] जनकेन अर्चयित्वा ( पृथ्वीं पूजयित्वा ) भुवः ( पृथ्व्याः ) कर्षणे ( कृते सति ) हलाग्रतः सीता ( श्रीजानकी ) आविरासीत् ( प्रादुर्भूता ) अत्र ( पूर्वोक्त-जन्मतिथौ ) व्रतं कुर्य्यात् ॥ ८१ ॥

अथ जानकीनवमीव्रतनिर्णयमाह—पुष्येति । श्रीमाधवे मासि वैशाखे मासे सिते शुक्लपक्षे कुजे मङ्गलवारे पुष्यान्वितायां पुष्यनक्षत्रसयुक्तायां नवम्यां जनकेन भुवः कर्षणे कृते सति हलाग्रतः सीताऽऽविरासीत् प्रादुर्भूतेत्यर्थः । किं कृत्वाऽर्चयित्वाऽर्थाद्भुवमेव पूजयित्वा "सीतालाङ्गल

पद्धतिः" इत्युक्तेरेव तज्जातत्वात्तन्नाम्ना व्यपदेश इति भावः। अत्र अस्यां वैशाखशुक्लानवम्यां जानकीनवम्यां व्रतमुत्सवं पूजनादिकं कुर्यात् मुमुक्षुर्वैष्णव इति शेषः।

तथा चोक्तम्–

"मासोत्तमे महापुण्ये वैशाखे माधवप्रिये।
कुजवारे शुक्लपक्षे नवमीपुष्यसंयुता।
पृथिव्याः पूजनं कृत्वा जनकस्तु नरेश्वरः।
हलेन कर्षणां चक्रे सर्वेषां पश्यतां सताम्।
लाङ्गलस्य मुखाग्रात्तु रमा कन्या विनिर्गता।
भित्त्वा क्षितितलं सद्य. सीता नाम्ना बभूव सा। इति

इयमपि तुल्यन्यायेन पूर्ववत् पूर्वोणाविद्धा मध्यान्हव्याविन्येव ग्राह्या तथा दिनद्वयमध्याम्हव्यापिन्याम्तु परैवेति बोध्यम्। पूर्वविद्धानिषेधेन "अ॰ण्यो ग्रामकुक्कुटः"। तेनाऽरण्यो भक्ष्य इतिवत्परविद्धाया ग्राह्यत्वेन स्वीकारात्॥ ८१॥

भाषा॰ वैशाख महीना, शुक्ल पक्ष, मङ्गल दिन, पुष्य नक्षत्र से युक्त नवमी तिथी मे जनक जी के पृथ्वी की पूजा कर हल जोतने पर उस हल के अग्र भाग से, सीता जी आविर्भूतहुई, इस तिथि में व्रत करें॥ ८१॥

**स्वत्यां कुजे शैवतिथौ तु कार्तिके**
**कृष्णेऽञ्जनागर्भत एव साक्षात्**
**मेषे कपीट् प्रादुरभूच्छिवः स्वयं**
**व्रतादि ना तत्र तदुत्सवं चरेत्॥ ८२॥**

अन्वयः– कार्त्तिके (मासि) कृष्णे (पक्षे) शैवतिथौ (चतुर्दश्यां तिथौ) स्वात्यां (स्वातिनक्षत्रे) कुजे (मंगलवासरे) मेषे (मेषराशौ स्थितेसूर्ये) साक्षात् शिवः एव (परधाम्निस्थितः कल्याणमूर्त्तिरेव) कपीट् (कपीश्वरोहनुमान्) स्वयमेव अञ्जनागर्भतः प्रादुरभूत् (प्रकटी भूतः) तत्र पूर्वोक्त कार्तिक कृष्ण चतु-

दश्यां ) ना ( नरः ) तदुत्सवं व्रतादि (श्रीहनुमतः उत्सवं व्रतादि च ) चरेत् ( कुर्य्यात् )॥ ८२ ॥

अथ हनुमज्जन्मतिथिव्रतोत्सवविचारमाह–स्वात्यामिति । कार्तिके मासि, कृष्णे कृष्णपक्षे, शैवतिथौ शिवस्वामिके तिथौ चतुर्दश्याम स्वात्यां स्वातीनक्षत्रसंयुतायाम् मेषे मेषलग्नोदये,सूर्येऽस्तं गते सन्ध्याकाले,ईष्ट इतीट् कपीना वानराणामीट् कपीश्वरो हनूमान् अञ्जनागर्भतोऽञ्जनागर्भात् प्रत्यक्षं स्वयमात्मना शिव एव प्रादुरभूत्प्रकटो जात इत्यर्थः । तत्र कार्तिककृष्णचतुर्दश्यां तदुत्सवं तस्य हनुमतो जन्मव्रतपूजोत्सवं चरेदाचरेत्कुर्य्यादित्यर्थः । ननु–

"शालिशूकनिभाभासं प्रासूतेमं तदाऽञ्जना ।
फलान्याहर्तुकामा वै निष्क्रान्ता गहने वरा ।
एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः ।
रुरोद शिशुरत्यर्थं शिशुः शरवणे यथा ।
तदोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् ।
ददर्श फललोभाच्च ह्युत्पपात रविम्प्रति ।
बालार्काभिमुखो बालो बालार्क इव मूर्तिमान् ।
ग्रहीतुकामो बालार्कं प्लवतेऽम्बरमध्यग ।
एतस्मिन्प्लवमाने तु शिशुभावे हनूमति ।
देवदानवयक्षाणां विस्मय सुमहानभूत् ।
नाप्येवं बलवान्वायुर्गरुडो न मनस्तथा ।
यथाऽयं वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् ।
यदि तावच्छिशोरस्य ईदृशो गतिविक्रम ।
यौवनन्तु रामासाद्य कथ वेगो भविष्यति ।
तमनुप्लवते वायुः प्लवन्त पुत्रमात्मन ।
सूर्य्यदाहभयाद्रक्षंस्तुषारचयशीतलः ।
बहुयोजनसाहस्रं क्रामन्नेव गतोऽम्बरम् ।
पितुर्बलाच्च बाल्याच्च भास्कराभ्याशमागतः ।
शिशुरेष त्वदोषज्ञ इति मत्वा दिवाकरः ।
कार्यं चास्मिन् समायत्तमित्येव न ददाह सः ।
यमेव दिवसं ह्येष ग्रहीतु भास्कर प्लुतः ।
तमेव दिवस राहुर्जिघृक्षति दिवाकरम् ।

अनेन च परामृष्टो राहुः सूर्यं रथोपरि ।
अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ।"

इत्युक्ते राहुः प्रातःकालिकसूर्योपरागसंभवसत्त्वे प्रातः कालेऽमावास्यायामस्य हनुमता जन्म सभवति । अमावास्याप्रतिपत्सन्ध्योरेव ग्रहणसंभवात् । न चतुर्दश्यमावास्यासन्ध्योर्नवा रात्रौ सूर्यग्रहणसम्भव इति । न चतुर्दश्या हनुमतो जन्म सम्भवतीति चेन्न "मेषलग्ने प्रादुरभूत्" इति वचनात्कार्तिके नियमेन तुलां गतस्याऽर्कस्यास्तसमय एव तुलापेक्षया सप्तमस्य मेषलग्नस्य सम्भवाच्चतुर्दश्यामस्तं गते एव सन्ध्यायां हनुमतो जन्मेति सिद्धान्तात्। न चोक्तम् "प्रासूतेमं तदाऽञ्जना" "ग्रहीतुकामो बालार्कं ह्युत्पपात रविं प्रति" "तमेव दिवसं राहुर्जिघृक्षति दिवाकरम्" इत्यादि विरुध्येतैवेति वाच्यम्।सन्ध्याकालेऽस्तं समुपागते सूर्ये प्रादुर्भूते हनुमति चतुर्यामात्मकरात्रिव्यतीतानन्तरमुदयमानजपापुष्पोत्करसमबालार्कग्रहणकामवातात्मजोत्पतनस्य दिवा राहुकर्तृकसूर्यजिघृक्षाया एव समञ्जसत्वादित्यलम् । तथाच सन्ध्याकालव्यापिन्येव कार्तिककृष्णचतुर्दशी व्रतोत्सवार्हा दिनद्वयसंध्याकालव्याप्तौ तु परैवेति बोध्यम् ।

तदुक्तम्—

"ऊर्जे कृष्णचतुर्दश्यां भौमे स्वात्यां कपीश्वरः ।
मेषलग्नेऽञ्जनागर्भाच्छिवः प्रादुरभूत्स्वयम्" इति हनुमत्संहितायाम्॥८२॥

भाषा-मेष राशि एवं स्वाती नक्षत्र युक्त कार्तिक कृष्ण चतुर्दशी मंगलवार को, साक्षात् शिव (परधाम के महाशम्भु[१] नित्य मंगल-विग्रह) श्री हनुमानजी स्वयमेव अञ्जना के गर्भ से प्रकट हुए; अतएव, इस हनुमज्जयन्ती के दिन व्रत एवं उत्सव आदि करना चाहिये ॥ ८२ ॥

**वैशाखमासीयचतुर्दशी सिता**
**निशामुखे याऽनिलभेन संयुता ।**
**सोमेऽवतारो नृहरेरभूदथो**
**व्रतोत्सवं तत्र मुदा समाचरेत् ॥ ८३ ॥**

अन्वयप्र-अथा (हनुमज्जयन्ती कथनानन्तरम्) अनिलभेन संयुता

१ इस विषय को बृहद्ब्रह्म संहिता के ३ पाद १ अध्याय में देखो ।

( स्वातीनक्षत्रेण संयुक्ता ) या सिता ( शुक्ला ) वैशाखमासीय-चतुर्दशी तत्र ( तस्यां चतुर्दश्यां ) सोमे ( चन्द्रवासरे ) निशामुखे ( सायंकाले ) नृहरेः ( नृसिंहस्य ) अवतारोऽभूत् (तत्रैव) मुदा (हर्षेण)व्रतोत्सवं समाचरेत् (सम्यक् कुर्य्यात् ॥ ८३॥

अथ नृसिंहजयन्तीनिर्णयमाह-वैशाखेति। वैशाखमासे भवा वैशाखमासीया या वैशाखमासस्य सिता शुक्ला चतुर्दशी अनिलभेन वातस्वामिकस्वातीनक्षत्रेण संयुता तत्र तस्यां सोमे सोमवारे निशामुखे सायंकाले नृहरेर्नृसिंहस्याऽवतारोऽभूत् । तत्रैव मुदा हर्षेण व्रतोत्सव समाचरेत् ॥ ८३ ॥

भाषा–वैशाख मास, शुक्ल पक्ष, स्वाती नक्षत्र संयुक्त चतुर्दशी तिथि सोमवार के सायंकाल में श्रीनृसिंह जी का अवतार हुआ। अतएव, इस दिन व्रत और उत्सवादि ( श्रीवैष्णव गण को ) करना चाहिये ॥ ८३ ॥

स्मरेण विद्धा तु चतुर्दशी यदा
भवेद्धनाऽपत्यविनाशिनी तदा।
तत्रोपवासो न जनैर्विधेयो
महात्मभिर्विष्णुपरायणैरपि ॥ ८४ ॥

अन्वयप्र०–यदा चतुर्दशी स्मरेण ( कामदेवतया त्रयोदश्या ) विद्धा भवेत तदा तु ( तदैव सा चतुर्दशी ) धनाऽपत्यविनाशिनी ( ज्ञातव्या ) तत्र ( तस्या चतुर्दश्यां ) विष्णुपरायणैर्महात्मभिरपि जनैरुपवासो न विधेयः ( न कर्त्तव्यः ) ॥ ८४ ॥

यदा तु चतुर्दशी स्मरेण कामेन "कामः पञ्चशरः स्मरः" इत्यमरः। त्रयोदश्या अरुणोदये विद्धा भवेत् तदा तत्र त्रयोदशीविद्धचतुर्दश्यां विष्णुपरायणैर्महात्मभिर्जनैः उपवासो न विधेयः व्रतमुत्सवश्च न कर्त्तव्य इत्यर्थः। कीदृशी तद्विद्धा चतुर्दशी धनापत्यविनाशिनी ॥ ८४ ॥

भाषा–जब चतुर्दशी त्रयोदशी से विद्धा होती है, तब धन और

सन्तान के विनाश करने वाली होती है, अतएव. उस चतुर्दशी मे विष्णु परायण महात्मा गण भी व्रत न करैं ॥ ८४ ॥

( श्रीकृष्णाष्टमीव्रतनिर्णयः )

पक्षे निशीथे खलु मासि भाद्रे
कृष्णेऽथ कृष्णोऽजनि देवकीतः ।
सिंहं गतेऽर्के विधिभेन युक्ता
तत्राष्टमी या तु विधूदये बुधे ॥ ८५ ॥
जन्माष्टमी साऽत्र मुदा व्रतोत्सवं
कृष्णार्चनं जागरणं महाफलम् ।
अनेकजन्मार्जितपापनाशनं
कृष्णस्य कीर्त्तेः श्रवणं च कीर्त्तनम् ॥ ८६ ॥

अन्वयम०-अथ ( नृसिंहजयन्तीकथनानन्तरम् ) भाद्रे मासि कृष्णे पक्षे सिंह ( सिंहराशि ) गतेऽर्के ( सूर्य्ये ) निशीथे (अर्धरात्रौ) खलु ( खल्वत्रपादपूरणे ) विधिभेन ( रोहिणीनक्षत्रेण ) युक्ता या तु ( एव ) अष्टमी सा जन्माष्टमी (ज्ञातव्या) तत्र( तस्यामुपरोक्तगुणगणविशिष्टायामष्टम्यां ) बुधे ( बुधवारे ) विधूदये ( चन्द्रोदये ) देवकीतः कृष्णोऽजनि ( जातः ) अत्र (अस्यां जन्माष्टम्याम्) मुदा (हर्षेण) व्रतोत्सवं कृष्णार्चनम् (षोडशोपचारैः श्रीकृष्णस्य पूजनम्) कृष्णस्य कीर्त्तेः श्रवणम् [ सति सामर्थ्ये स्वयमेव] कीर्त्तनम् ( कथनं ) जागरणञ्च (कुर्य्यात् एवं कृते सति ] अनेकजन्मार्जितपापनाशनम् ( अतः परम् ) महाफल ( निरतिशयप्रेमात्मका-परभक्तिरूपं फल भवतीति वेदितव्यम् ) ॥ ८५ ॥ ८६ ॥

अथ चतुर्भ्यां कृष्णाष्टमीनिर्णयमाह पद्ध इति । भाद्रे मासि कृष्णे पक्षे अर्के सूर्ये सिंहं गते सति या अष्टमी विधिभेन "विधिर्ब्रह्मा स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः" इत्यमरः तस्य भ नक्षत्रं तेन ब्रह्मदैवाभिरूरोहिणीनक्षत्रेण युक्ता तत्र तस्यां सिंहार्करोहिणीनक्षत्रयुतभाद्रकृष्णाष्टम्यां निशीथेऽर्द्धरात्रे "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः । विधोरुदयो विधूदयस्तस्मिन् विधूदये चन्द्रोदये सति बुधे बुधवारे देवकीतः देवक्याः सकाशात् कृष्णो वासुदेवोऽजनि जात इत्यर्थः । दीपजनेतिजनयतो कर्त्त रिचिण् ८५

सा एवं गुणगणविशिष्टाऽष्टमी जन्माष्टमी कृष्णजन्माष्टमीति लोकप्रसिद्धा । अत्र अस्या पूर्वोक्तगुणाढ्यायां कृष्णजन्माष्टम्यां व्रतोत्सवं व्रतमुपवासम् उत्सवं नृत्यगीतादि मुदा हर्षेण कुर्यादिति शेषः। कृष्णार्चनं कृष्णस्यार्चनं षोडशोपचारैः पूजनम् । रात्रौ पूजनादि जागरणं कृष्णस्य कीर्त्तेः कीर्तिप्रकाशकस्य भागवतादेराचार्यमुखात् श्रवणं सति सामर्थ्ये स्वमुखेन कीर्तनं च कुर्यादिति सम्बन्धः । इदं च तत्र व्रतं कृष्णपूजनादि महाफलं महत्फलं यस्य यस्माद्वा तत् चतुर्वर्गप्रदमित्यर्थः । किञ्च अनेकजन्मभिरर्जितानामनेकविधपापानां नाशनम् निर्मूलनम् ॥ ८६ ॥

भाषा—सिंह—राशि के सूर्य होने पर भादो कृष्ण अष्टमी बुधवार की रोहिणी नक्षत्र युक्ता अर्द्धरात्रि में चन्द्रोदय होते, श्रीकृष्ण जी, श्रीदेवकी जी से प्रकट हुए हैं, ऐसी कृष्णजन्माष्टमी में उल्लास-पूर्वक व्रतोत्सव, श्रीकृष्णजी की पूजा-अर्चा एवं जागरण करने का महाफल है; और इस दिन श्री कृष्ण जी की कीर्ति का श्रवण-गान करना अनेक जन्मोपार्जित पाप का नाशक है ॥ ८५ ॥ ८६ ॥

**त्याज्याऽष्टमी चेदथ वाजिविद्धा**
**तथाऽग्निविद्धं विधिभं च हेयम् ।**
**चेदष्टमी नो विधिभेन युक्ता**
**महात्मभिर्विष्णुपरायणैस्तैः ॥ ८७ ॥**

अन्वयप्र०—अथ ( शुद्धाष्टमीविचारानन्तरम् विद्धाष्टमीस्वरूपं निदर्श्यते ) चेत् (यदि) अष्टमी ( जन्माष्टमी ) वाजिविद्धा

( सप्तमीविद्धा ) तथा विधिभं ( रोहिणीनक्षत्रम् ) अग्निविद्धम् ( कृत्तिकाविद्धम् ) ( भवेत्तदा ) हेयम् ( त्याज्यम् ) चेत् ( यदि विधिभेन (कृत्तिकावेधरहित रोहिणीनक्षत्रेण) युक्ता अष्टमी (सप्तमीवेधशून्याष्टमी भवेत्तदा) विष्णुपरायणैस्तै प्रसिद्धैः महात्मभिः नात्याज्या ( न हेया अर्थात् ग्राह्येत्यर्थः ॥८७॥

तत्र विशेषमाह-त्याज्येति । चेद्यदि अष्टमी वाजिविद्धा स्यात्तदा साऽष्टमी महात्मभिविष्णुपरायणैर्वैष्णवैस्त्याज्या नोपोष्येत्यर्थः । तथा विधिभं रोहिणीनक्षत्रञ्च अग्निविद्ध कृत्तिकानक्षत्रविद्धं हेयं त्याज्यमेव वेधश्चात्राप्यरुणोदयकालिक एव । कृत्तिकावेधविधुररोहिणीनक्षत्रेण युक्ता अष्टमी नो त्याज्या । केचित्तु एवंविचार. यदा अष्टमी यदि रोहिणी युक्ता न भवति तदा अयं भावः अष्टमी रोहिणी युता चेत् सप्तमी विद्धाऽपि ग्राह्या । कृतिकावेधस्यागोपि केवलरोहिण्या एव न त्वष्टमीयुतरोहिण्या इति । एवं च वेधनिषेधोऽत्राष्टमीरोहिणीयोगादन्यत्रैव बोध्य. ।

तथा चोक्तं नारदसंहितायाम्-

"विद्धाऽष्टमी जनैर्ग्राह्या सप्तम्यां रोहिणी यदि ।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् ।" इति

पाद्मेऽपि

'कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ।" इति

वराहसंहितायां च-

"सिंहार्के रोहिणीयुक्ता नभःकृष्णाऽष्टमी यदि" इत्युपक्रम्य-
'विद्धा कृष्णाष्टमी ग्राह्या रोहिणीसहिता नृप ।
रोहिणीसहिता चैव सर्वाघौघविनाशिनी ।" इति

नारदीयसंहितायां च-

"चन्द्रोदयेऽष्टमीपूर्वा रोहिणी न भवेद्यदि ।
तदा जन्माष्टमी सा च न जयन्तीति कथ्यते ।"

चन्द्रोदये रोहिणी न भवेदित्यन्वय इति वदन्ति तच्चिन्त्यम् * ॥८७॥

भाषा०—यदि अष्टमी, सप्तमी से एवं रोहिणी, कृत्तिका से विद्धा हो, तो वह विष्णुपरायण ( वैष्णव ) महात्माओं के लिये त्यागने योग्य है, किन्तु, यदि ( वेध रहित ) अष्टमी, ( वेध रहित ) रोहिणीसे युक्त हो, तो वह नहीं, अर्थात् वह ग्रहण योग्य है ॥ ८७ ॥

**विद्धा जयन्ती यदि सप्तमीयुता**
**शुद्धा तथा सा नवमीयुता चेत् ।**
**या रोहिणी वह्नियुता तु विद्धा**
**ज्ञेया च शुद्धा यदि सा परान्विता ॥ ८८ ॥**

अन्वय—"जयन्ती द्विविधा ज्ञेया विद्धाऽविद्धाविधानतः । विद्धा तु सप्तमीयुक्ता शुद्धा तु नवमीयुता ॥ रोहिणी कृत्तिका-युक्ता विद्धा शुद्धा परान्विता" इति नारदीयमतमुरीकृत्य भगवान् श्रीरामानन्दाचार्य्यः शिष्यान्प्रत्याह–विद्धेति । यदि सप्तमीयुता ( अष्टमी तदा ) विद्धाजयन्ती ज्ञेया ( ज्ञातव्या ) चेत् ( यदि )

---

*टीकोद्धृतवचननिर्धारितश्रीजन्माष्टमीव्रतं वैष्णवेतरपर ज्ञातव्यम्। अन्यथा' वर्ज्जनीया प्रयत्नेन सप्तमीसहिताऽष्टमी। सऋक्षाऽपि न कर्त्तव्या सप्तमीसंयुताऽष्टमी" इतिब्रह्मवैवर्त्तवचनम् "सम्पूर्णा चार्द्धरात्रे तु रोहिणी यदि लभ्यते । कर्त्तव्या सा प्रयत्नेन पूर्वविद्धा विवर्जयेत्" इतियाज्ञवल्क्यस्मृत्युक्तवचनम् । "पञ्चगव्यं यथा शुद्धं न ग्राह्यं मद्यसंयुतम् । रविविद्धा तथा त्याज्या रोहिणीसहिता यदि । जन्माष्टमी पूर्वविद्धां सऋक्षा सकलामपि । विहाय नवमीं शुद्धमुपोष्य व्रतमाचरेत् । सकलाऽपि सऋक्षाऽपि नवमीसंयुताऽपि च । जन्माष्टमी पूर्वविद्धा न कर्त्तव्या कदाचन । पलवेधेऽपि विप्रेन्द्र सप्तम्याश्चाष्टमी त्यजेत् । सुराया बिन्दुना स्पृष्टं गगाम्भःकलशं यथा" इति पाद्मवचनानि च सप्तमीविद्धाष्टमीनिषेधकानि भूरीणि पुराणवचनानि निर्विषयानि स्युः । मिथोविरोधश्च दुष्परिहरः स्यात् तस्माद्धिकारिभेदेनैव शास्त्राविरोधः सम्पाद्य इतिमीमांसकानां सरणिरितिदिक् ।

सा ( अष्टमी ) नवमीयुता ( तदा ) शुद्धा जयन्ती ज्ञेया ( ज्ञातव्या ) या तु रोहिणी वह्नियुता ( कृत्तिकायुता ) ( तदा ) विद्धा (विध्द्वाजयन्ती) ज्ञेया (ज्ञातव्या) यदि व परान्विता ( मृग शिरानक्षत्रेण युता रोहिणी भवेत् तदा ) सा ( जयन्ती ) शुद्धा ज्ञेया ( ज्ञातव्या । तिथिवेधनक्षत्रवेधोभयवेधभेदेन त्रिविधो वेधो बोद्धव्यः अर्थात् सप्तमीविद्धा कृत्तिकाविद्धा सप्तमकृत्तिकाभ्यां वा विद्धा या भाद्रकृष्णाष्टमी सा विद्धा जयन्ती ज्ञातव्या। या तु सप्तमी कृत्तिकावेधरहिता नवमीमृगशिरावेधयुता सा भाद्रकृष्णाष्टमी शुद्धा जयन्ती ज्ञातव्या। "अष्टमी कृष्णपक्षस्य रोहिणी ऋक्ष-संयुता। भवेत्प्रोष्ठपदे मासि जयन्ती नाम सा स्मृता" इति विष्णु धर्मोत्तरवचनाज्जयन्ती-अवगन्तव्या।

अथ-

"जयन्ती द्विविधा ज्ञेया विद्धाऽविद्धाविधानतः।
विद्धा तु सप्तमी युक्ता शुद्धा तु नवमी युता।
रोहिणी कृत्तिकायुक्ता विद्धा शुद्धा परान्विता।"

इति नारदीयोक्तमतमभिप्रेत्याह-विद्धेति।जयन्ती विद्धाऽविद्धेति भेदाद्द्वि विधा ज्ञेया। तत्र यदि सप्तमीयुक्ता तदा विद्धा यदि सैव नवमीयुक्ता तदा शुद्धा। एवं रोहिणी च द्विविधा यदि वह्नियुता कृत्तिकायुक्ता रोहिणी तदा विद्धा यदि तु परान्विता परनक्षत्रेण युता तदा शुद्धा।

येतु—

"अष्टमी सप्तमी विद्धा रोहिणी कृत्तिका युता।
दशम्येकादशीयुक्ता हन्ति पुण्यं पुराकृतम्"
इत्यादिवचनमवलम्ब्य विवदन्ते तेषां साहसमात्रमेवेति बोध्यम्॥८८॥

---

१ येतु वैष्णवाः "अष्टमी सप्तमीविद्धा" इत्यादिवेधमवलम्ब्य सप्तम्यादि विद्धाष्टम्याद्युपवासेन वैष्णवेतरेषामपि प्रत्यवायित्वं वदन्ति तेषां साहसमात्रम् तत्रैव तेषामधिकारात्।

इसमें विद्धा एवं शुद्धा जयन्ती का बिचार है।

यदि अष्टमी, सप्तमी युक्ता एवं रोहिणी, कृत्तिका युक्ता हो, तो विद्धा ( वेध×युक्ता ) और यदि अष्टमी, नवमी युक्ता एवं रोहिणी, मृगसिरायुक्ता हो, तो उसे शुद्धा कृष्ण जयन्ती जानना चाहिये ॥ ८८ ॥

**भाद्रेऽथ शुक्लेऽभिजिति प्रभुर्हरि-**

**र्या द्वादशी वैष्णवभेन संयुता।**

**तत्राऽदितावाविरभूच्च वामनो**

**व्रतोत्सवं तत्र मुदा समाचरेत्॥ ८६ ॥**

अन्वयप्र०—अथ ( श्रीकृष्णजयन्ती कथनानन्तरम् ) भाद्रे ( भाद्रपदे मासि ) शुक्ले (पक्षे ) वैष्णवभेन ( श्रवणनक्षत्रेण ) संयुता या द्वादशी तत्र ( तस्यां द्वादश्यां ) अभिजिति ( मध्याह्ने तत्रैवाऽभिजितः सत्त्वात् ) प्रभुः ( समर्थः ) हरिः ( भक्तानां सकल दुःखहर्त्ताभगवान् + श्रीरामः ) अदितौ वामनः ( वामानरूपं धारयन् ) आविरभूत् ( प्रकटितः ) तत्र ( द्वादश्याम् ) मुदा ( हर्षेण ) व्रतोत्सवं समाचरेत् ॥ ८६ ॥

---

× इसमें वेध तीन प्रकार के होते है—तिथिवेध, नक्षत्र वेध और तिथि नक्षत्र उभय वेध—एकादशी के प्रकरण में जिस प्रकार वेध कहा गया है वैसा ही यहाँ भी समझना चाहिये। इस व्रत में तीनों वेध त्याज्य है।

1 अदित्यां वीर्य्यवान पुत्रो भ्रातृणां वीर्य्य वर्धनः। समुत्पन्नेषु कृत्येषु तेषां सहाय करर से ॥१०॥ इति महर्षि वचनात परवासुदेव श्रीराम एव वामन रूपेणावतीर्णः। ततो लोकरक्षणार्थ मुपेन्द्रोऽभूरित्यर्थः—इति गोविन्द राजेन लिखितमिति ज्ञातव्यम्।

अथ वामनद्वादशीनिर्णयमाह भाद्र इति। भाद्रे मासे शुक्लपक्षे वैष्णवभेन विष्णुस्वामिकनक्षत्रेण श्रवणेन संयुता या द्वादशी। तत्र तादृशद्वादश्याम् अभिजिति मध्यान्हे तत्रैवाऽभिजितस्सत्त्वात् प्रभुर्हरिर्विष्णुः अदितौ वामनो वामनरूपः सन् आविरभूत् प्रकटो जात इत्यर्थः। तत्र तत्समये मुदा हर्षेण व्रतोत्सवं समाचरेत्॥ ८६॥

( वामन द्वादशी निर्णय )

भाषा—भादो शुक्ल द्वादशी के श्रवण—नक्षत्र युक्त मध्याह्नकाल में, सर्व विध समर्थ परवासु देव श्रीरामजी श्रीअदिति जी से वामन रूप में प्रकट हुए है अतएव, उस दिन आनन्द—पूर्वक व्रत एवं उत्सव करना चाहिये॥ ८६॥

चेद्द्वादशी च श्रवणस्पृशैका-
दशीस्पृशा तत्र तु विष्णुशृङ्खलः।
अनुत्तमां सिद्धिमवाप्नुयान्नर-
स्तस्मिन्नुपोष्याऽर्चनवीतकल्मषः॥ ९०॥

अन्वयप्र०—चेत् ( यदि ) द्वादशी ( भाद्रपदशुक्लद्वादशी ) एकादशीस्पृशा ( एकादशीविद्धा ) श्रवणस्पृशा ( श्रवणनक्षत्रयुता भवेत्। तत्र तु (तस्यामेव तिथौ) विष्णुशृङ्खलः ( विष्णुशृङ्खलनामको योगो ज्ञातव्यः ) तस्मिन् ( विष्णु शृंखलनामके योगे उपोष्य ( उपवासं कृत्वा ) अर्चनवीतकल्मषः ( पूजया पापरहितः ) नरः अनुत्तमां सिद्धिम् ( अर्थधर्मकाममोक्षरूपाम् ) अवाप्नुयात्॥ ९०॥

चेद्यदि द्वादशी भाद्रशुक्लद्वादशी एकादशीं स्पृशतीति एकादशीस्पृशा इगुपधत्वात्के टापि श्रवणस्पृशा च श्रवणं नक्षत्रमपि स्पृशति तदा विष्णुशृङ्खलः। एवंच मध्यान्हे एकादशीस्पर्शपूर्वकश्रवणयुतद्वादशी भाद्रशुक्ले विष्णुशृङ्खलयोगो नाम। इदंच श्रवणद्वादशीव्रतम् एकादशीयुतद्वादश्यां श्रवणयोगे कार्य्यम्।

तथा च मात्स्ये—

'द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशी यदि।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञकः।
तस्मिन्नुपोष्य विधिवन्नरः स क्षीणकल्मषः।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्॥" इति

विष्णुधर्मेऽपि—

"एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत्।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत्॥" इति

तदा तत्रैवैकादशीद्वादश्योरुपवासः कार्य्यः। यदा तु श्रवणमेकादशीं संस्पृश्य द्वादशीं स्पृशति तदा प्रशस्तेत्युक्तम्।

नारदीये—

"संस्पृश्यैकादशीं राजन् द्वादशी यदि संस्पृशेत्।
श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति॥" इति

यत्त 'उदयव्यापिनी ग्राह्या श्रवणद्वादशीव्रते' इति नारदीयवचन तत्पूर्वेद्युः शृङ्खलयोगाभावे दिनद्वये च श्रवणयोग उदयकाले च परदिन एव तद्योग उपवासविधायकम्।

द्वादश्यां श्रवणाभावे नारदीये—

'यदा तु प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित्।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता॥' इति
उपवासद्वयसामर्थ्ये तु उपवासद्वयं कार्य्यम्।

तदुक्तं भविष्ये—

'एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्।
न चात्र विधिलोपः स्यादुभयोर्देवतं हरिः॥" इति

विधिलोप एकादशीपारणहानिकृतः। तथाच तस्मिन् विष्णुशृङ्खले उपोष्य उपवासं विधाय अर्चनवीतकल्मषः सविधिभगवदर्चनेन वीतं कल्मषं यस्य सः नरोऽनुत्तमां श्रेष्ठां चतुर्वर्गरूपां सिद्धिं प्राप्नुयादित्यर्थः.९०

भाषा—यदि भादो-शुक्ल द्वादशी, एकादशी—विद्धा और श्रवण नक्षत्र से युक्त हो, तो विष्णु शृङ्खल योग होता है, उसमें व्रत एवं भगवान की पूजा अर्चा करने से मनुष्य, सकल पाप से रहित हो

अनुत्तमा सिद्धि (जिससे उत्तम अन्य दूसरी सिद्धि नहीं अर्थात् अर्थ, धर्म, काम, मोक्ष आदि )—की प्राप्ति करते है ॥ ९० ॥

**तथा यथाकालमतन्द्रितैस्तै-**

**रथाधिरोपादिकमुत्सवादिकम् ।**

**सदा विधेयं हरितोषणं परं**

**शुभप्रदं तद्बहुशास्त्रसम्मतम् ॥ ९१ ॥**

अन्वयप्र०-( यथैकादश्यादिव्रतमनुष्ठेयम् ) तथा ( तेन प्रकारेण ) [ यत् ] बहुशास्त्रसम्मतं परं हरितोषणम् ( निरतिशयहरिसन्तोषकारकम् ) शुभप्रद रथाधिरोपादिकम् उत्सवादिकमस्ति तत् (उत्सवादिकम्) अतन्द्रितैः (आलस्यरहितैस्तैःश्रीवैष्णवैः) यथाकालम् ( शास्त्रनिर्दिष्टसमये ) सदा ( प्रतिवर्षम् ) विधेय (विधातव्यम्) ॥ ९१ ॥

एवमन्यदपि भगवत्परितोषकं शास्त्रसम्मतमुत्सवादिकं कर्त्तव्यमेवेत्याह-तथेति । यथाकालं तत्तत्कालमनतिक्रम्यातन्द्रितैर्निरालस्यैस्तैर्यथोक्तद्व्रत निरतैर्वैष्णवैः रथाधिरोपादिकमुत्सवादिकं सदा प्रतिवर्षमावश्यकत्वेन विधेयं विधातुं योग्यं कर्तव्यमित्यर्थः। यतो बहुशास्त्रसम्मतं परं हरितोषणं विष्णुतोषकम् ।अत एव शुभप्रदं मोक्षप्रदमित्यर्थः। अधिरोपणमधिरोपः रथेऽधिरोपो रथाधिरोप आदिर्यस्य स तथोक्त। एव च आषाढशुक्लद्वितीयायां पुष्यनक्षत्रान्वितायां रथे सीतया सह रामं समारोप्य यात्रोत्सवं विधाय क्वचिदनक्षत्रायामपि तथा ब्राह्मणादीन् सन्तोषयेत् ।

तदुक्तं स्कान्दे—

"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता।
तस्यां रथे समारोप्य रामं मां भद्रया सह।
यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजाँस्तथा।
ऋक्षाऽभावे तिथौ कार्य्या यात्रा सा प्रीतये मम।"
इत्यादिना दोलोत्सवादीनां संग्रह ।

तथा हि दोलोत्सवमाह गारुडे—

"दक्षिणाभिमुखं देवं दोलारूढं सुरेश्वरम्।
सकृद्दृष्ट्वा तु गोविन्दं मुच्यते ब्रह्महत्यया।
दोलारूढं प्रपश्यन्ति कृष्णं कलिमलापहम्।
अपराधसहस्रैस्तु मुक्तास्ते नैव संशयः।
तावत्तिष्ठन्ति पापानि जन्मकोटिकृतान्यपि।
यावन्नान्दोलयेद्भूप! कृष्णं कंसविनाशनम्।" इति

एवं श्रीरामलीलाविवाहलीलोत्सवादिकमपि सहप्रमाणं बोध्यम् ॥९१॥

भाषा—अनेक शास्त्र सम्मत, परमात्मा को अतिशय संतुष्ट करने वाले एवं शुभ फल प्रद (मोक्ष रूप कल्याण के दाता) रथ यात्रा आदि उत्सवों को भी, उपर्युक्त एकादशी आदि व्रतों की तरह, आलस्य रहित होकर प्रति वर्ष योग्य कालमें—पुष्य नक्षत्र युक्त आषाढ शुक्ल द्वितीया में अथवा पुष्य नक्षत्र नही मिलने पर केवल शुक्ल द्वितीया में—करना चाहिये ॥ ९१ ॥

**कर्मप्रवाहेण तु चेतनस्य**
**मग्नस्य संसारमहार्णवे चिरम् ॥**
**उपर्य्यहो ससरतोऽवशस्य**
**कृपोद्भवत्येव हरेरहेतुका ॥ ९२ ॥**

अन्वयप्र०—तिङ्कल बड़गल श्रीवैष्णवाचार्य्याणां परस्परम् हरेः कृपानिर्हेतुका सहेतुकेत्याद्यष्टादशभेदाः [विकल्पाः]। तत्र "कर्मप्रवाहेण" ९२ इत्यारभ्य "कैवल्यमितिमन्यते" १०९ इत्यन्तेन श्रीमदाचार्य्यैर्ग्रन्थकारैःस्वतिङ्कलाचार्य्याणां सिद्धान्तम् निर्दिश्यते—संसारमहार्णवे चिरम् मग्नस्य, कर्म्मप्रवाहेण तु कर्मानुगुण्येनैव संसरतः, अवशस्य (अस्वतन्त्रस्य) चेतनस्य (जीवस्य) उपरि हरेः (भक्तानां समस्तप्रतिकूलानुकूलहरणसंप्रदानकर्तुः स्वतन्त्रस्य श्रीरामस्य) अहेतुकैव कृपा उद्भवति ॥ ९२ ॥

अथ–

"भेदः स्वामिकृपाफलान्यगतिषु श्रीव्याप्त्युपायत्वयो–
स्तद्वात्सल्यदयानिरुक्तिवचसोर्न्यासे च तत्कर्त्तरि ।
धर्मत्यागविरोधयोः स्वविहिते न्यासाङ्गहेतुत्वयो
प्रायश्चित्तविधौ तदीयभजनेऽणुव्याप्तिकैवल्ययोः ।

इत्यत्र भगवत्कृपा निर्हेतुका सहेतुका चेति भेदः । एवं फले मोक्षे तारतम्यं नास्ति अस्तीति भेद. । अन्यगतौ उपायान्तरे कर्मज्ञानभक्तियोगास्त्रयोऽपि स्वातन्त्र्येण मोक्षसाधनानि कर्मज्ञानयोगौ भक्तियोगसहकारित्वेन साधनभूताविति । श्रीव्याप्तिरणुत्वेन विभुत्वेन। उपायत्वं श्रीः पुरुषकारभूता उपायभूतेति। वात्सल्यं दोषभोगित्वं दोषादर्शित्वमिति। दया परदुःखासहिष्णुत्वं परदुःखनिराचिकीर्षेति।न्यासः स्वप्रवृत्तिनिवृत्तिः आत्मात्मीयभरसमर्पण तत्कर्तरि सर्वे प्रपत्तेरधिकारिण अशक्ताः प्रपत्तेरधिकारिण इति । धर्मत्यागः कर्मणां स्वरूपत्यागः फलत्याग इति। विरोधः उपायान्तराणि प्रपत्तिविरोधीनि अधिकारिविरोधीनीति । स्वविहिते विहितनित्यादिकर्मणां लोकसंग्रहार्थमनुष्ठानम्। आज्ञा कैङ्कर्य्यकोटावन्तर्भूतत्वादवश्यमनुष्ठेयेति। न्यासाङ्गे आनुकूल्यादिषु एकाङ्ग न्यूनप्रपत्तिन्यूनता नास्ति । अङ्गपञ्चकमङ्गसम्भावितस्वभाव इति । हेतुत्वे न्यासो भगवत्प्रसादहेतु. मोक्षहेतुरिति। प्रायश्चित्त कृतप्रपतिस्मरणं पुनः शरणागतिरिति। तदीयभजने उत्कृष्टवर्णवैष्णवेन निकृष्टवर्णवैष्णवोऽनुसरणीयः नानुसरणीय इति । अणुव्याप्तिः भगवानणुपु अणुः सर्वत्र विभुरिति । कैवल्यं विरजापारम् अवारमिति । द्वैविध्येन विकल्पितकृपादिभेदानष्टादशसिद्धान्तभूतान्पूर्वाचार्यनिश्चितानष्टादशभिः सविस्तरमाह–कर्मप्रवाहेणेति । संसारमहार्णवे संसारसमुद्र चिरं मग्नस्य कर्मप्रवाहेण कर्मपरम्परया संसरतो जन्ममरणात्मना कर्मफलं भुञ्जतोऽवशस्यास्वतन्त्रस्य चेतनस्य जीवस्य उपरि अहेतुकैव हरेर्भगवतो रामस्य काऽपि कृपा उद्भवति सैव मोक्षहेतुरिति भावः ।। ९२ ।।

भाषा०–संसार सागर में कर्म प्रवाह के द्वारा चिरकाल से डूबते बहते हुए विवश–जीवों के ऊपर श्री हरि की–सकल अमंगल हारी श्रीरामजी की–अकारण कृपा होती है ।। ९२ ।।

## मोक्षे मुमुक्षोर्नहि तारतम्यं
## फले प्रपन्नस्य तु सत्प्रपत्तेः ।।

अस्त्येव तद्विष्णुकृपोपलभ्ये

पतिं श्रियोऽनन्तगुणार्णवं तम् ॥६३॥

अन्वयप्र०–अनन्तगुणार्णब तं(वेदपुराणादिषुप्रसिद्धम्) श्रियःपतिं (सीतारूपायाःश्रियः स्वामिनं श्रीरामं) प्रपन्नस्य (प्रपत्ति कृतवतः मुमुक्षोः (प्रकृतिबन्धनं त्यक्तुमिच्छोः) (जनस्य) सत्प्रपत्तेः ( समीचीन*प्रपत्तेः ) विष्णुकृपोपलभ्ये (सर्वत्रव्यापकस्य श्रीरामस्य कृपामात्रेणैवप्राप्ये मोक्षे तु फले(मुक्तिरूपेफले) हि (इति निश्चयेन) तारतम्यं नास्ति ॥ ९२ ॥

मुमुक्षोः सत्प्रपत्तेः फले मोक्षे तारतम्यं नहि अस्ति। कीदृशे फले तद्विष्णुकृपोलभ्ये। कथं भूतस्य मुमुक्षोः अनन्तगुणार्णवं तं श्रियः पति श्रीसीतापति प्रपन्नस्य शरणागतस्येत्यर्थः॥ ६३ ॥

भाषा०–प्रकृति बन्धन त्यागने की इच्छा से अनन्तगुणों के समुद्र श्री रामजी के, शरणापन्न भक्तों की शरणागती के और भगवत्कृपा प्राप्त मोक्ष रूप फल में निश्चय ही कुछ भी तारतम्य ( छोटाई-बड़ाई) का भेद नही है ॥६३॥

भवन्त्युपान्तर एव सर्वे

स्वातन्त्र्यतस्ते खलु मोक्षसाधकाः

सुकर्मसंवेदनभक्तियोगा

अनुष्ठितास्तैस्तु प्रपत्तिनैष्ठिकैः॥ ६४ ॥

अन्वयप्र०–प्रपत्तिनैष्ठिकैः ( प्रपत्तौ निष्ठावद्भिः ) तैः (मुमुक्षुभिः ) अनुष्ठिताः सुकर्मसंवेदनभक्तियोगाः (शोभायमानाः कर्म्मयोगज्ञानयोगभक्तियोगाः ) उपायान्तरे ( भगत्प्राप्तौ मुख्योपायः शरणागतिस्तद्भिन्नोपायाः उपायान्तरे सन्ति)ते सर्वे ( सुकर्म

---

* समीचीनत्वम्—कायिकवाचिकमानसिकप्रपत्तेरेकरूपत्वम् ।

संवेदनभक्तियोगाः) स्वातन्त्र्यतःखलु(स्वातन्त्र्येणैव) मोक्षसाधका भवन्तीतिज्ञातव्यम् ॥९४॥

प्रपत्तिनैष्ठिकैः प्रपत्तौ निष्ठावद्भिः तैर्मुमुक्षुभिरनुष्ठिताः सुकर्मसंवेदनभक्तियोगाः शोभमानाः कर्मज्ञानभक्तियोगाः उपायान्तरे स्वातन्त्र्यतः स्वातन्त्र्येणैव खलु निश्चयेनैव मोक्षसाधका भवन्तीत्यन्वयः ॥ ९४ ॥

भाषा—शरणागति में निष्ठावाले एवं संसार—ममता—रहित भक्तों के द्वारा किए हुए कर्म—ज्ञान एवं भक्ति योग भी, मोक्ष के प्रधानोपाय शरणागति से भिन्न उपायान्तर है, और वे सब स्वतन्त्रता—पूर्वक मोक्ष के ही निश्चित—साधक है ॥९४॥

**अथोच्यते निर्भरता परैस्तैः**
**श्रीव्याप्तिरद्धा सुबुधैरणुत्वतः**
**प्रपञ्चनिर्मातृविरिञ्चिहेतु-**
**श्रीरामपादाब्जनिविष्ठमानसैः ॥ ९५ ॥**

अन्वयप्र० -अथ ( नाम कर्मयोगज्ञानयोगभक्तियोगरूपोपायान्तरकथनानन्तरम् ) प्रपञ्चनिर्मातृविरञ्चिहेतुश्रीरामपादाब्जनिविष्ठमानसैः निर्भरतापरैः ( श्रीरामेसन्न्यस्तभारत्वेन स्वभरणपोषणादिचिन्तारहितैः ) तैः (प्रपत्तिपरायणैः ) सुबुधैः अद्धा (वस्तुतः ) अणुत्वतः ( अणुत्वेन) श्रीव्याप्तिरुच्यते न तु विभुत्वेन ॥९५॥

अथ अनन्तरम् अन्यगतिविषयकनिश्चयानन्तरम । तैर्निर्भरतापरैः सुबुधैर्मुमुक्षुभिरद्धा साक्षात् अणुत्वतोऽणुत्वेनैव श्रीव्याप्तिरुच्यते कीदृशैः सुबुधैः प्रपञ्चस्य स्थावरजङ्गमात्मकविश्वस्य निर्माता निर्माणकर्त्ता यो विरिञ्चिर्ब्रह्मा। धाताब्जयोनिर्द्रुहिणोविरिञ्चिः कमलासनः” इत्यमरः । तस्याऽपि हेतुः कारणं यो रामः ।

"महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजन" इति कालवाक्ये रामं प्रति ब्रह्मोक्तेः । तस्य पादाब्जयोर्निविष्ठं मानसंचित्तं येषां तैः ॥९५ ॥

भाषा—तदनन्तर, सृष्टिकर्त्ता ब्रह्मा जी के कारण स्वरूप श्री राम जी के चरणारविन्द में संलग्न मनवाले पूर्ण निर्भर एवं श्रेष्ठ विद्वान मुमुक्षुओं ने, श्रीजी—श्रीसीताजी—की व्याप्ति अनुरूप से कही है ॥ ९५ ॥

**पुरुषकारपरा विनिगद्यते**
**सकमला कमला कमलप्रिया ।**
**इयमसौ कुशलैस्तदुपायता**
**नृभिरुपायसुशून्यपरैः परैः ॥ ९६ ॥**

अन्वयप्र०—उपायसुशून्यपरैः ( प्रपत्तिव्यतिरिक्तकर्म्मयोगादिरूपोपायशून्यैः मोक्षप्रधानसाधनभूतप्रपत्तिमात्रनिष्ठत्वेपि भगवदाज्ञया कर्माद्यनुतिष्ठद्भिः ) कुशलैः ( प्रपत्तिचतुरैः ) नृभिः ( महर्षिभिः ) कमलप्रिया ( अतएव )सकमला ( कमलपुष्पवती ) कमला इयमसौ (श्रीसीता) पुरुषकारपरा ( असौ सीता भगवते श्रीरामचन्द्राय प्रपन्नान् जनान् निवेदयतीति ) विनिगद्यते । परैः (अन्यैः)तदुपायता (तस्याः सीतायाः उपायत्वम्) विनिगद्यते॥९६॥

तदुपायता उपायत्वम् उपायसुशून्यपरैः उपायान्तररहितैः परैः उत्कृष्टैर्नृभिः इयमसौ कमला श्री. "कमला श्रीर्हरिप्रिया" इत्यमरः पुरुषकारपरा पुरुषकारभूता विनिगद्यते । कीदृशी कमला सकमला हस्तगृहीतकमलेत्यर्थः । पुनः कमलं प्रियं यस्याः सा ॥९६॥

भाषा०—शरणागति से भिन्न उपायों—कर्म्म, ज्ञान, भक्ति से रहित अर्थात् शरणागति में ही एक मात्र निष्ठावाले भगवान् की आज्ञा मानकर कर्मादि के अनुष्टान करनेवाले जग निपुण नर-श्रेष्ठों ने, इन कमल युक्त कमल-प्रिया श्री कमला जी ( श्रीसीताजी ) को १ पुरुषकारपरा

---

१ यह उपर्युक्त अर्थ में प्रचलित साम्प्रदायिक पारिभाषिक शब्द है ।

( श्री रामजी के शरणापन्न जनों को उनके आगे निवेदन करने वाली ) कहा है और बड़गल लोग इनको ही, मोक्ष का उपाय, कहा है ( ये मोक्ष के उपाय स्वरूप है अतः उसकी उपायता—( उपायत्व ) भी इनमें ही हुई )

**विभोश्च वात्सल्यमहार्णवस्य**
**वात्सल्यमिष्टं खलु दोषभोगिता**
**समुच्यते तैर्नृभिरस्वतन्त्रैः**
**सदा सदाचारपरायणैर्वरैः ॥९७॥**

अन्वयप्र०—सदा (सर्वदा) सदाचारपरायणैः अत एव वरैः (श्रेष्ठैः) अस्वतन्त्रैः ( भगवदधीनैः ) तैः ( मुमुक्षुभिः ) नृभिः (पुरुषैः)इष्टम् (प्रपन्नानामनुकूलम) वात्सल्य महार्णवस्य(दयासागरस्य ) विभोः ( व्यापकस्य श्रीरामस्य ) वात्सल्यम् खलु ( इति निश्चयेन ) [ प्रपन्नानां ] दोषभोगिता च ( दोषाणामपराधानां भोगित्वमेव) समुच्यते। अर्थात् यथा गोःस्ववत्सस्य शरीरगतमलादिकं स्वयमेव लेहित्वा मलरहितं करोति तथैव भक्तवत्सलो भगवान् भक्तस्वरूपाच्छादकमाकृतिकसमस्तदोषापनोदनं स्वयमेव कृत्वा यथारुचि स्वसामीप्यादिमुक्तिं प्रयच्छतीति–भावः ॥ ९७ ॥

वरैः श्रेष्ठैः सदा सर्वदा सदाचारपरायणैः समीचीनाचारनिष्ठैः अस्वतन्त्रैर्भगवत्परतन्त्रैः तैर्मुमुक्षुभिर्नृभिर्वात्सल्यमहार्णवस्य विभोः श्रीरामस्य खलु निश्चयेन इष्टं दोषभोगिता दोषभोगित्वं समुच्यते सम्यक् कथ्यत इत्यन्वयः ॥ ९७ ॥

भाषा—सर्वदा सदाचार—सम्पन्न अपने को भगवदधीन मानने वाले श्रेष्ठ प्रपन्न पुरुषों ने शरणागतों के अनुकूल दयासागर व्यापक श्री रामजी की वत्सलता प्रपन्नो की दोषभोगिता को निश्चित रूप से

कहा है ( अर्थात् जैसे गौ अपने बच्चों के शरीर गत मलादिओं को स्वयमेव चाट कर निर्मल कर देती है वैसाही भक्तवत्सल भगवान् भी जीवों के स्वरूपाच्छादक समस्त प्राकृतिक दोषो को अपनोदन कर भक्तों की यथा रुचि सामीप्यादि मुक्ति को देते हैं ) ॥ ९७ ॥

**दयाऽन्यदुःखस्य निगद्यतेबुधै-**
**रप्राकृतैस्तैरसहिष्णुता स्तुता।**
**कृपामहाब्धेः समुदारकीर्ते-**
**र्विष्णोरचिन्त्याखिलवैभवस्य ॥९८॥**

अन्वयप्र०—अप्राकृतै. ( प्रकृतिमनवलोकमानैः प्राकृतशरीरे अहन्ताममताशून्यैरित्यर्थः ) तैः ( ऐकान्तिकैः ) बुधैरचिन्त्याखिलवैभवस्य समुदारकीर्तेः कृपामहाब्धेर्विष्णोः ( व्यापकस्य ) [ जगत्कारणश्रीरामस्य ] स्तुता ( ऋषिभिः प्रशंसिता ) [ भगवति श्रीरामे या ] अन्यदुःखस्यासहिष्णुता ( विद्यते सा ) दया निगद्यते ॥ ९८ ॥

अप्राकृतैस्तैर्बुधैः अचिन्त्याखिलवैभवस्य समुदारकीर्तेः कृपामहाब्धेर्विष्णोर्दया अन्यदुःखस्यासहिष्णुतेति निगद्यते इत्यन्वयः। अचिन्त्यं चिन्तयितुमशक्यमखिलवैभवोयस्य स तस्य। समुदारा महती कीर्त्तिर्यस्य तस्य। कृपाया महाब्धिस्तस्य ॥ ९८ ॥

भाषा०—संसारिक-विकार से रहित उन ( प्रपन्न श्रीवैष्णव ) विद्वानों ने, चिन्ता से परे अखिल ऐश्वर्य्य एवं प्रचुर उदार कीर्त्तिवाले कृपामहासागर व्यापक एवं जगत्कारण श्री रामजी में जो अन्य ( शरणागतों ) के दुःखों की प्रशंसित-असहिष्णुता है, उसी को दया कहा है ॥ [ प्रशंसित—असहिष्णुता' का तात्पर्य्य, उसे सहन न कर दूर करने से है, और इसी कारण यहाँ असहिष्णुता के साथ प्रशंसित विशेषण है ] ॥ ९८ ॥

स्वीयप्रवृत्तस्तु निवृत्तिरिष्टो
न्यासोऽथ वेद्योऽपि बुधैर्विचक्षणैः ।
ऐकान्तिकैस्तत्त्वविचारदक्षैः
परात्मनिष्ठैः परमास्तिकैस्तैः ॥९९॥

अन्वयप्र०—अथ तत्वविचारदक्षैः परमास्तिकैर्विचक्षणैः ऐकान्तिकैर्बुधैरपि परात्मनिष्ठैः ( भगवन्निष्ठैः सद्भिः ) स्वीयप्रवृत्तेः स्वभरणपोषणादि व्यापारतः (निर्वृत्तिस्तु (निवृत्तिरेव) इष्टः अभिमतः ) न्यासो वेद्यः ( वेदितव्यः ) ॥ ९९ ॥

न्यासस्वरूपमुद्बोधयति-स्वीयेति। परात्मनिष्ठैर्भगवत्परायणैः परमास्तिकैर्गुरुवेदवाक्यनिष्ठैस्तैर्बुधैर्मुमुक्षुभिः स्वीयप्रवृत्तेः स्वप्रवृत्तेर्निवृत्तिरेव न्यासो-वेद्यो ज्ञातव्य इत्यर्थः । इष्टोपि स एव ॥ ९९ ॥

भाषा तत्वविचार में निष्णात, परम आस्तिक, विचक्षण; एवं ऐकान्तिक ( स्वस्वरूपनिष्ठ ) श्रीवष्णव विद्वान भी भगवन्निष्ठ होते हुए अपनी प्रवृत्ति (स्वभरण पोषणादिकव्यापार) की निवृत्ति को अभिमत-न्यास समझते है ॥ ९९ ॥

सर्वे प्रपत्तेरधिकारिणः सदा
शक्ता अशक्ता अपि नित्यरङ्गिणः ।
अपेक्ष्यते तत्र कुलं बलञ्च नो
न चाऽपि कालो न हि शुद्धता च ॥१००॥

अन्वयप्र०—हि ( यतः ) [ भगवता ] तत्र ( प्रपत्तौ ) कुलं बलञ्च नोऽपेक्ष्यते। नचाऽपि कालो नहि शुद्धता चापेक्ष्यते [अतः] सर्वे शक्ता (समर्था जनाः)अशक्ता अपि [जनाः] नित्यरङ्गिणः ( नित्यांदितस्य परब्रह्मणःश्रीरामस्य ) प्रपत्तेःसदा ( सर्वस्मिन् काले अधिकारिणः [सन्तीति शेषः] ॥ १०० ॥

तत्कर्त्तरि विशेषं बोधयति-सर्वे इति । शक्ताः समर्था अशक्ता असमर्था अपि सर्वे सदा सर्वदा अनेन कालनियमाभाव उक्तः अधिकारिणो ज्ञातव्या इत्यर्थः। अत एवाह तत्रेति । तत्र प्रपत्तौ कुलं बलं कालो वसन्तादिः शुद्धता च हि यतो नैवाऽपेक्ष्यत इत्यन्वयः ॥ १०० ॥

भाषा—भगवान् श्रीरामानन्द स्वामीजी अपने शिष्यों के प्रति कहतेहैं कि भगवान अपनी प्रपत्ति में जीवों के कुल ( जाति ) बल की और काल शुद्धता की अपेक्षा नहीं करते, इसी कारण समर्थ असमर्थ सभी जीव भगवान् की शरणागति के अधिकारी है ॥ १०० ॥

**धर्मत्यागोऽपि परमैकान्तिकैरुच्यते वरैः ।**
**इत्थं हि कर्मणां त्यागः स्वरूपस्याऽखिलस्य च ।१०१।**

अन्वयप्र०—इत्थंहि ( प्रपत्तिप्रकारेणैव ) वरैः (श्रेष्ठैः ) परमैकान्तिकैः (श्रीवैष्णवैः) कर्म्मणाञ्चाऽखिलस्य स्वरूपस्य (कर्तृत्वाभिमानत्यागपूर्वकसमस्तफलस्य ) त्यागोपि ( एव ) त्याग धर्म्मत्यागः उच्यते ॥ १०१ ॥

धर्मत्यागे विरोपमुपदिशति धर्मेति। वरैः श्रेष्ठैः परमैकान्तिकैर्मुमुक्षुभिः इत्थं कर्मणामखिलस्य स्वरूपस्यत्यागः धर्मत्याग उच्यते हि निश्चितोऽयमर्थः ॥ १०१ ॥

पूर्वोक्त प्रपत्ति के द्वारा ही श्री वैष्णवों में श्रेष्ठ परमैकान्तिक श्रीवैष्णवगण कर्मो के स्वरूपतः त्याग ( कर्तृत्व के अभिमान-त्यागपूर्वक समस्त फल के त्याग ) को ही धर्म्म त्याग कहते है ॥१००॥

**अथोपायान्तराण्येव प्रवदन्ति मनीषिणः ।**
**विरोधीनि प्रपत्तेः संबन्धज्ञानस्वरूपिणः ॥ १०२ ॥**

अन्वयप्र०—अथ (धर्मत्यागनिश्चयानन्तरम्) सम्बन्धज्ञानस्वरूपिणः (भगवतो विविधसम्बन्धज्ञानस्य यत्स्वरूपं तस्य वेत्तारः) मनीषिणः (बुद्धिमन्तः ) उपायान्तराण्येव ( सकाम कर्मयोगादीन्येव ) प्रपत्तेः ( भगवच्छरणागतेः ) विरोधीनि वदन्ति ॥१०२॥

विरोधभेदमाह-अथेति । संबन्धज्ञानस्वरूपमस्ति येषां ते संबन्धज्ञान-स्वरूपिणो मनीषिणः अथ त्यागनिश्चयानन्तरम् उपायान्तराण्येव प्रपत्तेर्विरोधीनीनि वदन्ति ॥ १०२ ॥

भाषा—भगवान के साथ जीव का जो नवविध सम्बन्ध है, इसके स्वरूप के ज्ञाता विद्वान् श्री वैष्णव गण,मोक्ष के दूसरे उपायों( कर्म योग ज्ञान योग भक्तियोग ) को प्रपत्ति के विरोधी कहते है ॥१०२॥

**लोकसंग्रहरणार्थन्तु श्रुतिचोदितकर्म्मणाम् ।**
**शेषभूतैरनुष्ठानं तत्कैङ्कर्य्यपरायणैः ॥१०३॥**

अन्वयप्र०—ननु कर्मयोगादेःप्रपत्तेर्विरोधित्वञ्चेत्तर्हि कथमनुष्ठीयते श्रीवैष्णवैरित्यत आह-लोकेति । तत्कैङ्कर्य्यपरायणैः (भगवत्कैङ्कर्य्यनिष्ठैः ) शेषभूतैः ( भगवच्छेषभूतैः श्रीवैष्णवैः ) लोकसंग्रहणार्थं तु ( एव ) श्रुतिचोदितकर्मणाम् ( वेदविहितकर्मणाम् ) अनुष्ठानं कर्त्तव्यमिति शेषः ॥ १०३ ॥

स्वविहिते भेदमाह—लोकेति । तत्कैङ्कर्य्यपरायणैर्भगवच्छेषभूतैर्लोकसंग्रहणार्थमेव श्रुतिचोदितकर्मणां वेदविहितकर्मणामनुष्ठानम् ।

तदुक्तं भगवता—

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति ॥ १०३ ॥

भाषा०—भगवत्कैङ्कर्य्य निष्ठ शेषभूत ( भगवान के यथेष्ट नियुक्ति के योग्य ) श्रीवैष्णव गण, लोक संग्रहके लिये वेदविहित कर्मो का अनुष्ठान करते है ॥१०३॥

**तन्न्यासाङ्गानुकूल्याद्यन्यतमस्य महात्मभिः ।**
**शेषवृत्तिपरैर्हानौ प्रपत्तिन्यूनता नहि ॥ १०४ ॥**

अन्वयप्र०—शेषवृत्तिपरैः ( शेषस्य भगवद्यथेष्टविनियोगार्हस्य जीवस्य या भगवदधीना वृत्तिस्तत्रैव परायणैः तदनुसंधायकैः )

महात्मभिः तन्न्यासाङ्गानुकूल्याद्यन्यतमस्य (आनुकुल्यसङ्कल्प, प्रातिकुल्यवर्जन,रक्षणविषयक विश्वास गोप्तृत्ववरणात्मनिक्षेप कार्प्पण्येषु कस्यचित्) हानौ (सत्याम्) नहि प्रपत्तिन्यूनता (भवतीति वेदितव्यम्) ॥ १०४ ॥

तन्न्यासस्य भगवत्प्रपत्तेर्यान्यङ्गानि आनुकूल्यादीनि तेषामन्यतमस्य शेषवृत्तिपरैर्महात्मभिर्हानौ त्यागे प्रपत्तिन्यूनता नह्यस्ति ॥ १०४ ॥

भाषा—शेष शेषी सम्बन्ध में परायण महात्मा गण कहते है, कि न्यास के अङ्गों (अनुकुलता का संकल्प, प्रतिकुलता का वर्जन, रक्षण विषयक विश्वास, गोप्तत्ववरण, आत्मनिक्षेप, और कार्प्पराय रूप शरणागती के छ अंगों) में एकाध की हानि होने से भी शरणागती में न्यूनता नहीं होती ॥ १०४ ॥

**रामप्रसादहेतुर्हि न्यासोऽयं विनिगद्यते ।**
**नित्यशूरैः सदाचारैर्हरिपादाब्जमानसैः ॥१०५॥**

अन्वयप्र०—सदाचारैः ((सतामाचारसम्पन्नैः) (अतएव) हरिपादाब्जमानसैर्हि (भगवच्चरणचित्तैः) महात्मभिः नित्यशूरैः (भगवत्पार्श्ववर्त्तिनित्यभटैः) अयं न्यासः (पूर्वोक्त न्यासः) रामप्रसादहेतुर्विनिगद्यते (कथ्यते) ॥ १०५ ॥

अथ न्यासो रामस्य भगवतः प्रसादहेतुरिति सदाचारैर्न्नित्यशूरैर्नि-गद्यते ॥ १०५ ॥

भाषा—भगवत्पार्श्ववर्ती नित्यजीवगण और सदाचार सम्पन्न श्रीभगवान के चरण कमल मे चित्तवाले महात्मागण, इस न्यास को श्रीराम जी की प्रसन्नता का कारण कहते हैं ॥ १०५ ॥

**कृतप्रपत्तिस्मरणं प्रायश्चित्तमथोच्यते ।**
**परमाप्तैश्च तन्निष्ठैः कोविदैस्तैर्मुमुक्षुभिः॥१०६॥**

अन्वयप्र०—अथ तन्निष्ठै भगवन्निष्ठैः परमाप्तैश्च कोविदैर्मुमु-क्षुभिः (श्रीवैष्णवैः) कृतप्रपत्तिस्मरणम् प्रायश्चित्तमुच्यते ॥१०६॥

प्रायश्चित्तवधौ विशेषमाह कृतेति । अथान्यासविषयकविशेषकथनानन्तरम् तैर्भगवन्निष्ठैः परमाप्तैर्मुमुक्षुभि कोविदैः कृतप्रपत्तिस्मरणमेव प्रायश्चित्तमुच्यते इत्यन्वयः ॥ १०६ ॥

भाषा—परम आप्त भगवन्निष्ठ विद्वान मुमुक्षुश्रीवैष्णव गण; की हुई प्रपत्ति के स्मरण कोही प्रायश्चित्त कहते है ॥ १०६ ॥

**उत्कृष्टवर्णैरपि वैष्णवैस्तै-**
**निकृष्टवर्णः स तदीयसेवने ।**
**तथाऽनुसर्त्तव्य इतीष्यते बुधैः**
**शास्त्रैर्विधेये विधिगोचरैः परैः ॥ १०७ ॥**

अन्वयप्र०—विधिगोचरैः ( शास्त्रविहितकर्मनिष्ठैः ) परैः ( प्रधानैः ) उत्कृष्टवर्णैः (उच्चजातिभिरपि) तैर्वैष्णवैः शास्त्रैः विधेये ( विधातुं योग्ये ) तदीयसेवने ( तदीयानां भगवत्सम्बन्धिनां ब्राह्मणत्वादिहीनानां क्षत्रियादीनां सेवने सेवानिमित्तम्) स निकृष्टवर्णः क्षत्रियादिर्वैष्णवः अनुसर्त्तव्यः । तथा ( पूर्वोक्तप्रकारेण निकृष्टैरपि वैष्णवैः ब्राह्मणादिर्वैष्णवोऽनुसर्त्तव्य इतिवेदितव्यम् ) इति बुधैरिष्यते ॥१०७॥

अथ तदीयभजने विशेषमाह उत्कृष्टेति उत्कृष्टो वर्णो येषां ते उत्कृष्टवर्णास्तैर्वैष्णवैर्ब्राह्मणादिभि. तस्य भगवत इमे तदीया वैष्णवास्तेषां सेवने भजने समाराधने निकृष्टवर्णः क्षत्रियादिः स वैष्णवोऽनुसर्त्तव्य. कीदृशे तदीय सेवने शास्त्रैर्विधेये इति बुधैरिष्यते ॥ १०७ ॥

भाषा—शास्त्र विहित कर्म में निष्ठावाले ( साधारण श्रीवैष्णव ) और उच्च जाति–प्रधान ब्राह्मणादि श्रीवैष्णवगण, ब्राह्मणजातीतर भगवन्निष्ठ ( परमैकान्तिक ) क्षत्रियादिजातिके श्रीवैष्णवोंकी शास्त्रविहित सेवा के निमित्त अनुसरणकरैं. तथा क्षत्रियादिजाति के साधारण श्री वैष्णवगण उच्चजातिके परमैकान्तिक श्री वैष्णवों की सेवा के

निमित्त अनुसरण करें ऐसा विद्वानो का कथन है × ॥ १०७ ॥

**अणुव्याप्तौ च भगवान णुषु त्वणुरुच्यते ।**
**पराकाष्ठावरैर्विज्ञैर्मतविद्भिर्महात्मभिः ॥१०८॥**

अन्वयप्र०–पराकाष्ठापरैः ( परमैकान्तिकैः ) विज्ञैर्मतविद्भिः ( मतज्ञातृभिः ) महात्मभिः (श्रीवैष्णवैः) अणु व्याप्तौ ( भगवत अणुपुजीवेषु व्याप्तौ अन्विष्यमाणायाम् ) भगवांस्तु अणुषु अणुः उच्यते ( कथ्यते ) ॥ १०८ ॥

अणुव्याप्तौ विशेषमाह–अणिवति । पराकाष्ठापरैर्मुमुक्षुभिर्विज्ञैर्महात्मभिर्मतविद्भिर्मताभिज्ञैरणुव्याप्तौ अणुषु भगवानणुरेवोच्यत इत्यर्थः॥१०८॥

भाषा–विज्ञ मतवेत्ता परमैकान्तिक श्रीवैष्णव महात्माओं ने, जीव भगवत की व्याप्ति अणु के भी अणु रूप से कही है ॥१०८॥

**आत्मारामैस्तथोपायस्वरूपज्ञानिभिश्च तैः ।**
**मतज्ञैर्विरजापारं कैवल्यमिति मन्यते ॥१०९॥**

अन्वयप्र०–मतज्ञैः (सम्प्रदायकोविदैः ) उपायस्वरूपज्ञानिभिः आत्मारामैः ( भगवन्निष्ठत्वेन परमैकान्तिकैः अथवा स्वरूप-निष्ठत्वेनैकान्तिभिः श्रीवैष्णवैः) विरजापारं कैवल्यं मन्यते॥ १०९॥

मतज्ञैः उपायस्वरूपस्य ज्ञानमस्ति येषां तैः आत्मनिपरमात्मनि आरमन्ते इत्यात्मारामास्तैर्मुमुक्षुभिर्विरजायाः पारं विरजापारमेव कैवल्यमिति मन्यते ॥ १०९ ॥

भाषा— सम्प्रदायवेत्ता, उपाय के स्वरूप को जानने वाले भगवन्निष्ठ (परमैकान्तिक) श्रीवैष्णवगण, कैवल्य विरजा (नदी) के उस पार मानते है ॥ १०९ ॥

---

× तात्पर्य्य यह है कि––सभी–उच्चजातिनीचजातिके–वैष्णव, सभी–उच्च नीच जातिके वैष्णवोके यथा योग्य यथासाध्य––अन्नवस्त्रद्रव्यसुन्दरवाणीद्वारा–आराधन ( सेवा ) करें ऐसा हि श्री सम्प्रदाय मे सर्वत्र प्रचलित है ।

जितेन्द्रियश्चात्मरतो बुधोऽसकृत्
सुनिश्चितं नाम हरेरनुत्तमम् ।
अपारसंसारनिवारणक्षमं
समुच्चरेद्वैदिकमाचरन् सदा ॥११०॥

अन्वयप्र०—जितेन्द्रिय आत्मरतः ( एकान्तिकश्रीवैष्णवः ) बुधः ( विद्वान् ) सदा ( सर्वदा ) वैदिकम् ( वेदविहितकर्म ) आचरन् ( अनुतिष्ठन् ) अपारसंसारनिवारणक्षमं सुनिश्चितम् अखिलश्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धमनुत्तमम् हरेर्नाम ( राम कृष्णादि ) असकृत् ( निरन्तरं यथास्यात्तथा ) समुच्चरेत् ॥ ११० ॥

एवं बहुधा मोक्षसाधनमभिधाय सकलवेदपुराणादिसम्मतं तन्महामहर्षिविनिश्चितं बहुप्रमाणप्रमितं सर्वसुसाध्यं सर्वसमाराध्यं झटिति फलप्रदं प्रमेयं सुसारभूतं तदाह जितेन्द्रिय इति । जितानीन्द्रियाणि येन स आत्मनि परमात्मनि रमते तत्र रतरतिरनुरक्तिर्यस्येतिवा तादृशो बुधो ज्ञानवान् अपारसंसारनिवारणक्षमं मोक्षप्रदमनुत्तमं सर्वसाधनश्रेष्ठं हरेर्नामैव समुच्चरेत् कालाऽव्यवधानेन सम्यगभ्यसेत् असकृत्पुनःपुनरभ्यसेत् किं कुर्वन् सदा वेदविहितं कर्माचरन् ।

तदुक्तम्—

"तेपुस्तपो जुहुवुः सस्नुरार्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते ।
अहोवत श्वपचोऽतोगरीयान्
यज्जिह्वाग्रे वर्तते नाम तुभ्यम्" । इति

किञ्च तत्र तत्र बहुधाजामिलादिप्रसङ्गे हरिनामोच्चारणमाहात्म्य प्रदर्शनं महर्षिभिर्वर्णितमिति तत् तत एवावगन्तव्यमित्यलम् ॥११०॥

भाषा—जितेन्द्रिय एवं परमात्मा में अनुराग रखने वाले विद्वान, वेद विहित कर्मों का सदा आचरण करते हुए, अपार संसार—जन्म मरणादिक बाधा—के निवारण में सक्षम अन्यतम श्रेष्ठ, श्रीहरि

(श्रीरामकृष्णादि) के नामों का निश्चित रूप से निरन्तर स्मरण करें ११०

**एवं तेऽभिहितं प्राज्ञ ! प्रकृष्टं मुक्तिसाधनम्**
**उत्तमं सर्वधर्माणां शृणु धर्मं सनातनम् ॥१११॥**

अन्वयप्र०—हे प्राज्ञ ! (सुरसुरानन्द !) एवं (पूर्वोक्तप्रकारेण प्रकृष्टं (श्रेष्ठं) मुक्तिसाधनं ते (तुभ्यम्) अभिहितम् (मया कथितम्) सर्वधर्माणां (मध्ये) उत्तमं (श्रेष्ठं) सनातनं धर्म्मं शृणु ॥ १११ ॥

एवं बहुधाऽभिहितं मुक्तिसाधनोपदेशमुपसंहरति-एवमिति। हे प्राज्ञ ! सुरसुरानन्द ! प्रकृष्टं मुक्तिसाधनं त्वया पृष्टं ते तुभ्यम् एवमभिहितम् सर्व-धर्माणां मध्ये उत्तमं सनातनं धर्मन्त्वं शृणिवत्यन्वयः ॥ १११ ॥

भा०—हे सुरसुरानन्द हमने इस तरह तुमसे मुक्ति का श्रेष्ठ साधन कहा। अब सब धर्मों मे श्रेष्ठ सनातन धर्म्म को सुनो ॥१११॥

**दानं तपस्तीर्थनिषेवणं जपो**
**न चास्त्यहिंसासदृशं सुपुण्यम्।**
**हिंसामतस्तां परिवर्जयेज्जनः**
**सुधर्म्मनिष्ठो दृढधर्मवृद्धये ॥११२॥**

अन्वयप्र०—दानं, तपः, तीर्थनिषेवणं, जपश्च, अहिंसा सदृशं सुपुण्यम् (पुण्यजनकम्) नास्ति। अतः सुधर्मनिष्ठः (श्रीवैष्णवधर्मनिर्वाहकः) जनः दृढधर्मवृद्धये तां हिंसां (परपीडनरूपां) परिवर्जयेत् ॥ ११२ ॥

तदेवाह-दानमित्यादि। सुपुण्यं दानादि अहिंसासदृशं नैवास्ति अतोऽहिंसाऽभाव एव सर्वधर्मश्रेष्ठ इति भावः अतोदृढधर्मवृद्धये सुधर्मनिष्ठो मुमुक्षुर्जनस्तां हिंसां परिवर्जयेत् ॥ ११२ ॥

भा०—दान, तप, तीर्थ निवास और जप में अहिंसा के समान श्रेष्ठ पुण्य नहीं है, अतःउत्तम धर्म—श्रीवैष्णवधर्म—में ही निर्वाह करने

वाले मनुष्य, धर्म की दृढता की वृद्धि के लिये, पर पीड़न रूप हिंसा के त्याग करें ॥ ११२ ॥

**श्रयन्ति धर्मास्तु तया विहीनान्**
**सुवक्रगाः सिन्धुमिवापि नद्यः ।**
**काष्ठस्थवह्नेरिव घातको हरे-**
**श्चराचरस्थस्य च जन्तुहिंसकः ॥११३॥**

अन्वयप्र०—धर्मास्तु ( स्वयमेव ) सिन्धुं (समुद्रं) सुवक्रगाः ( कुटिलाः ) नद्य इव तया ( हिंसया ) विहीनान् ( रहितान् जनान् ) श्रयन्ति ( आश्रयन्ति )। जन्तुहिंसकः काष्ठस्थवह्नेरिव चराचरस्थस्य हरेर्घातकः । अतो धर्मास्तान् जन्तुहिंसकान् नाऽऽश्रयन्तीतिभावः ॥ ११३ ॥

तया हिंसया विहीनान् रहितान् जनान् धर्मा निखिलाः स्वत एव श्रयन्ति अवलम्बन्ते सिन्धुं वक्रगाः कौटिल्यगा अपि नद्य इव च हेतौ यतो जन्तुहिंसको जनः काष्ठस्थवह्नेरिव चराचरस्थस्य हरेरेव घातकः ।

तथा चोक्तम्—

'नाऽहिंसासदृशन्दानं नाऽहिंसासदृशं तपः ।
नाऽहिंसासदृशं तीर्थं पुण्यभूषणशोभने ।
यथा वक्रगता नद्यः सिन्धौ चैव विशन्ति हि ।
तथैव धर्माः श्रयन्ति हिंसाहीनेषु साधुषु ।
यथा काष्ठस्थितो वह्निस्तथा देहे वसाम्यहम् ।
तस्माद्धिंसन्ति ये जन्तून् घातका मे न संशयः ।
न च काष्ठोद्भवं मांसं नोपलाच्च तृणादपि ।
हिंसया जायते मांसं तस्मात्तत्परिवर्जयेत् ।
ये च हिंसन्ति वै जन्तून् जलजांस्थलजांस्तथा ।
मज्जन्ति नरके घोरे कल्पकोटिशतैरपि'' इति ।
श्रुतिश्च "न हिंस्यात्सर्वाभूतानि''इति ॥ ११३ ॥

भाषा—जैसे नदियाँ, टेढी-मेढ़ी-बहती हुई समुद्र में जा मिलती है,

उसी प्रकार धर्म भी अहिंसक पुरुषका आश्रयलेताहै । जीवों के हिंसाकरने वाले पुरुष, काष्ठ में स्थित अग्नि की तरह चराचर में व्याप्त जो भगवान उनका घात करने वाले है, अतः; धर्म उन हिसको का अवलम्बन नही करता ॥ ११३ ॥

जलस्थलोत्पन्नशरीरहिंसया
विवर्जयेन्मांसमुदारधीः सदा ।
दयापरोऽधोगतिहेतुरूपया-
ऽचिराय लभ्यं भवभीनिवृत्तये ॥११४ ॥

अन्वयप्र०—दयापरः (दयालुः) उदारधीः ( सर्वत्र परमेश्वरस्य व्यापकत्वानु सन्धानेन पूज्यबुद्धिः ) अधोगतिहेतुरूपया जलस्थलोत्पन्न शरीरहिंसया अचिराय ( आशु ) लभ्यं मांसं भवभीनिवृत्तये विवर्जयेत् ( त्यजेत् ) ॥११४॥

अत एवाह—जलेति अधोगतिहेतुरूपया जलस्थलोत्पन्न शरीरहिंसया चिराय शीघ्र लभ्यं मांसं भवभीनिवृत्तये उदारधीर्दयापरो मुमुक्षुर्वर्जयेत् ॥ ११४ ॥

भाषा—उदारबुद्धिवाले ( सर्वत्र परमात्मा की व्याप्ति होने से सभी पूज्य है, ऐसीबुद्धिवाले ) दयालु पुरुष, अधोगति के दायक होनेके कारण जल एवं स्थल में उत्पन्न जन्तु की हिंसासे ही प्राप्त करने योग्य मांसका जन्म मरण के भय की निवृति के लिये त्याग करे ॥११४॥

समर्प्य कर्माणि शुभानि वैष्णवो
रामाय भक्ष्यं च निवेद्य भक्षयेत् ।
अर्हर्दिवं वीतभयं समुत्तमं
विमुक्तिधीः स्वाघनिवृत्तिकामः ॥११५॥

अन्वयप्र०—स्वाघनिवृत्तिकामः विमुक्तिधीः (स्वपापापनोदनपू-

र्गकमोक्षेच्छावान्)श्रीवैष्णवः अहर्दिवम्(अहन्यहनि कृतानि)शुभानि कर्माणि श्रीरामाय समर्प्य वीतभयो [ भवति ] समर्पणबुद्धि-लाभार्थं सर्वतः प्रथम ] समुत्तमं निरतिशयश्रेष्ठं सात्त्विकं भक्ष्य ( नैवेद्यम् ) निवेद्य भक्षयेत् । "आहारशुद्धौ खलु सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति श्रवणात् ॥ आहारशुद्धिमन्तरेण सत्त्वस्यान्तःकरणस्य शोधनं भवितुन्नार्हति । तद्विना कुत्रापि शुभ-कर्मणि प्रवृत्तिर्नभवति अतः सर्वतःपूर्वं सत्त्वशोधनार्थमाहारशोधनस्यावश्यकतास्तीतिभावः ॥ ११५ ॥

भवभीनिवृत्तये इत्यनुषज्जते विमुक्तौ मोक्षे धीर्यस्य स स्वावन्य निवृत्त्यै कामो यस्य स वष्णवोऽहर्दिवम् अहन्यहनि शुभानि कर्माणि स्वकृतानि रामाय समर्प्य समुत्तम सम्यक् श्रेष्ठं भक्ष्यं नैवेद्यं च निवेद्य तन्निवेदित भक्षयेत् अत एव वीतभयो विगतससारभयः स्यात् । तथा चोक्तम्–

" कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वाऽनुसृतस्वभावात् ।
करोति यद्यत्सकलं परस्मै
नारायणायेति समर्पयेत्तत्" ।

किंच–

"ये मेऽर्पयन्ति कर्माणि शुभगे शुभजाः क्रियाः ।
कोटिजन्मार्जितं पाप नित्यं तेषां वहाम्यहम् ।
इष्टं दानं तपो देवि ये मेऽर्पयन्ति वैष्णवाः ।
तेनाऽहवै समाहूतो वत्सं दृष्ट्वा तु गौयथा ।
सात्त्विकेन स्वभावेन कृत्वा कर्म मदर्पणम् ।
असंख्यं फलमाप्नोति दीक्षितश्चैव मानवः ।
निष्कामो वैष्णवो देवि कर्मार्पणं करोति यः ।
नित्यं चैव शुचिर्भूतस्तेनाऽह भक्तवत्सलः ।
ये मे कुर्वन्ति कर्माणि ह्यर्पयन्ति त्वकामतः ।
तस्माद्भूमावतीर्य्याऽहं भक्तवश्यो भवामि ह ।
मदर्पणं न कुर्वन्ति पुण्यामेतां शुभक्रियाम् ।
तेषां चैवन पश्यामि कदाचिदपि सद्गतिम् ।

तपो 'दन च होम वै व्रतानि नियमाँस्तथा।
मदर्पणं न कुर्वन्ति हुतं भस्मनि वै घृतम्।
यावज्जन्मकृतं कर्म्मनार्पयन्ति शुभे मम।
ते विड्भुजां गतिं यान्ति न तरन्ति भवार्णवम्।
तेन शोचन्ति भो देवि यैः कृतं कर्मणोऽर्पणम्।
ते हि भासन्ति सर्वत्र यथा देवो दिवाकरः" इत्यादीनि॥ ११५॥

भाष-अपने प.पों की निवृत्ति-पूर्वक मोक्ष चाहने वाले जो श्रीवैष्णव रात्रि दिवा किये हुए अपने शुभकर्मों को रामजी का समर्पण कर श्रीरामजी के निवेदित अन्यतम श्रेष्ठ भोजन का सेवन करते है, वे जन्ममरणादिक यमसे रहित होते हैं॥ १५॥

**अर्चावतारोपि च देश काल—**
**प्रकर्षहीनः श्रितसम्मतश्च।**
**सहिष्णुरप्राकृतदेहयुक्तः**
**पूर्णोऽर्चकाधीनसमात्मकृत्यः॥ ११६॥**

अन्वयप्र०—कुत्रनिवेदयेन्नैवेद्यमित्यतोऽर्चावतारमुपदिशति भगवान् श्रीरामानन्दस्वामी-अर्चेति (यथा परव्युहविभवान्तर्यामिणो देशकालप्रकर्षहीनाः सन्ति तथा) अर्चावतारोऽपि च देशकाल प्रकर्षहीनो (ज्ञातव्यः अर्थात अयोध्यादिदेशे सत्ययुगादिसमये अर्चावतारस्याधिकमहत्वमन्यत्राऽल्पमहत्वमिति न देदितव्यम किन्तु सर्वत्र समानफलदत्वमितिबोध्यम्) श्रितसम्मतश्च (स्वा श्रित जनस्याभिमतश्च वेदितव्यः) अप्राकृतदेहयुक्तः (अतएव) सहिष्णुः (पूजकसमस्तापराधसहनशीलः) पूर्णः (गृहग्रामनगरवनपर्वतादिषु सर्वत्र परिपूर्णो नाम व्यापकः अर्चकाधीनसमात्मकृत्यः (पूजकाधीनसमस्तभगवत् स्नान भोजनादिक्रिय एवम्भूतः अर्चावतारो बोध्यः अन्ये तु न ह्येता-दृशः सुलभाः इतिभावः॥ ११६॥

अथार्चावतारं लक्षयति-अर्चेति। देशकालयोः प्रकर्षेण प्रकृष्टत्वेन हीनो रहितः श्रितसम्मत आश्रिताभिमतः सहिष्णुरर्चकसर्वापराधसहनशीलः अप्राकृतदेहयुक्तो दिव्यदेहयुक्तो दिव्यदेहविशिष्ट पूर्णः परिपूर्णो गृहग्रामनगरप्रशस्तदेशशैलादिषु वर्त्तमानो मूर्तिविशेष एवार्चावतार उच्यते सच कीदृक् अर्चकाधीनंसमं सर्वं समशब्दः सर्वपर्यायः आत्मकृत्यं स्नानादि यस्य सः ११६

भाषा--अर्चावतार देश काल का उत्कृष्टता से रहित आश्रित भक्तों के अभिमत ( द्विभुज, चतुर्भज, बालक किशोर इत्यादि ) सहिष्णु अप्राकृत देह युक्त एवं सर्वत्र व्यापक है, तथा उनके सभी आत्मकृत्य ( पूजा राग भोगादि ) अर्चा करनेवाले के आधीन है ॥ ११६ ॥

**प्रशस्तदेशादिषु वर्त्तमान-**
**श्चतुर्विधः श्रीयुत एव सर्वदा ।**
**स च स्वयं व्यक्त इतिप्रभेदतो**
**दैवश्च सैद्धश्चस मानुषश्च ॥११७॥**

अन्वय-स्वयंव्यक्तो दैवः सैद्धो मानुषश्चेतिप्रभदेतः चतुर्विधः सच (अर्चावतारः) प्रशस्तदेशादिषु (अयोध्यामथुरादिदिव्य देशेषु) सर्वदा (अर्चावतारः) श्रीयुत एव वर्तमानः (वेदितव्यः)॥ ११७॥

स्वयं व्यक्तो दैव. सैद्धो मानुषश्चेति प्रभेदः भेदात्स चार्चावतारश्चतुर्विधो बोध्य कीदृशः प्रशस्तदेशादिषु बृन्दावनादिषु वर्त्तमानः स च सर्वदा श्रीयुत एव लक्ष्मीयुत एव ॥ ११७ ॥

भाषा—१ स्वयं व्यक्त, दैव,, सैद्ध, मानुष इस भेद से चार प्रकार के अर्चावतार अयोध्या मथुरा आदि दिव्य देशों में सदा श्री [ लक्ष्मी ] जी के सहित रहते हैं ॥ ११७ ॥

**आवाहनाऽऽसनाभ्यांतुपाद्याऽर्घ्योऽऽचमनैस्तथा ।**

---

१ पूजनीय भगवत्प्रतिमा को अर्चावतार कहते हैं, इनके चार भेद है, स्वयमेव प्रकट को स्वयंव्यक्त, देवस्थापित को दैव, सिद्धों के स्थापित को सैद्ध, मनुष्य स्थापित को मानुष कहते है ।

स्नानवस्त्रोपवीतैश्च गन्धपुष्पसुधूपकैः ॥ ११८ ।
दीपनैवेद्यताम्बूल प्रदक्षिणविसर्जनैः ।
षोडशाऽर्चाप्रकारैस्तमेतैरर्चेत्सदा सुधीः ॥११९॥

अन्वयप्र०—सुधीः(सुबुद्धिजनः)आवाहनाऽऽसनाभ्यां तु पाद-पूर्णार्थम् तथा पाद्यार्घ्याचमनैः स्नानवस्त्रोपवीतैः गन्धपुष्प-सुधूपकैः दीपनैवेद्यताम्बूलप्रदक्षिणविसर्जनैश्च एतैः षोडशार्चा-प्रकारैस्तम् ( अर्चावतारम् ) सदा ( सर्वदा ) अर्चेत् ( पूजयेत् ) ॥११८॥ ११९ ॥

एवमर्चावतारमुक्त्वा तदर्चाप्रकारमप्याह—आवाहनेति । आवाहना-सनपाद्यार्घ्याऽऽचमनस्नानवस्त्रोपवीतगन्धपुष्पधूपदीपनैवेद्यताम्बूलप्रदक्षिण-विसर्जनैरेतैः षोडशभिरर्चाप्रकारैः पुरुषसूक्तादिप्रोक्तैस्तत्तन्मन्त्रैस्तमर्चा-वतारं सुधीर्मुमुक्षुः सदा सर्वदैवार्चेदित्यर्थः । आवाहनादिमन्त्रा वैदिकाः पुरुषसूक्तोक्ताः षोडश ऋचस्तत एवावगन्तव्याः ।

तान्त्रिकास्तु—

"आवाहयामि विश्वेश ! चतुर्वर्गार्थद !प्रभो !
पूजायै करुणासिंधो! भक्त्या सन्निहितो भव ॥
सुखप्रद ! सुरेन्द्राद्यैः पूजित ! गुणोत्तर ! ।
स्थित्यै गृहाण देवेश ! भद्रासनमनुत्तमम् ॥
नारायण ! नमस्तेऽस्तु नरकार्णवतारक ! ।
पाद्यं गृहाण देवेश ! मम सौख्यं विवर्द्धये ॥
व्यक्ताव्यक्तस्वरूपाय हृषीकपतये नमः ।
मया निवेदितो भक्त्या अर्घोऽयं प्रतिगृह्यताम् ॥
मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।
तदिदं कल्पितं देव ! सम्यगाचम्यतां प्रभो ! ॥
स्नानं पञ्चामृताद्यैस्त्वं गृहाण पुरुषोत्तम ! ।
अनाथनाथ ! सर्वेश ! गीर्वाणप्रणतप्रिय ! ॥
वेदसूक्तसमायुक्ते यज्ञसामसमन्विते ।
सर्ववर्णप्रदे देव ! वाससी ते विनिर्मिते ॥

ब्रह्मविष्णुमहेशानैर्निर्मितं ब्रह्मसूत्रकम् ।
गृहाण भगवन् ! विष्णो ! सर्वेष्टफलदो भव ॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्य सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ ! प्रीत्यर्थं प्रतिगृह्यताम ॥
मल्लिकादिसुगन्धीनि मालत्यादीनि वै प्रभो! ।
मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यन्ताम्॥
वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेय सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
आज्यं सुवर्तिसंयुक्तं वह्निना दीपित च यत् ।
दीपं गृहाण देवेश ! त्रैलोक्यतिमिरापहम् ॥
घृतपक्वं हविष्यान्नं पायसं वा सशर्करम ।
नानाविधं च नैवेद्यं विष्णो ! मेप्रतिगृह्यताम् ॥
एलालवंगसंयुक्त ताम्बूलं सुरपूजितम ।
प्रीत्या गृहाण देवेश ! मम सौख्यं विवर्द्धये ॥
यानि यानि च दुःखानि सर्वपापकृतानि च ।
तानि तानि विनश्यन्तु प्रदक्षिणकृते मयि' ॥

प्रदक्षिणकृते कृतप्रदक्षिणे मयीति तदर्थः । कृता प्रदक्षिणा येन स तथोक्तः ।

गच्छ विष्णो ! सुरश्रेष्ठ ! स्वधामाऽनुत्तम विभो ! ।
सकलर्द्धिसमायुक्तं सेवितं पार्षदैः सदा ॥ इति ११८॥ ११९ ॥

भाषा—सुन्दर बुद्धिवाले मनुष्य, आवाहन, आसन, पाद्य, अर्घ्य, आचमन, स्नान, वस्त्र, उपवीत, गन्ध, पुष्प, धूप, दीप, नैवेद्य, ताम्बूल, प्रदक्षिणा, और विसर्जन, इस तरह सोलह प्रकार से उस अर्चावतारका सदा पूजन करते है ॥ ११८॥११९॥

**जगत्पते ! श्रीश ! जगन्निवास !**
**प्रभो ! जगत्कारण ! रामचन्द्र ! ।**
**नमो नमः कारुणिकाय ते सदा**
**पदाब्जयुग्मे तव भक्तिरस्तु मे ॥१२०॥**

अन्वयप्र०—हे जगत्पते! हेश्रीश! हे जगन्निवास! हे प्रभो! हे जगत्कारण! हे रामचन्द्र! कारुणिकाय ते (तुभ्यम्) नमो नमः (नमस्कारोऽस्ति) तव पदाब्जयुग्मे मे (मम) भक्तिः सदा [सर्वदा] अस्तु ॥१२०॥

एवं समभ्यर्च्य स्ववाञ्छितं प्रार्थयेदित्याह—जगदिति। हेरामचन्द्र! कारुणिकाय प्रशस्तकरुणायुक्ताय ते तुभ्यं नमो नमः तव पदाब्जयुग्मे तव चरणकमलद्वये मे मम मत्कर्तृका भक्तिः सदाऽस्तु शेषं स्पष्टम् ॥१२०॥

भाषा—हे जगत्पते! हे श्रीश! हे जगन्निवास! हे प्रभो! हे जगत्कारण! हे रामचन्द्र! आप दयालु है, उसके लिये मेरा बारम्बार नमस्कार है। आपके चरणकमल में सदा मेरी भक्ति हो॥१२०॥

**मनोमिलिन्दस्तव पादपङ्कजे**
**रमाऽर्चिते संरमता भवे भवे।**
**यशःश्रुतौ ते मम कर्णयुग्मं**
**त्वद्भक्तसः सङ्गततं ममाऽस्तु ॥१२१॥**

अन्वयप्र०—(हे रामचन्द्र!) भवे भवे (जन्मनि जन्मनि) मम मनोमिलिन्दःरमार्चिते तव पादपङ्कजे संरमताम्। मम कर्णयुग्मं ते (तव) यशःश्रुतौ (यशःश्रवणे) अस्तु। मम त्वद्भक्तसङ्गः सततमस्तु (निरन्तरम्भवतु) ॥ १२१ ॥

रमया लक्ष्म्याऽर्चिते पूजिते तव पादपङ्कजे मम मनोमिलिन्द इव मनो मिलिन्दःमनोभ्रमरो भवे भवे प्रतिजन्म सरमताम्। तव यश श्रुतौयशःश्रवणे सततं निरन्तरं कर्णयुग्मं कर्णद्वयमस्तु। त्वद्भक्तसङ्गश्च ॥ १२१ ॥

भाषा—हे रामचन्द्र! मेरा मनरूप भ्रमर, लक्ष्मी स्वरूपा श्रीसीताजी से पूजित आपके चरण कमल में रमण करे, मेरे दोनो कान आपके यश सुनने में लगे, और मुझको निरन्तर आपके भक्तों का संग हो १२१

**उरःशिरोदृष्टिमनोवचोऽङ्घ्रि—**
**द्वयप्रराजत्करयुग्मजानुभिः।**

**अङ्गैः क्षितौ तं प्रणमेदथाऽष्टभि-**
**दीर्घं तथैतैः कृतधीश्च दण्डवत् ॥ १२२ ॥**

अन्वयप्र०—अथ प्रार्थनानन्तरम् कृतधीः (भगवन्तं प्रणमितुं निश्चितमतिः) क्षितौ (पृथिव्याम्) उरःशिरोदृष्टिमनोवचोऽङ्घ्रिद्वयप्रराजत्करयुग्मजानुभिः एतैः (पूर्वोक्तैः) अष्टभिः अङ्गैः दण्डवत्तं [भगवन्तम्]दीर्घं (यथा स्यात् तथा) प्रणमेत् ॥१२२॥

अथाऽनन्तरं प्रार्थनानन्तरं दीर्घं यथा भवति तथा क्षितौ पृथिव्यामेतैरष्टभिरङ्गैः कृतधीर्दण्डवत्तं प्रणमेत् प्रणामं कुर्यात् । उरःशिरोदृष्टिमनोवचोऽङ्घ्रिद्वयेन प्रराजन्ति करयुग्मं जानुनी च येषु तानि तैः ॥१२२॥

भाषा—भगवान को प्रणाम करने में निश्चित बुद्धिवाले, मन, वचन, दोनो चरण, दोनों जानु (घुटना), छाती, शिर, नेत्र और प्रसारित दोनों हाथ, इन आठो अंगों से भूमि में दण्ड की तरह लेट कर उन परमात्मा को प्रणाम करे ॥ १२२ ॥

**बाहू च पादौ च प्रसार्य्य साञ्जलिः**
**स्तवैः स्तुवन् दीर्घमथो नमेत्तम् ।**
**शतैः क्रतूनां तु सुदुर्लभां गतिं**
**स चाऽऽप्नुयाद्विष्णुपरायणो जनः ॥१२३॥**

अन्वयप्र०—अथ (दण्डवत्प्रणामानन्तरम्) स च विष्णुपरायणो जनः साञ्जलिः स्तवैः स्तुवन् बाहू च पादौ च प्रसार्य्य तं परमात्मानम्) दीर्घं (यथाऽवकाशं तथा) नमेत् (एवंकृते) तु (तु इत्यवधारणे तथा सति च) क्रतूनां शतैः (अश्वमेधैः दक्षैर्या सुदुर्लभा गतिस्ताम्) सुदुर्लभां गतिं [illegible] प्राप्यते [illegible] यया तां सुषुम्नामार्गम् अथवा कर्म्माणि [illegible] परधाम आप्नुयात् (प्राप्नुयात्) इति विधिः ॥ १२३ ॥

स च विष्णुपरायणो जनो मुमुक्षुः साञ्जलिः स्तवैः स्तुवन् बाहू पादौ प्रसार्य्य तं भगवन्तं नमेत् । तथा च क्रतूनां शतैर्दुर्लभां गतिं प्राप्नुयात् ॥१२३

भा०—विष्णुभक्त अञ्जलिपूर्वक दिव्यस्तोत्रों से स्तुति करते हुए दोनों हाथों एवं पैरों को पसार कर दण्ड ( लाठी ) की तरह लम्बे लेट कर परमात्मा श्रीरामजी को नमस्कार करे । ऐसा करने से असङ्ख्य यज्ञों से भी न मिलनेवाली गति ( भगवत्कृपा मात्र ही से साध्य परधाम को प्राप्त कराने वाला सुषुम्नामार्ग को या परात्परलोक की ) प्राप्ति करते है ॥ १२३ ॥

( वैष्णव भेद वर्णन )

**अथोच्यते वैष्णवभेद ईप्सितो**
**ज्ञातुं च ते विष्णुपरायणैर्जनैः ।**
**सुवेदनीयो बहुधा महामते !**
**सुनिश्चितो विज्ञवरैर्महर्षिभिः ॥१२४॥**

अन्वयप०— हे महामते ! (सुरसुरानन्द ! )अथ( अर्चावतारतत्पूजनादिकथनानन्तरम् ) विज्ञवरैर्महर्षिभिर्बहुधा सुनिश्चितः विष्णुपरायणैर्जनैर्ज्ञातुमीप्सितः (अतएव) ते ( तव) च सुवेदनीयो वैष्णवभेद उच्यते मयेति शेषः ॥ १२४ ॥

हे महामते ! सुरसुरानन्द! अथो अर्च्चावतारकथनानन्तरम् विष्णुपरायणैर्जनैर्ज्ञातुमीप्सितः ते तव सुवेदनीयः विज्ञवरैर्महर्षिभिर्बहुधा सुनिश्चितो वैष्णवभेदस्ते मयोच्यत इत्यन्वयः ॥ १२४ ॥

भाषा— हे महामते ! (सुरसुरानन्द ) मैं, विज्ञवर ( ज्ञानिश्रेष्ठ ) महर्षियों द्वारा अनेक प्रकार से निश्चित, वैष्णवों के वाञ्छित और तुमको अनायास जानने योग्य, वैष्णव भेद को कहता हूँ ॥ १२४ ॥

**प्राप्तुं परां सिद्धिमकिञ्चनोजनो**
**द्विजादिरिच्छञ्छरणं हरिं व्रजेत् ।**

**परं दयालुं स्वगुणानपेक्षित-**
**क्रियाकलापादिकजातिभेदम् ॥१२५॥**

अन्वयप्र०—अकिञ्चनः ( भगवदतिरिक्तं किञ्चन साधनं न विद्यते यस्य सः ) जनो द्विजादिः ( ब्राह्मणादिजीवसमूह ) पराम् ( उत्कृष्टाम् ) सिद्धिम् ( मुक्तिम ) प्राप्तुमिच्छन् स्वगुणाऽनपेक्षितक्रियाकलापादिकजातिभेदं हरिम् ( स्वभक्तकल्मषहारिणम् ) परम दयालुम् शरणम् ( सर्वरक्षकम् ) व्रजेत् ( गच्छेत् )॥१२५॥

अकिञ्चनो विरक्तो जनो द्विजादिः परामुत्कृष्टां मोक्षरूपां सिद्धिं प्राप्तुमिच्छन् परं दयालुं हरिं शरणं व्रजेत् कीदृशं तं स्वगुणैर्वात्सल्यादिभिर्न अपेक्षितः शरणागतौ क्रियाकलापादिको जातिभेदश्च येन स तथोक्तम् ।

तथोक्तम्—

"प्राप्तुमिच्छन्परां सिद्धिं जनः सर्वोऽप्यकिञ्चनः ।
श्रद्धया परया युक्तो हरिं शरणमाश्रयेत् ॥
न जातिभेदं न कुलं न लिङ्गन्न गुणक्रियाः ।
न देशकालौ नाऽवस्थां योगो ह्ययमपेक्षते ॥
ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चान्तरजास्तथा ।
सर्व एव प्रपद्येरन् सर्वधातारमच्युतम्" इति ॥१२५॥

भा० भगवान् से अतिरिक्त भगवत्प्राप्ति के उपायों से रहित द्विजादि [ ब्राह्मण क्षत्रिय वैश्यादि ] जनों को परम मुक्ति प्राप्ति की इच्छा करते हुए अपने गुणों से जीवों की ब्राह्मणादि जाति और विद्या आदि गुणों की अपेक्षा नहीं करने वाले परम दयालु परमात्मा के शरण में जाना चाहिए ॥१२५॥

**महर्षिवर्य्यैः स तु बद्धमुक्त-**
**प्रभेदतोऽमन्यत चेतनो द्विधा ।**

बद्धोऽपि तत्राऽस्ति मुमुक्षवश्च
बुभुक्षवश्चेति प्रभेदतो द्विधा ॥१२६॥

अन्वयप्र०—महर्षिवर्य्यैः बद्धमुक्तप्रभेदतः तु ( पादपूर्णौ ) स चेतनः द्विधा अमन्यत तत्र [बद्धमुक्तयोर्मध्ये] [यः] बद्धोऽस्ति सोऽपि मुमुक्षवश्च बुभुक्षवश्चेति प्रभेदतः [ प्रभेदात् ] द्विधा अमन्यत ॥१२६॥

बद्धमुक्तयोः प्रभेदात् प्रभेदतः महर्षिवर्य्यैर्महर्षिश्रेष्ठैः स चेतनो द्विधा द्वाभ्यांप्रकाराभ्याममन्यत । तत्र तयोर्बद्धमुक्तयोर्मध्ये मुमुक्षवो बुभुक्षवश्चेति प्रभेदात् बद्धो द्विधा तैरमन्यतेत्यन्वयः ॥१२६॥

भाषा—बड़े बड़े श्रेष्ठ महर्षिगण, चेतन [ जीव ] को बद्ध और मुक्त इस तरह दो प्रकार का और पुनः बद्ध भी मुमुक्षु (मोक्ष के इच्छुक) और बुभुक्षु ( भोग के इच्छुक ) इस तरह दो प्रकार का मानते हैं ॥१२६॥

अनादिकर्मोत्करजातनाना—
देहाभिमानी सुमतोऽथ बद्धः ।
स चाऽच्युताऽहेतुकृपाकटाक्षतो
ऽविद्याक्रियावासरुचिप्रवृत्तेः ॥१२७॥
विमोक्तुमिच्छुस्तु मुमुक्षुरुच्यते
सम्बन्धतः प्राज्ञसुसंमतोऽयम् ।
तथैव सांसारिकभोगमिच्छु—
र्बुभुक्षुरन्यः खलु कथ्यते बुधैः ॥१२८॥

अन्वयप्र०—अथ ( बद्धमुक्तप्रभेदकथनानन्तरं तयोर्लक्षणं निगद्यते ) बुधैः अनादिकर्म्मोत्करजातनानादेहाभिमानी (अनादिकर्म्मसमूहैरुत्पन्नानामण्डजपिण्डजोष्मजस्थावरभेदभिन्नानां देहानामभिमानी ) बद्धः सुमतः ( महर्षिवर्य्याणामिति

शेषः ) स चायम् ( बद्धः ) अच्युताऽहेतुकृपाकटाक्षतः (श्रीरामस्य निर्हेतुककृपाकटाक्षेण) अविद्या-क्रिया—वास—रुचि-प्रवृतेः सम्बन्धतः ( सकाशात ) विमोक्तुमिच्छुःसन् प्राज्ञसुसम्मतः मुमुक्षुरुच्यते । तथैवान्यः ( द्वितीयो बद्धः ) सांसारिकभोगमिच्छुःसन् खलु (इति निश्चयेन वाक्यालङ्कारे वा ) बुभुक्षुः कथ्यते ॥ १२७ ॥ १२८ ॥

अथ बद्धस्य लक्षणमाह—अनादीति । अनादिकर्मणामुत्करैः समूहैर्जातेषु उत्पन्नेषु नानाजरायुजादिभेदेन चतुर्विधदेहेषु अभिमानोऽहंताममतारूपोऽस्याऽस्तीति चतुर्विधशरीरादिषुअहंताममतायुक्तो बद्ध इत्युच्यते मुमुक्षुबुभुक्षुभेदाद्बद्धो प द्विविध इत्याह स चेति.अच्युतस्य भगवतो रामचन्द्रस्याहेतुकृपा निर्हेतुका कृपा तत्कटाक्षेण अविद्या क्रिया कर्मवासना रुचिप्रवृते संबन्धतः सकाशाद्विमोक्तुमिच्छुर्बद्धोऽय प्राज्ञानां सुसंमतो मुमुक्षुर्बुधैरुच्यत इत्युत्तरश्लोकेनान्वयः। प्राज्ञेति। सुरसुरानन्दस्य संबुद्धिर्वा संसारेभव.सांसारिकास्तेषां सांसारिकविषयाणां भोगमिच्छुर्बद्धस्तु मुमुक्षोरन्यो बुधैर्बुभुक्षुः कथ्यत इत्यर्थः। तदुक्तम्—

'चेतना द्विविधाः प्रोक्ता बद्धमुक्तप्रभेदतः ।
बद्धा मुमुक्षवश्चाऽपि बुभुक्षव इति द्विधा'' इति ॥१२७॥१२८॥

भाषा—पण्डित गण, अनादि कर्मों के समुदाय से उत्पन्न; अण्डज, पिण्डज, ऊष्मज, एवं स्थावर ( देह के अभिमानी जीव बद्ध हैं, ऐसी श्रेष्ठ बुद्धिवालों की सम्मति बतलाते है । ये बद्ध जीव यदि भगवान् के निर्हेतुक कृपाकटाक्ष से 'अविद्याजन्य संसारप्रद कर्म्म और तदनुगुण वासना ( मानसिक व्यापार ) में अत्यासक्ति पूर्वक प्रवृत्ति ( तत्परता ) के सम्बन्ध से मुक्त होने की इच्छा करें, तो इन्हें 'मुमुक्षु' और उसी तरह ( अविद्या अज्ञान बढ़ाने वाले ) सकाम कर्म और तदनुगुण ( उसके मुताबिक ) वासना ( मानसिकव्यापार ) में अत्यासक्ति पूर्वक प्रवृत्ति ( तत्परता ) के सम्बन्ध से सांसारिक भोगों की इच्छा करनेवाले को अन्य ( बुभुक्षु ) कहते है ॥ १२७ ॥ १२८ ॥

**मुमुक्षवोऽपि द्विविधा महर्षिभिः**
**प्रोक्ता अकामाः स्मृतिभक्तिनिष्ठाः ।**

वेदोक्तवर्णाश्रमकर्मकारिण-
स्तूपासकादिप्रतिभेदभिन्नाः ॥ १२६॥

अन्वयप्र०—महर्षिभिः मुमुक्षवोऽपि द्विविधाः प्रोक्ताः ( ज्ञानाद्यसाधनाश्चेतनान्तरसाधनाश्च तत्र ज्ञानाद्य-साधनानां लक्षणमाह—ज्ञानयोगकर्म्मयोगभक्तियोगानां भगव-त्प्राप्तिसाधनरूपत्वेन ग्रहणे ) अकामाः ( कामनारहिताः ) स्मृतिभक्तिनिष्ठाः ( तैलधारावन्निरवच्छिन्नस्मृतिसन्तानरूपायां भक्तौ निष्ठावन्तः सन्तः ) वेदोक्तवर्णाश्रमकर्म्मकारिणः (भगवदाज्ञया लोकशिक्षार्थं वा श्रुतिस्मृतिविहितवर्णाश्रमकर्म्म-कारिणः ज्ञानाद्यसाधनाः प्रोक्ताः इति। अत्राऽपि) उपासकादिप्रति-भेदभिन्नाः (उपासकाः शुद्धभक्ताश्चेति द्वैविध्यमुक्तम् ) ॥१२६॥

तत्र मुमुक्षूणामपि द्वैविध्यमाह-मुमुक्षव इति।महर्षिभिर्मुमुक्षवो द्विविधा प्रोक्ताः तत्रैके अकामाः ज्ञानाद्यसाधनाः कीदृशाः स्मृतिभक्तिनिष्ठाः फलाभि-सङ्गरहितकर्तृत्वत्यागपूर्वकानुष्ठितवर्णाश्रमोचितविहितकर्मयोगसमुचित तैल-धारावदविच्छिन्नस्मृतिसन्तानरूपसाक्षात्कारपर्यन्तभक्ति निष्ठावन्त इत्यर्थः ।

तदुक्तम्—

"ज्ञानाद्यसाधनाश्चैव चेतनान्तरसाधनाः ।
मुमुक्षवो द्विविधाः प्रोक्ताः पूर्वतनमहर्षिभिः" इति ॥

ते च उपासकादिप्रतिभेदेन भिन्ना आदिना शुद्धभक्तादीनां संग्रहः अत एवोक्तं—

"पूर्वे द्विधोपासकाश्च शुद्धभक्तास्तथा स्मृताः" इति ।

तत्रोपासकास्तु तदवान्तरविहितध्यानपूजनपुरश्चरणादिनिष्ठा. तेष्वेव देहारम्भककर्मनिवर्त्तकसाधनाः आत्मानुभवप्रतिबन्धनिवर्तकसाधना इति द्विधा कैवल्यविरोधिमुमुक्षवोऽन्तर्भाव्याः शुद्धभक्तास्तु भगवच्छ्रवणकीर्तन-वन्दनमात्रनिष्ठाः तेषु भगवत्स्वरूपगुणादिसाक्षात्कारानन्दप्रतिबन्धकान्मो-क्तुमिच्छवो भगवदनुभवविरोधिमुमुक्षवोऽन्तर्भाव्याः ॥ १२९ ॥

भाषा—महर्षियों ने, मुमुक्षु दो प्रकार का कहा है, एक

'ज्ञानाद्यसाधन' दूसरा 'चेतनान्तर साधन' इन दोनों में पहिले का लक्षण दिखलाते है—भगवत्प्राप्ति के साधन मानकर ज्ञानयोग कर्म्मयोग भक्ति योग के ग्रहण में कामनारहित केवल भगवान की आज्ञा मान कर अथवा लोक रक्षा के लिये श्रुति स्मृति विहित वर्णाश्रम धर्म के अनुष्ठान करते हुए केवल तेल की धारावत् विच्छेद रहित स्मृति ( भगवान के नाम रूप लीला धाम के चिन्तन) रूप भक्ति में निष्ठावाले को 'ज्ञानाद्यसाधन' कहा है। इनमें भी 'उपासक' और 'शुद्ध भक्त' इस प्रकार दो भेद कहा है ॥ १२९ ॥

**स्वकर्मसंज्ञादिप्रधानसाधनं**
**तथोररीकृत्य सुविज्ञ ! कञ्चन ।**
**सम्प्राप्य सम्बन्धविशेषमुत्तमं**
**सदा भवन्त्येव च मोक्षनिश्चयाः ॥१३०॥**

अन्वयप्र०—चेतनान्तरसाधनान् लक्षयति श्रीमद्ग्रन्थकारः स्वकर्मेत्यादिना हेसुविज्ञ ! ( सुरसुरानन्द ! ) स्वकर्मसंज्ञादिप्रधानसाधनम् ( स्वकर्म्म, वर्णाश्रमविहितकर्म्म, संज्ञा, सम्यग ज्ञानम्, आदिनोपासनं ग्राह्यम् एतानि कर्म्मज्ञानोपसनानि भगवत्प्राप्तेः प्रधानसाधनम् ) उररीकृत्य ( गुरुशास्त्रतः स्वीकृत्य ) तथा ( पूर्वोक्तरित्यैव ) उत्तमम ( नवविधसम्बन्धेषु श्रेष्ठम् ) कञ्चन सम्बन्धविशेषं च सम्प्राप्य सदा मोक्ष निश्चया भवन्त्येव ( कैवल्यरूपो मोक्षो मे भविष्यत्येवेति निश्चयवन्तो भवन्ति ) ॥ १३० ॥

अथ चेतनान्तरसाधनास्तु स्वानुष्ठितकर्मज्ञानादीनां प्रधानसाधनमङ्गीकृत्य कंचन संबन्धविशेषं लब्ध्वा निश्चयवन्तः ते च प्रपन्ना पुरुषकारनिष्ठा इति द्विधेति आह–स्वकर्मेति । स्वकर्मस्वानुष्ठितकर्म संज्ञासम्यग्ज्ञानादीनां प्रधान-साधनम् उररीकृत्य अङ्गीकृत्य हे सुविज्ञ ! उत्तमं कंचन सबन्धविशेषं संप्राप्य लब्ध्वा सदा मोक्षनिश्चया भवन्तीत्यन्वयः ॥ १३० ॥

भाषा—श्री मद्ग्रन्थकार 'चेतनान्तर साधन' का लक्षण दिखलाते हैं हे विज्ञ! सुरसुरानन्द! चेतनान्तरसाधन मुमुक्षुगण, कर्मयोग ज्ञानयोग भक्तियोग को ही भगवत्प्राप्ति के प्रधान साधन स्वीकार कर और नव विध सम्बन्धों में कोई एक उत्तम सम्बन्ध को गुरु से प्राप्त कर अपने को सदा कैवल्य रूप मोक्ष के अधिकारी मानते है—याने मुझे अवश्यमेव कैवल्य रूप मोक्ष होगा ऐसे निश्चय वाले होते है ॥ १३० ॥

**विहाय चान्यत्परमं दयालुं**
**प्राप्यं समर्थं निरपायमीश्वरम् ।**
**उपायमेतेऽध्यवसाय सुस्थिता**
**ज्ञेयाः प्रपन्नाः सततं हरिप्रियाः ॥१३१॥**

अन्वयप्र०—च ( येच ) एते अन्यत् ( अव्यवहितपूर्वोक्त-श्लोकपदार्थजातम ) विहाय ( त्यक्त्वा ) प्राप्यं ( प्राप्तुं योग्यं ) समर्थं ( अनन्तदिव्यकल्याणगुणवन्तं ) परमं ( परलक्ष्मीनायकं ) दयालुम् ( परदुःखापनोदनकामम् ) ईश्वरम् ( अखिलब्रह्माण्ड-नियमनकर्त्तारं श्रीरामम् ) निरपायं ( नाशरहितम् ) उपायम् संसारसागरादुत्तारकम् ) अध्यवसाय ( निश्चित्य ) सुस्थिताः ( सुखेनोपविष्टाः ) [ ते ] सततं ( निरन्तरम् ) हरिप्रिया ( हरेः प्रियाः हरिः प्रियो येषां वा ते) प्रपन्ना. ज्ञेयाः (बोद्धव्याः)॥१३१॥

अथ प्रपन्नास्तु विहितोपायत्रय हित्वा परमचेतनं परमसमर्थ परमदयालुं परमं प्राप्यमीश्वरं श्रीराममेव निरपायोपायमध्यवसाय स्थिता इत्याह-विहायेति । ये हि अन्यत् उपायान्तरं विहाय परमं दयालुं परमं समर्थंपरमं प्राप्यमीश्वरं श्रीराममेव निरपायमुपायमध्यवसाय विनिश्चित्य सुस्थितास्ते प्रपन्ना ज्ञेयास्ते च सततं हरिप्रियाः हरेः प्रिया हरिः प्रियो येषां ते इति वा ।१३१

भाषा—( हे सुरसुरानन्द ! )जो अन्यों ( कर्मज्ञान एवं भक्तियोग) छोड़कर, प्राप्ति करने योग्य, सर्व शक्तिमान, नाशरहित, परम दयालु

ईश्वर श्री रामजी को उपाय ( संसारसागर से पार करनेवाले) निश्चयकर सुस्थित ( शान्तचित्त ) होते हैं, उन्हें निरन्तर श्रीभगवान् का प्रिय प्रपन्न जानना चाहिये ॥१३१॥

**पौरुषैकसुनिष्ठास्तु हरिस्वातन्त्र्यमैक्ष्य च ।**
**कृपाप्रचुरमाचार्य्यं मत्वोपायमवस्थिताः ॥ १३२ ॥**

अन्वयप्र०—ये पौरुषैकसुनिष्ठास्तु ( पुरुषकारे पुरुषकर्तव्ये एका केवला निष्ठा तत्परता येषां ते तथोक्तास्तु ) ते हरिस्वातन्त्र्यं ( परमात्मनः श्रीरामस्य स्वतन्त्रताम् ) वक्ष्य ( अवलोक्य ) आचार्य्यं कृपाप्रचुरं ( दयाबाहुल्यम् ) प्रेक्ष्य कृपाप्रचुरमाचार्य्यमेवोपायं मत्वा ( बुद्ध्वा ) अवस्थिताः (अर्थात्) मम पारलौकिकसमस्तक्रियासाध्यं भगवत्प्राप्तिरूप फलमाचार्य्य एव सेत्स्यतीति मत्वा आचार्य्यमात्रनिष्ठावन्तो भूत्वा निरुद्विग्नास्तिष्ठन्तीतिभावो वेदितव्यः ॥ १३२ ॥

पुरुषकारनिष्ठास्तु ईश्वरस्वातन्त्र्यमालोच्य किंचित्संकोचवन्तः कृपाप्रचुरमाचार्यमेवोपाय मत्वा स्थिता यथा क्षत्रबन्धुप्रभृतय इत्याह—पुरुषेति। हरेः श्रीरामस्य स्वातन्त्र्य स्वतन्त्रतामैक्ष्य आलोच्य कृपा प्रचुरा अधिका यस्मिस्तमाचार्यमेवोपायं मत्वा ये ऽवस्थितास्ते पुरुषकारैकनिष्ठा ज्ञेयाः ॥१३२ ॥

भाषा—पुरुष कार में निष्ठावाले मुमुक्षु, हरि की स्वतन्त्रता देख कर, परम कृपालु आचार्य्य को ही उपाय मान कर स्थिर हो जाते हैं ॥१३२॥

**ते चाऽऽचार्य्यकृपामात्रप्रपन्ना द्विविधा मताः ।**
**तथा सेवातिरेकप्रपन्नाश्चेति सदा सताम् ॥१३३॥**

अन्वयप्र०—ते च ( पौरुषैकसुनिष्ठाश्च ) सदा ( सर्वदा ) आचार्य्यकृपामात्रप्रपन्नास्तथा सतां ( महात्मनाम् ) सेवातिरेकप्रपन्नाश्चेति ( भेदात् ) द्विविधाः ( द्विप्रकाराः ) मताः ( अभिमता व्यासादिमहर्षीणामितिशेषः ॥ ॥ १३३ ॥

ते चाचार्यकृपामात्रप्रपन्नास्तथा सतां महात्मनां सदा सेवातिरेक-प्रपन्नाश्चेति भेदात् मुमुक्षूणां द्विविधा मता इत्यर्थः ॥१३३॥

भा०—जो एक मात्र पुरुष कार में ही निष्ठ हैं उनका भी सर्वदा "आचार्य्य कृपामात्र प्रपन्न" और "सत्पुरुष सेवातिरेक प्रपन्न" इस तरह दो प्रकार का भेद व्यासादि महर्षियों को अभिमत है ॥१३३॥

**प्रपन्नश्चाऽपि दृप्तः स तथा चाऽऽर्त्त इति द्विधा।**
**शरीरस्थितिपर्य्यन्तमाद्योऽत्रैव यथोचितम् ॥१३४॥**
**प्राप्तदुःखादिभुञ्जानः शरीरान्तेऽवसाय च।**
**महाबोधोऽतिविश्वासो मोक्षसिद्धिमवस्थितः ॥१३५॥**

अन्वयप्र०—स प्रपन्नश्चापि (१३० तमे श्लोके उक्तश्चापि) "दृप्तः" तथाच "आर्त्तः" इति (भेदात्) द्विधा (द्विप्रकारकः) अत्रैव (अनयोरेव मध्ये) आद्यः (दृप्तः) शरीरस्थितिपर्यन्तम् (यावच्छरीरम्) यथोचितं प्राप्तदुःखादिभुञ्जानः (सन्) महाबोधः (परज्ञानवानेव) शरीरान्ते मोक्षसिद्धिमवसाय (निश्चित्य) अतिविश्वासः सन्नवस्थितः ॥ १३४॥१३५॥

स प्रपन्नो दृप्त आर्तश्चेति भेदाद्द्विधा द्वाभ्यां प्रकाराभ्यां ज्ञेयः। तत्राद्यो दृप्तः प्रपन्नः शरीरस्थितिपर्यन्तं यावच्छरीरं यथोचितम् उचितमनतिक्रम्य प्राप्तं दुःखादि भुञ्जान इत्युत्तरश्लोकेनान्वयः ॥ १३४ ॥

शरीरान्ते शरीरनाशे मोक्षसिद्धिमवसाय विनिश्चित्य महान्बोधो ज्ञानं यस्य स अतिशयितो विश्वासो यस्य सोऽतिविश्वासः सन्नवस्थित इत्यर्थः१३५

भाषा—वे प्रपन्न भी दो प्रकार के होते हैं, 'दृप्त' और 'आर्त्त' इस में जो दृप्त हैं, वे परमज्ञानवान यावत्शरीर प्राप्त दुःखादियों का यथोचित भोग करते हुए शरीरान्त होने पर मोक्ष की सिद्धि में निश्चय पूर्वक अतिविश्वास करते हुए स्थित रहते हैं ॥ १३४-१३५ ॥

**अथान्त्योऽसहमानस्तत्क्षणमेव तु संसृतिम्।**

**तथैव भगवत्प्राप्तौ सत्वरस्वान्त उच्यते ॥१३६॥**

अन्वयप्र०—अथ ( प्रपन्नस्य दृप्तार्त्तत्वेन भेदकथनान्तरम् ) संसृतिं (संसारदुःखम्) असहमानस्तु तथैव तत्क्षणमेव भगवत्प्राप्तौ (भगवत्प्राप्तिनिमित्तम (सत्वरस्वान्तः) भगवत्प्राप्त्यर्थं शीघ्रायमाणान्तःकरणः ( अन्त्यः आर्त्तः ) उच्यते ( व्यासादिभिर्गितशेषः ) ॥ १३६ ॥

अथ दृप्तप्रपन्नवर्णनानन्तरम् संसृतिं तद्दुःखमसहमानः तत्क्षणमेव तथैव भगवत्प्राप्तौ सत्वरं त्वरया सहितं स्वान्तं यस्य स सत्वरस्वान्तोऽन्त्यो हि आर्तः प्रपन्न उच्यते "स्वान्तं हृन्मानसं मनः" इत्यमरः ॥ १३६ ॥

भाषा—तदनन्तर संसार बन्धन को एक क्षण भी सहन करने में असमर्थ और भगवत्प्राप्ति में अतिउतावल हृदय वाले प्रपन्न को महर्षियों ने आर्त्त कहा है ॥ १३६ ॥

**श्रवणादिमात्रनिष्ठाः शुद्धा भक्ताः प्रकीर्त्तिताः ।**
**अन्तर्भाव्यास्तत्र तत्र तथानुक्ता मुमुक्षवः ॥१३७॥**

अन्वयप्र०— ( परब्रह्मणः श्रीरामस्य कीर्त्तनाम् ) श्रवणादिमात्रनिष्ठाः ( श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इत्येतेष्वेव निष्ठावन्तः) शुद्धभक्ताः प्रकीर्त्तिताः ( कथिता ) तत्र ( पूर्वोक्तमुमुक्षुलक्षणे ये ) मुमुक्षवः अनुक्ताः अकथिताः ते तत्र ( पूर्वोक्तलक्षणे ) तथा [पूर्वोक्तप्रकारेणैव] अन्तर्भाव्याः (अन्तर्गता वेदितव्याः) ॥१३६॥

भगवद्यशः श्रवणकीर्तनादिषु निष्ठा नितरां स्थितिर्येषां ते शुद्धभक्ताः प्रकीर्तिताः ये मुमुक्षवो मुमुक्षुभेदा अनुक्तास्तेपि तत्र तत्र आविन्तर्भाव्याः॥१३७॥

भाषा—व्यासादि महर्षियों ने परब्रह्म श्रीरामजी के यशों के श्रवण कीर्तन स्मरणादि मात्र में निष्ठा वाले को शुद्ध भक्त कहा है। पूर्वोक्त मुमुक्षुवों के लक्षणों में ग्रन्थान्तरोक्त मुमुक्षुवों के जिन अन्य

भेदों को नहीं कहा है, उसको भी पूर्वोक्त लक्षणों में ही अन्तर्भाव समझना चाहिये ॥ १३७ ॥

**नित्यकादाचित्कभेदान्मुक्तद्वैविध्यमुच्यते ।**
**नित्याः कदाचित्तत्रापि सिद्धाः सुपुरुषा वराः ॥१३८॥**
**गर्भजन्मादिदुःखं येऽननुभूय स्थिताः सदा ।**
**सीतारामप्रियाः शश्वत् येऽनन्तगरुड़ादयः ॥१३९॥**

अन्वयप्र०–नित्यकादाचित्कभेदात् [नित्या कादाचित्का इतिभेदात्] मुक्तद्वैविध्यमुच्यते ) मुक्तानां द्विविधत्वं कथ्यते ( तत्र ) तेषु नित्यकादाचित्केषु ) ये कदाचिदपि गर्भजन्मादिदुःखम् अननुभूय स्थिता ये जीवा कस्मिंश्चिदपि काले गर्भवासादिदुःखानुभवम कृत्वैव स्थितवन्तः ) ते नित्याः ( नित्यमुक्ताः ) अतः सदा ( सर्वदा ) सिद्धाः (स्वस्वरूपेऽन्तर्य्यामित्वेन स्थितवन्त सीतानाथमनुभावितवन्तः )( अत एव ) शश्वत् सीतारामप्रियाः ( अतएव ) सुपुरुषाः वराः ( श्रेष्ठाः ) अनन्ता गरुड़ादयो ( वेदितव्या इति शेषः ) ॥ १३८ ॥ १३९ ॥

अथ मुक्तानां भेदमाह-नित्येति। नित्याः कादाचित्काश्चेति भेदान्मुक्ताना द्विविधस्य भावो द्वैविध्यमुच्यते। तत्र तयोर्नित्यकादाचित्कयोर्मध्ये ये कदाचिदपि यदा गर्भजन्मादिदु खमननुभूय सिद्धाः साधनानपेक्षाः स्थितास्ते नित्याः शश्वत्सीतारामप्रियाः अत एव वराः श्रेष्ठाः सुपुरुषामुक्ता अन तगरुडादयः ज्ञेयाः आदिना विष्वक्सेनादीनां संग्रहः ॥ १३८ - ३९ ॥

भाषा-नित्य एवं कादाचित्क, इसतरह मुक्तजीव दो प्रकार के होते हैं। उन में जो कभी भी गर्भवासके दुःख का अनुभव नही किये है वे नित्य मुक्त कहे जाते है। अतः सर्वदा प्रकृति–बन्धन-विमुक्त–निज ( जीव ) स्वरूप में, अन्तर्य्यामी रूप से स्थित श्री सीतानाथ जी का अनुभव करते हैं। अतएव श्रीसीताराम जीके प्रिय, मुक्त जीवों में

भी श्रेष्ठ सुन्दर पुरुषाकार अनन्त गरुडादि को नित्य मुक्त समझना चाहिये ॥ १३८ ॥ १३९ ॥

**परिच्छदाः परिजना नित्यमुक्ता अपि द्विधा ।**
**किरीटाद्या अनन्ताद्याः क्रमात्ते च प्रकीर्तिताः १४०**

अन्वयप्र०—परिच्छदाः परिजनाः ( इतिभेदात् ) नित्यमुक्ता अपि द्विविधा ज्ञातव्याः क्रमात्( यथासंख्येन ) ते च परिच्छदाः किरीटाद्याः करीटाद्याख्याःपुरुषाःपरिजनाः अनन्ताद्याः प्रकीर्त्तिता ( कथिताः ) ॥१९॥

परिच्छदाः परिजनाश्चेति नित्यमुक्ता अपि द्विधा बोध्याः ते च क्रमात् परिच्छदाः किरीटाद्याः । परिजनाअनन्ताद्याः प्रकीर्तिताः ॥ १४० ॥

परिच्छद और परिजन भेद से नित्य मुक्त भी दो प्रकार के हैं । किरीट आदि भूषणों को रखने और पहिराने वाले पुरुष को परिच्छद, और अनन्त [ शेष ] आदि को परिजन कहते है ॥ १३९ ॥

**भागवताः केवलाश्च कादाचित्का अपि द्विधा ।**
**तत्र भागवता बोध्या ये तु ते भगवत्पराः ॥१४१॥**

अन्वयप्र०—भागवताः केवलाश्चेति भेदात् कादाचित्का अपि द्विधा ( द्विविधा ज्ञातव्याः ) तत्र ( तेषु कादाचित्केषु ) ये तु भगवत्पराः श्रीसीतानाथैकनिष्ठावन्तः ते भागवता बोध्याः ( वेदितव्या भवद्भिरितिशेषः ) ॥ १४१ ॥

कादाचित्का अपि मुक्ता भागवता केवलाश्चेति भेदात् द्विधा । तत्र तयोर्मध्ये ये तु भगवत्परा श्रीरामैकनिष्ठास्ते भागवता बोध्या ॥ १४१॥

भाषा—भागवत और केवल इस तरह 'कादाचित्क मुक्त' भी दो प्रकार के हैं उस में श्रीसीतानाथ की सेवा पूजा करनेवालों को भागवत समझना चाहिये ॥ १४१ ॥

**भगवद्भोग्यभून्यादिसाक्षात्कारसुखाश्रयाः ।**
**श्रीराममानसा नित्यं तदनुध्यानतत्पराः ॥१४२॥**

केचिद्गुणानुसन्धान-पराः कैङ्कर्य्यतत्पराः।
इत्थं महर्षिभिः प्रोक्ता द्विविधा भगवत्पराः॥ १४३ ॥

अन्वयप्र०—(हे सुरसुरानन्द!) केचिद् (भागवताः) भगवद्भोग्यभूत्यादिसाक्षात्कारसुखाश्रया (अखिलब्रह्माण्डनायकस्य भगवतः श्रीरामस्य भोग्यानां विभूत्यादीनां साक्षात्कारेणोत्पन्नानां सुखानामाश्रयाः) श्रीराममानसाः (सीतारामन्यस्तचित्ताः सन्तः) नित्यं तदनुध्यानतत्पराः (सर्वदा श्रीरामध्यानतत्परा भवन्ति) [केचिद्भागवताः ) गुणाऽनुसन्धानपराः सर्वदा श्रीरामध्यानतत्पराः सन्तः कैङ्कर्य्यतत्पराः (भवन्ति) इत्थं (पूर्वोक्तप्रकारेण) महर्षिभिर्भगवत्परा द्विविधाः प्रोक्ताः ॥ १४२ ॥ १४३ ॥

भागवतानामपि द्वैविध्यमाह- भगवदिति। भगवता श्रीरामेण भोग्या ये भूत्यादय ऐश्वर्यादय."विभूतिर्भूतिरैश्वर्य्यम्" इत्यमरः। विविधसंपत्तयस्तासां साक्षात्कारेण यानि सुखानि तेषामाश्रया। श्रीरामे मानसं चित्तं येषां ते। नित्यमेतस्य श्रीरामस्याऽनुध्यानेऽनुक्षणं ध्याने तत्पराः श्रद्धावन्तः॥१४२॥

केचित्तु तद्गुणानुसन्धानपराः सन्तस्तत्कैङ्कर्य्यपरायणाः। इतीत्थं पूर्वोक्तप्रकारेण भगवत्परा भागवता द्विविधा महर्षिभिः प्रोक्ता ॥ १४३ ॥

भाषा—हे सुरसुरानन्द! भगवत्परायण भागवतों में कोई अखिलब्रह्माण्डनायक श्रीरामजी के भोग्यभूत समस्त विभूतियों के साक्षात्कार से उत्पन्न सुखों से सुखी होते हुए श्रीसीताराम जी में दत्तचित्त और सर्वदा उनके ध्यान में और कोई परब्रह्म श्री रामजी के गुणो के अनुसन्धान एवं कायिक वाचिक मानसिक सेवा में तत्पर रहते है; इस तरह महर्षियोंने भगवत्परायण भक्तों के दो प्रकार कहा है ॥१४२ ॥१४३॥

द्विविधाः केवला बोध्या दुःखभावैकतत्पराः।
आत्मानुभूतिपरमा इति चोक्ता महर्षिभिः ॥१४४॥

अन्वयप्र०—(हे सुरसुरानन्द!) दुःखभावैकतत्पराः (सुखेष्वपि दुःखभावनायां तत्पराः) आत्मानुभूतिपरमा (स्वात्मानुभूतौ परायणाः)

इति भेदात् महर्षिभिःकेवला द्विविधाः प्रोक्ताः च (तथाच त्वयापि) बोध्याः ( ज्ञातव्याः ) ॥ १४४ ॥

केवलानामपि द्वैविध्यमाह-द्विविधा इति।महर्षिभिःदुःखभावैकतत्परा दुःख भावनैकतत्परा आत्मानुभूतिपरमाः परमात्मानुभवपरायणाश्चेति भेदेनोक्ताः केवला अपि द्विविधा बोध्या इत्यन्वयः ॥ १४४ ॥

भाष-(हे सुरसुरानन्द !) महर्षियों ने 'केवल' को भी दो प्रकार के कहा है;एक, वह जो सुखों में भी दुःख को भावना ही करने वाले अर्थात जो प्रायः आत्मा से भिन्न सभी पदार्थों को दुःखमय समझने की भावना में लगा रहता है और कभी कभी आत्मानुभूति भी करता है; और दूसरा वह जो सदा आत्मानुभूति में ही तल्लीन रहता है ॥ १४४ ॥

**समुच्यते सम्प्रति चारु लक्षणं**
**महात्मनां सद्गुणवैष्णवानाम् ।**
**विरञ्चिशम्भुश्रितरामचन्द्र-**
**पदारविन्दस्थितभृङ्गचेतसाम् ॥ १४५ ॥**

अन्वयप्र०-( हे सुरसुरानन्द ! ) सम्प्रति ( अधुना ) विरञ्चिशम्भुश्रितरामचन्द्रपदारविन्दस्थितभृङ्गचेतसाम् ( चतुर्मुखब्रह्मशिवाभ्यां सेविते श्रीरामचन्द्रपादारविन्दे स्थितं चञ्चरीकचित्तं येषां तेषा ) महात्मनाम् ( भगवच्चरणाश्रितत्वात् पवित्रमनसाम्) सद्गुणवैष्णवानां(समीचीनगुणानाम् ) वैष्णवानाम् चारु ( शोभनम् ) लक्षणं समुच्यते ( कथ्यते मया त्वं शृणु इति शेषः ) ॥१४५॥

एव सप्रपञ्चं वैष्णवभेदमुक्त्वाऽधुना तेषां लक्षणं वक्तुं प्रतिजानीते-समुच्यत इति। सम्प्रतीदानीम्"एतर्हि संप्रतीदानीमधुना साम्प्रतं तथा"इत्यमरः। महात्मनां विरञ्चिशम्भुभ्यां श्रिते सेविते रामचन्द्रपदारविन्दे स्थितं भृङ्ग इव चेतो भृङ्गचेतो येषां ते तेषां सद्गुणानां वैष्णवानां चारु रमणीयं लक्षणं समुच्यते वर्ण्यत इत्यर्थः ॥ १४५ ॥

भाषा—( हे सुरसुरानन्द ! ) अब मैं, ब्रह्मा एवं शिवजी से सेवित श्रीरामचन्द्र जी के चरणारविन्द में चंचरीक—चित्तवाले, समीचीन गुण—विशिष्ट, महात्मा वैष्णवों का सुन्दर लक्षण कहता हूँ ॥१४५॥

**धृतोर्ध्वपुण्ड्रस्तुलसीसमुद्भवां**
**दधच्च मालाममलो हि कण्ठतः।**
**तज्जन्मकर्म्माणि हरेरुदाहरे-**
**द्गृह्णंश्च नामानि शुभप्रदानि ॥१४६॥**

अन्वय प्र०—धृतोर्ध्वपुण्ड्रः ( ललाटादिद्वादशाङ्गेषु वेदाद्युपदिष्टोर्ध्वपुण्ड्रं कृतवान् ) तुलसीसमुद्भवां * मालां कण्ठतः ( कण्ठे कण्ठेन वा ) दधत् ( धारयन् ) शुभप्रदानि हरेर्नामानि ( रामकृष्ण इत्यादीनि ) गृणन् ( उच्चरन् अत एव ) अमलः ( मल रहितो जनः ) तज्जन्मकर्माणि ( भगवतोजन्मकर्मसम्बन्धिकथाम् ) उदाहरेत् ( गदेदिति विधिः । हि इति पादपूरणे) ॥ १४६ ॥

धृता द्वादशस्थानेषु ऊर्ध्वपुण्ड्रा येन सः। तुलसीसमुद्भवां तुलसीकाष्ठसमुत्पन्नां मालां दधत् कण्ठतः कण्ठेन कण्ठे वा गृह्णन्। अमलः शुचिः स उपासकः हरेर्भगवतो जन्मकर्माणि अवतारावतारकथा उदाहरेत्। किं कुर्वन् शुभप्रदानि मोक्षप्रदानि नामानि राम इत्यादीनि गृणन् समुच्चरन् ॥१४६॥

भाषा—ललाटादि द्वादश अङ्गों में ऊर्ध्वपुण्ड्र तिलक एवं कण्ठ में तुलसी की माला धारण करते हुए शुद्ध वैष्णव को कल्याणप्रद भगवान् के नामों का उच्चारण और वेदादि प्रसिद्ध उनके सभी अवतार की कथा वर्णन करना चाहिये ॥१४६॥

---

* मार्कण्डेये-अष्टोत्तरशतेनैव तुलसीकाष्ठसम्भवाम् । कण्ठादिनाभिपर्य्यन्तं धारयेद्वैष्णवोत्तमः ॥

रथाङ्गपाणेः शृणुयान्निरन्तरं
कथां च गायेत्सुयशोऽङ्कितां मुहुः।
रूपं तदीयं तु चराचरात्मकं
पश्यन् सतां सङ्गमुदारधीश्चरेत् ॥ १४७ ॥

अन्वयप्र०—रथाङ्गपाणेः(चक्रिणः) सुयशोऽङ्कितां (अनादि-कर्म्मविमुक्तये जीवनां सर्जन सृष्टानां भक्तानां रक्षणं दुष्टानां विनाशं च कुर्वतां भगवतः कीर्त्तिमश्रिताम्) कथां (श्रीरामायणादिरूपाम्) (वैष्णवः)निरन्तर(प्रतिदिनम्)शृणुयात् (सति सामर्थ्ये स्वयम्)मुहुः (वारम्वारम्) गायेच्च (इति साधारणनियमानुष्ठानेन वैष्णवस्य उदारधीत्वं सम्पद्यते तस्य स्वरूपं दर्शयति रूपमित्यादिना। उदार धीत्वं नाम उ—सर्वत्र भगवत्स्वरूपानुसन्धानेन दृष्णाति भगवत्स्व-रूपेतरसमस्तप्रपञ्च त्यजति यया सा उदारा धीर्यस्य सः) उदारधीः चराचरात्मकं (जड़चेतनात्मकम्) तदी (भगवदीयम्) रूपं (विग्रहम्) पश्यन् (अवलोकयन्) सतां (सज्जनानाम्) सङ्गं चरेत् (कुर्यात्) ॥ १४७ ॥

किंच रथाङ्गं चक्रं पाणौ यस्य स तस्य रथाङ्गपाणेः शोभनैर्यशोभिरङ्कितां कथां मुहुः पुन पुनः शृणुयात्। शक्तश्चेत्स्वयं गायेच्च। तदपि निरन्तरं काला-ऽव्यवधानेन न तु कदाचिदिति भावः। चराचरे आत्मा यस्य तच्चराचरात्मकं तदीयं तस्य रथाङ्गपाणेरिदं रूपं पश्यन् सन् उदारधीः सतां सङ्गं च चरेत् ॥ १४७ ॥

भाषा—उदार बुद्धिवाले श्रीवैष्णव, श्रीचक्रपाणि भगवान् की सुयश युक्त कथाओं को निरन्तर सुने और गावे; तथा उनके जड़ चेतनात्मक रूप का दर्शन करते हुए सदा सज्जनों की संगति करे॥ १४७॥

चक्रादिपञ्चायुधचिह्निताङ्गः
समीक्ष्य हृष्टश्च हरिप्रियानसौ।

तथाविधान्भक्तिपरः समर्च्चेत्

सुवैष्णवान् जन्मफलादि संस्तुवन् ॥१४८॥

अन्वयप्र०—चक्रादिपञ्चायुधचिह्निताङ्गः भक्तिपरः (भगवद्भक्तिपरायणः अतएव) हृष्टः असौ (वैष्णवः) हरिप्रियान् सुवैष्णवान् समीक्ष्य (स्वस्य) जन्मफलादि संस्तुवन् तथाविधान् (पूर्वोक्तलक्षणलक्षितान् सुवैष्णवान्) समर्च्चेत् ॥ १४८ ॥

किञ्च चक्रादिभिः पञ्चभिरायुधैश्चिह्नितानि अङ्गानि यस्य सः। तथाविधान् उक्तलक्षणलक्षितान् हरिप्रियान् सुवैष्णवान् समीक्ष्य दृष्ट्वा समर्चेत् संपूजयेत्। किं कुर्वन् स्वजन्मफलभाग्यादिकं संस्तुवन् श्लाघमान इत्यर्थः॥ १४८॥

भाषा—चक्रादि पाँचों आयुधों से अङ्कित अंगवाले वैष्णव, भगवान की भक्ति में तत्पर, उनके भक्तों को देख कर प्रसन्न हो अपने जन्म ग्रहण के फल की प्रशंसा करते हुए उनकी सम्यक्-रीति से पूजा करें॥ १४८॥

पञ्चायुधाङ्काङ्कितवैष्णवा ये

सहद्विजक्षत्रियवैश्यशूद्राः।

स्त्रियस्तथाऽन्येऽपि च विष्णुरूपा

जगत्पवित्रप्रपवित्रिणः सदा ॥ १४९ ॥

ते सर्वतीर्थाश्रयभूतदेहा

देशे महाभागवता वसन्ति।

यत्रैव तद्दर्शनसंस्थितिभ्यां

जातं सुपुण्यं निखिलाघनाशनम् ॥१५०॥

अन्वयप्र०—ये द्विजक्षत्रियवैश्यशूद्राः सह (भक्त्या सह) पञ्चायुधाङ्काङ्कितवैष्णवाः (भवन्ति) तथा (पूर्वोक्तप्रकारेण)

स्त्रियः वैष्णव्यः (भवन्ति) अन्येऽपि च (अनुलोमप्रतिलोमजाःसंकर जातीयाः पञ्चायुधाङ्काङ्कितवैष्णवा भवन्ति) ते सर्वतीर्थाश्रयभूतदेहाः ( अतएव ) विष्णुरूपाः सदा जगत्पवित्रप्रपवित्रिणः [ जगत्पावनी-गङ्गादिपावनशीलाः सन्तः ] यत्र (यस्मिन् देशे ) वसन्ति तद्दर्शन-सस्थितिभ्यां (तस्य देशस्य दर्शनेन निवासेन च) निखिलाघनाश-नम् ( समस्तपापविघातकम् ) सुपुण्य जातम् ( उत्पन्नं भवतीति त्वया वेदितव्यमितिशेषः) ॥१४९॥१५०॥

एवं तल्लक्षणमुक्त्वा त महत्त्वमुद्बोधयति-ऽञ्चेति। पञ्चायुधाङ्कै-रङ्किता वैष्णवा ये द्विजक्षत्रियवैश्यशूद्रैःसहवर्त्तमाना स्त्रियः तथाऽन्ये संङ्करजातीयाश्च सदा सर्वदा विष्णुरूपा एव भवद्भिर्बोध्या इति शेषः। कीदृशास्ते जगत्पवित्रप्र वित्रिणः जगत् विश्वं पवित्र निष्पाप कुर्वन्ति पवित्रयन्ति। पवित्रयन्तीति पवित्राणि गङ्गादीनि तीर्थानि "पवित्रयते. पचाद्यच्"। त न्यपि प्रपवित्रयन्ति तच्छीला जगत्पवित्रप्रविञ्त्रिणः जग-त्पावनशीलगङ्गादितीर्थानामपि पावनशीला इत्यर्थः।

तदुक्तम्——

"भवद्विधा भागवता आत्मारामास्तदाश्रया. ।
तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता" इति ॥
"न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः" ॥ इति च ॥१४९॥

अत एवाऽऽह-ते सर्वेति तेष्वाहस्ते ह्यघभिद्धरिरित्युक्तरीत्या सर्वतीर्थाना-माश्रयभूत आधारभूतो देहो येषां ते महाभागवता यत्र देशे वसन्ति तद्देश-दर्शनस्थितिभ्यां जातमुत्पन्नं शोभनं पुण्यं निखिलाऽघानां सर्व-विधपापानां नाशन विद्धीति शेषः ॥ १५० ॥

भाषा०-जो ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, स्त्री या दूसरे लोग ( वर्णसंङ्कर चाण्डालादि ) इन पाँचों आयुधों से अङ्कित होते हैं; वे, समस्त तीर्थों के निवास-स्थान होने के कारण, संसार को सदा पवित्र करनेवाले गंगादि तीर्थों को भी पावन करने वाले और विष्णु स्वरूप ही हैं। ये महात्मा जिस देश में निवास करते हैं; उसके दर्शन एवं वहाँ निवास

करने से समस्त पापों के नाश करनेवाले पुण्यों की उत्पत्ति ( प्राप्ति ) होती है ॥ १४९॥१५० ॥

**तदर्च्चनात्तत्पदनीरपाना-**
**त्तत्सङ्गतेस्तत्प्रणतेर्विधानात् ।**
**नृणां तदुच्छिष्टसुभोजनाच्च**
**स्यात्कोटिजन्मार्ज्जितपापनाशनम् ॥१५१॥**

अन्वयप्र०—तदर्चनात् ( १४६-१४७-१४८ एभिः श्लोकै-रुक्तानि यानि लक्षणानि तैः समन्वितानां वैष्णवानां पूजनात् ) तत्पदनीरपानात् (पूर्वोक्तलक्षणलक्षितानां चरणोदकपानात्) तत्स-ङ्गतेः तत्प्रणतेर्विधानात् (पूर्वोक्तलक्षणयुतानां वैष्णवानां सङ्गस्य प्रणामस्य च करणात् ) तदुच्छिष्टसुभोजनाच्च ( पूर्वोक्तवैष्णवा नामुच्छिष्टस्याऽत्यादरेणाशनाच्च ) नृणां कोटिजन्मार्ज्जितपाप-नाशनम् ( भवति । इति ज्ञातव्यम् ) ॥ १५१ ॥

तदर्चनात् तेषामुक्तलक्षणलक्षितानां भागवतानामर्चनात् तथा तत्पदनीरपानात् तत्पादतीर्थपानात् तत्संगतेः सत्सङ्गस्य विधानात् करणात् ।

अत एवोक्तम्—

"तुलयामलवेनाऽपि न स्वर्गं नाऽपुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताऽऽशिषः" । इति

तथा तत्प्रणतेः प्रणामस्य विधानात् तेषां भागवतानामुच्छि-ष्टस्य सुभोजनात् भक्त्याऽत्यादरेण भोजनाद्धेतोः ।

अत एवोक्तं नारदेन व्यासं प्रति प्रथमस्कन्धे—

"ते मय्यपेताखिलचापलेऽर्भके
दान्तेऽधृतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपां यद्यपि तुल्यदर्शनाः
शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥

उच्छिष्टलेपाननुमोदितो द्विजैः
सकृत्स्म भुञ्जे तदपास्तकिल्बिषः” । इति

नृणामर्चकादीनां कोटिभिर्जन्मभिरर्जितानां पापानां नाशनं स्यात्, पञ्चायुधाङ्केत्यादिभिर्यदुक्त तत्र प्रमाणान्यपि शृणु ।

“मद्रूपो वैष्णवो नाम तुलसीकाष्ठभूषणः ।
शङ्खचक्रगदापद्मैश्चिह्नितो यस्य विग्रहः ॥
ऊर्ध्वपुण्ड्रधरो भक्तस्तुलसीकर्णकण्ठयोः ।
पञ्चायुधाङ्कितो यो वै स एव मम वल्लभः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव तथैव च ।
पञ्चाऽऽयुधाङ्किता देवि ! मद्रूपा नात्र संशयः ॥
दीक्षिताश्च चतुर्वर्णाः स्त्रियश्च श्वपचास्तथा ।
धारयन्त्यूर्ध्वपुण्ड्रं ये देवानामपि वन्दिताः ॥
तुलसीकाष्ठजा माला यस्य कण्ठे हि मण्डिता ।
चिह्नितः शङ्खचक्राभ्यां स मद्रूपो न संशयः ॥
एवं हि कथितं रूपं वैष्णवानां वरानने ! ।
बहूनि सन्ति रूपाणि किमन्यच्छ्रोतुमिच्छसि ॥

पार्वत्युवाच—

वैष्णवानां दर्शने देव । कीदृशं फलमुच्यते ।
पुष्कराद्यानि तीर्थानि तेषु वा कतमोऽधिकः ॥

श्रीभगवानुवाच—

तिस्रः कोट्योऽर्द्धकोटी च सन्ति तीर्थानि सर्वतः ।
दर्शनाद्वैष्णवानां च न तुल्यं हि वरानने ! ॥

पार्वत्युवाच—

काष्ठपाषाणधातूनां तवांशानां हि केशव! ।
एतेषां दर्शनं देव ! साधूनामपि कीदृशम् ॥

श्रीभगवानुवाच—

वैष्णवा हि ममांशाश्च लोके नाऽन्यस्य वै क्वचित् ।
गायन्ति मम कर्माणि विचरन्ति मदात्मकाः ॥

पार्वत्युवाच—

यानि चाऽन्यानि धर्माणि पुराणानीह केशव ! ।
स्पर्शने वैष्णवानां च धर्माणामपि किं फलम् ॥

श्रीभगवानुवाच।

नारायणायुधैश्चिह्नं कुर्वन्ति बाहुमूलयोः।
तेषां संस्पर्शनाद्देवि! हन्ति पापं पुराकृतम्॥
यदा यदा विचरन्ति लोकपावनवैष्णवाः।
तदा तदा तीर्थभूताः पवित्रीकृतनामकाः॥
निष्कामश्चैव मद्भक्तः सकामो लोक उच्यते।
सकामान्पद्भ्यां यच्छामि निष्कामान्मूर्ध्नि चराम्यहम्॥
महाभागवता यत्र वसन्ति विमलाशयाः।
तद्देशो मङ्गलं प्रोक्तं यथा विष्णुपदं शुभम्॥
निमिषं निमिषार्द्धं वा यत्र तिष्ठन्ति वैष्णवाः।
तदेव परमं स्थानं तत्तीर्थं तत्तपोवनम्॥
वैष्णवः परमो धर्मो वैष्णवः परमं तपः।
वैष्णवः परमाराध्यो वैष्णवः परमा गतिः॥
वैष्णवा विष्णुवत् पूज्या मम मान्या विशेषतः।
तेषां कृतेऽवमाने तु विनाशो जायते ध्रुवम्॥
नातः परतरं तीर्थं वैष्णवाङ्घ्रिजलाच्छुभात्।
तेषां पदोदकं नित्यं गङ्गामपि पुनाति हि।
रामभक्तानुशेषं तु यो हि भुङ्क्ते दिने दिने।
सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम्॥
कोटिजन्मार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा।
सद्यः प्रणश्यते नृणां वैष्णवोच्छिष्टभोजनात्॥
अर्चावतारोपादानं वैष्णवोत्पत्तिचिन्तनम्।
मातृयोनिपरीक्षायास्तुल्यमाहुर्मनीषिणः"॥इति॥१५१॥

भाषा—इन उपरोक्त लक्षण युक्त वैष्णवों के दण्डवत, पूजन, चरणोदकपान, आदरयुक्त उच्छिष्ट भोजन एवं संग से मुनष्य के कोटि जन्मों के पाप नष्ट हो जाते है॥ १५१॥

कार्पासकैः सप्तभिरङ्कुतैर्गुणैः
सुनिर्मितं तत्कटिसूत्रमुत्तमम्।

**कौपीनकं वस्त्रयुगं च धारये-**
**त्तथोर्ध्वपुण्ड्रादिकमेव वैष्णवः॥ १५२ ॥**

अन्वयप्र०—कार्पासकैः ( कर्पासोद्भवैः ) अद्रुतैः [ स्थूल-कृशत्वादिरहितैः अर्थात्सर्वत्र समानाकारैः) सप्तभिर्गुणैः (सप्त सङ्ख्याकसूत्रैः ) [ यत् ] सुनिर्मितम् ( सुरचितम् ) तदुत्तमम् सर्वश्रेष्ठ कटिसूत्रम्, कौपीनकम् वस्त्रयुगं ( युगल वस्त्रं सोत्तरीयं धौतवस्त्रम् ) च वैष्णवः ( सर्वत्रव्यापकपरब्रह्मश्रीरामभक्ति सम्पादकः ) धारयेत । तथा (यथा श्रीरामभक्तिसम्पादनकामनया कटिसूत्रादिकं धृतं तथैव ) ऊर्ध्वपुण्ड्रादिकमेव ( ऊर्ध्वपुण्ड्रादिकं च धारयेत् ) ॥ १५२ ॥

एवं तत्स्वरूपादिकमुक्त्वा सम्प्रति तत्कर्तव्याचरणमप्याह-कार्पासेति । वैष्णवः कर्पासेन निर्वृत्तानि कार्पासकानि तैः सप्तभिः सप्तसंख्याकैः गुणैः सूत्रैः सुनिर्मितं रचितमुत्तमं कटिसूत्रं कौपीनं च वस्त्रयुगमूर्ध्ववस्त्रमधोवस्त्रमिति वस्त्रद्वयं च तथैव ऊर्ध्वपुण्ड्रादिकं धारयेदित्यन्वयः ॥

तथा चोक्तं भरद्वाजसंहितायाम्—

"कौपीनं कटिसूत्रं वस्त्रयुग्मं च धारयेत् ।
न कन्था जीर्णवासो वा केशवस्त्रं न धारयेत् ॥
तामसं वस्त्रमेकं तु राजसं वसनद्वयम् ।
कौपीनसहितं यत्तु सात्विकं मुनिभिः स्मृतम् ॥
कौपीनं कटिसूत्रं च वस्त्रयुग्मं तु धारयेत् ।
धारयेदूर्ध्वपुण्ड्रांस्तु सच्छिद्रानेव दैशिकः ॥
पञ्चभिः सप्तभिर्वापि गुणैः कार्पासनिर्मितैः ।
इदं नव्यमिति प्रोक्तं कटिसूत्रस्य लक्षणम्" इति ॥१५२॥

भाषा—परब्रह्म श्री रामजी में परम प्रेम सम्पादन करने वाले वैष्णव, कपास ( रुई ) के सर्वत्र-समान ( एकाकार ) कते हुए सात-सूतों से अच्छी तरह बने उत्तम कटिसूत्र (आड़बन), कौपीन (लंगोटी), और

साफी के सहित धोती (अँचला) तथा उसी प्रकार ऊर्ध्वपुण्ड्रादिक को भी धारण करें ॥ १५२ ॥

**तेषां निवासोऽथ निरूप्यतेऽधुना**
**मोक्षप्रदःशास्त्रसुसम्मतोऽयम् ।**
**महामते! वैष्णवभेदमुक्त्वा**
**जिज्ञासुबोध्यं बहुधा विबुध्यताम् ॥ १५३ ॥**

अन्वयप्र०—हे महामते ! ( विशुद्धप्रज्ञ ! ) बहुधा जिज्ञासुबोध्यम् (परब्रह्मज्ञातुमिच्छद्भिरनेकप्रकारेण ज्ञातव्यम्) वैष्णवभेदम् ("अथोच्यते वैष्णवभेद ईप्सित १२४इत्यारभ्य "तथा युक्ता मुमुक्षवः" १३७ इत्यन्तेन ग्रन्थसन्दर्भेण वैष्णवानां पार्थक्यम् ) उक्त्वा ( कथयित्वा ) अथाधुना ( सम्प्रति ) शास्त्रसुसम्मतो मोक्षप्रदोऽयं तेषां ( वैष्णवानाम् ) निवासः ( निवासस्थानम् ) निरूप्यते (मया श्रीरामानन्देन कथ्यते) [त्वया सुरसुरानन्देन] विबुध्यताम् (विज्ञायताम्) ॥ १५३ ॥

तेषां कुत्र कार्य्यो निवास इति प्रश्नस्योत्तरमाह-तेषामिति । हे महामते ! सुरसुरानन्द ! जिज्ञासूनां बोध्यं ज्ञातव्यं बहुधाऽनेकप्रकारेण सलक्षणं वैष्णवभेदमुक्त्वा अथानन्तरं तद्भेदादिकथनानन्तरम् अधुना इदानीं मोक्षप्रदो मोक्षदायकः शास्त्राणां सुसंमतोऽयं तेषां वैष्णवानां निवासो निवासस्थानं निरूप्यते वर्ण्यत इति भवता विबुध्यतां विशेषेण ज्ञायतामित्यर्थः ॥ १५३ ॥

( निवास-स्थान-निरूपण )

भाषा—हे महामते ! ( सुरसुरानन्द ! ) जिज्ञासुओं के जानने योग्य वैष्णव-भेदों के कथनानन्तर अब मैं, शास्त्र-सम्मत, एवं मोक्षप्रद वैष्णवों के निवास-स्थान का निरूपण करता हूँ, उसे अच्छी तरह समझो ॥ १५३ ॥

अशेषतीर्थेषु वसेत्समर्चयन्
स तत्र तत्राविरभूदनुत्तमम् ।
तथा तथा तं जगतामनन्यधीः
पतिं चतुर्वर्गफलप्रदं हरिम् ॥ १५४ ॥

अन्वयप्र०-सः (श्रुतिस्मृतिसुप्रसिद्धो हरिः, यत्र यत्र यथा यथा) आविरभूत् । तत्र तत्र (तेषु तेषु) अशेषतीर्थेषु (समस्ततीर्थेषु) तम् (आविर्भूतम्) जगतां पतिम् (समस्तलीलाविभूत्यादीनां पालकम्) चतुर्वर्गफलप्रदम् (अर्थधर्मकाममोक्षदम्) अनुत्तमम् (सर्वोत्तमम्) हरिम् (सेवकदुःखापहारकं भगवन्तम् तथा तथा) समर्चयन् (सम्यक् यथाशास्त्रं पूजयन्) अनन्यधीः (स्वेष्टदेवमात्रनिष्ठः) वसेत् (तेषु तेषु तीर्थेषु निवासं कुर्यात्) ॥१५४॥

न अन्यस्मिन् देवान्तरे मन्त्रान्तरे च धीर्यस्य सोऽनन्यधीर्वैष्णवः जगतां पतिं चतुर्वर्गधर्मार्थकाममोक्षरूपफलस्य प्रदातारम् यथा यथा तत्र तत्राऽयोध्यादिषु आविरभूत्तमनुत्तमं रामादिरूपं तथा तथा समर्चयन् सन् तत्र तत्रायोध्यादिषु अशेषतीर्थेषु सकलतीर्थेषु वसेत् निवासं कुर्यादित्यर्थः ॥१५४॥

भाषा०—अपने इष्ट मात्र में निष्ठा रखने वाले वैष्णवगण, संसार के पालक, अर्थ, धर्म, काम, मोक्ष के दाता श्रीहरि जिन जिन श्रेष्ठ स्थानों में आविर्भूत हुए हैं। उन उन समस्त तीर्थों में उनकी सम्यक्-रीति से अर्चना करते हुए वहाँ निवास करें ॥ १५४ ॥

वैकुण्ठदेशे खलु वासुदेव-
मामोदसंज्ञे त्वथ कर्षणाह्वम् ।
प्रद्युम्नमब्जाक्षमपि प्रमोदे
सम्मोद ईशन्तु तथाऽनिरुद्धम् ॥ १५५ ॥

तान्येव तत्तन्नामत आह-वैकुण्ठेति। वैकुण्ठदेशे वैकुण्ठे खलु निश्चयेन सकलार्थदायिन धर्मार्थकाममोक्षदानशीलं वासुदेवमाराधयद्भिः शुभार्थिभिर्मोक्षाकांक्षिभिर्वैष्णवोत्तमैर्नितरां सर्वदा निवासः कार्य्य इति त्रयोदशेन श्लोकेनान्वयः। एव प्रतिश्लोकमेतस्य संबन्धः। आमोदसञ्ज्ञे तु तीर्थविशेषे कर्षणाह्व सकर्षणनामानम्। प्रमोदे अब्जाक्षं कमलतुल्यनेत्रं प्रद्युम्नम्। तथा ईशमनिरुद्धं सम्मोदे॥१५५॥

शुभसत्यलोके वरेण्यं सर्वदेवश्रेष्ठं विष्णुम। अथ सूर्य्यमण्डले तु पद्माक्षम्। क्षीराब्धिमध्ये क्षीरसमुद्रमध्ये तु शोभते इति शुभं शोभमानं शेषशायिनम्। द्वीपवरे द्वीपश्रेष्ठे श्वेते श्वेतद्वीपे तारकं तारकनामानम्॥१५६॥

( उपर्युक्त कथित वैष्णवों के निवास योग्य स्थानों की क्रमशः इन तेरहों श्लोकों में सूची दी गयी है। इसमें वहाँ के भगवान के नाम के साथ स्थान का भी नाम दिया गया है )

१ 'वैकुण्ठ' तीर्थ में श्री वासुदेव जी, २ 'आमोद' में श्री संकर्षण जी, ३ 'प्रमोद' में श्री प्रद्युम्न जी, ४ 'सम्मोद' में श्री अनिरुद्धजी ॥१५५॥

५ 'सत्य-लोक' में श्री विष्णुजी ६ 'सूर्य्यमण्डल' में श्री पद्माक्षजी, ७ 'क्षीरसागर' में श्री शेषशायी जी, ८ 'श्वेतद्वीप' में श्री तारक जी ॥१५६॥

तथा बदर्य्याभिध आश्रमे वरे
सुरर्षिराजर्षिमहर्षिसेविते।
नारायणं तं निखिलाऽभिवन्द्यं
मुनीशसेव्ये त्वथ नैमिषे हरिम्॥ १५७॥
शालग्राममगोघदिव्यफलदं देवं हरिक्षेत्रतो-
ऽयोध्यायां रघुपुङ्गवं गुणनिधिं श्रीरामचन्द्रं प्रभुम्।
सत्स्थाने मथुराभिधाश्रमवरे श्रीबालकृष्णं परं
मायायां मधुसूदनं सुरनरध्येयाङ्घ्रिपद्मं सदा॥१५८॥

अन्वयप्र०—तथा बदर्य्याभिधे वरे आश्रमे (पूर्वोक्त-

रीत्यैव बदरीनामकाश्रमे श्रेष्ठे) निखिलाऽभिवन्द्यं नारायणम् (समस्तदेवदानवाद्यभिवन्दनीयं नारायणनामकं भगवन्तम्) अथ मुनीशसेव्ये नैमिषे तु (एवं मुनिवरैः सेवनीये नैमिषारण्ये) हरिम् (हरिनामानं भगवन्तम्) ॥ १५७ ॥

अन्वयप्र०—हरिक्षेत्रतः [हरिक्षेत्रनामकतीर्थे] अमोघदिव्यफलदं शालग्रामदेवम् [अनन्तदिव्यफलदातारं शालग्रामनामानं भगवन्तम्] अयोध्यायाम् [अयोध्यानाम्नि तीर्थे] रघुपुङ्गवं गुणनिधिं प्रभुं श्रीरामचन्द्रम् [समस्तजीवानां नाथं वात्सल्यादिगुणसागरं दिव्यादिव्योभयविभूतिनायकम् सीतासमेतं रामचन्द्राख्यं परं ब्रह्म] सत्स्थाने मथुराभिधाश्रमवरे [मथुरानामकशुभस्थाने] श्रीबालकृष्णं परं [श्रिया रुक्मिण्या सहितं बालकृष्णनामकं परमात्मानम्] मायायाम् [मायाख्यतीर्थे] सदा सुरनरध्येयाङ्घ्रिपद्मं मधुसूदनम् [सर्वदा देवैर्मनुष्यैश्च ध्यानार्हचरणकमलम्] ॥१५८॥

सुरर्षिराजर्षिमहर्षिभिः सेविते वरे श्रेष्ठे बदर्याभिधे बदरीति आसमन्तादभिधा नाम यस्य तस्मिन् बदरीसंज्ञके आश्रमे निखिलानां देवादीनामभिवन्द्यं वन्दनीयम् तन्नारायणम्। अथ मुनीशैः सेव्ये सेवनीये नैमिषे नैमिषारण्ये हरिम् ॥ १५७ ॥

हरिक्षेत्रतः हरिक्षेत्रे 'सार्वविभक्तिकस्तसिः' अमोघदिव्यफलदं मोक्षप्रदं देवं शालग्रामम्। अयोध्यायां तु रघुपुङ्गव रघुश्रेष्ठं गुणानां वात्सल्यादीनां निधिमाधारभूतं प्रभुं श्रीरामचन्द्र श्रिया सीतया सहितं रामचंद्रम्। मथुराभिधाश्रमवरे सतां स्थाने स्थितियोग्ये मथुरायाम् परं परमात्मानं श्रीबालकृष्णम्। मायायां हरिद्वारे सुरनरैर्ध्येये अङ्घ्रिपदे यस्य स तम् मधुसूदनं मधुसूदननामानम् ॥१५८॥

९ 'बद्रीआश्रम' में श्री नारायण जी, जो श्रेष्ठ सुरर्षि, राजर्षि और महर्षियों से सेवित हैं, १० 'नैमिषारण्य' में अखिल वन्दनीय मुनीशों से सेव्य श्री हरि, ॥१५७॥

११ 'हरिक्षेत्र' में अमोघ दिव्य फल के दाता श्रीशालग्राम जी

१२ 'अयोध्या' में गुण के सागर रघुवर श्रीरामचन्द्रजी प्रभु, श्रेष्ठ स्थान श्री १३ 'मथुरा' में श्री बालकृष्ण जी, १४ 'माया' में श्रीमधुसूदन जी, जिनके चरणकमल का सदा सुर नर ध्यान करते है ॥१५८॥

**काश्यां भोगिशयं सनातनमथावन्त्यामवन्तीपतिं**
**श्रीमद्द्वारवतीतिनाम्नि शुभदे श्रीयादवेन्द्रं मुदा।**
**रम्ये श्रीव्रजनामके सुरनुतं गोपीजनानां प्रियम्**
**ब्रह्मेशादिकिरीटसेवितपदाम्भोजं भुजङ्गाश्रयम् ॥१५६॥**

**वृन्दावने सुन्दरनन्दसूनुं**
**गोविन्दमेवं त्वथ कालियह्रदे।**
**गोवर्द्धने गोपसुवेषधारिणं**
**तथा भवघ्नेऽपि च पद्मलोचनम् ॥१६०॥**

अन्वयप्र०—काश्या (काशीनामके तीर्थे) सनातनं भोगिशयम् (सदा विद्यमान भोगिशयनामानं भगवन्तम्) अथाऽवन्त्याम् [एवम् अवन्तीनामकतीर्थे) अवन्तीपतिम् (अवन्तीपतिनामानं भगवन्तम्) श्रीमद्द्वारावतीतिनाम्नि शुभदे ( शोभासमन्विते द्वारका इति प्रसिद्धे कल्याणप्रदे तीर्थे ) श्रीयादवेन्द्रम् ( रुक्मिणीसहितं यादवेन्द्राख्यं भगवन्तम् ] रम्ये व्रजनामके ( रमणीये व्रजनामके तीर्थे) गोपीजनानां प्रियम् [गोपीजनप्रियनामानं भगवन्तम्] ब्रह्मेशादिकिरीटसेवितपदाम्भोजभुजङ्गाश्रयम् (विधिशिवादीनां शिरोभूषणैः सेवितचरणकमलं शेषाऽऽसनम्) ॥१५९॥

अन्वयप्र०—वृन्दावने सुन्दरनन्दसूनुम् ( वृन्दावनाख्ये तीर्थे सुन्दरनन्दसूनुनामानं भगवन्तम् ]अथ कालियह्रदे तु [ एवमेव कालियह्रदाख्ये तीर्थे ) गोविन्दमेव ( गोविन्दाख्यं भगवन्तमेव ) गोवर्द्धने गोपसुवेषधारिणम् ( गोवर्द्धनाख्ये तीर्थे गोपसुवेष-

धारिनामानं भगवन्तम् ) तथा भवघ्नेऽपि पद्मविलोचनम् [ पूर्वोक्तप्रकारेणैव भवघ्नाख्येऽपि तीर्थे पद्ममविलोचननामानं भगवन्तम् अर्चयद्भिरुक्ततीर्थेषु निवासः कार्य्यः ] ॥१६०॥

काश्यां वाराणस्यां सनातनं नित्यं भोगिशयं भोगिशयननामानम् अवन्त्यां पुर्याम् अवन्तीपति भगवन्तम् । शुभदे मोक्षप्रदे द्वारवतीति नाम्नि तीर्थे द्वारकायां यादवेन्द्रम् । रम्ये रमणीये व्रजनामके व्रजे गोपीजनानां-प्रियं गोपीजनप्रियम् । कीदृशं तं ब्रह्मेशादीनां चतुर्मुखशिवादीनाम् किरीटैः शिरोभूषणैः सेविते पदाम्भोजे चरणकमले यस्य स तम् । पुनः भुजङ्गः शेष आश्रय आधारः शयनं यस्य स तम् ॥ १५९ ॥

वृन्दावने सुन्दरश्चासौ नन्दसूनुश्च तम् । अथ कालियस्य सर्पविशेषस्य ह्रदे कुण्डे यमुना मध्यस्थे तु गोविन्दं गोविन्दसञ्ज्ञकं भगवंतम् । गोवर्धने गोवर्धनाख्यपर्वते गोपस्य सुवेषं धरति तच्छीलस्तं गोपवेषं भगवन्तम् । संसारनिवर्तकत्वात् भवघ्ने भवघ्नसञ्ज्ञके तीर्थविशेषे पद्मलोचनं पद्म-लोचनसंज्ञं भगवन्तम् ॥ १६० ॥

१५ 'काशी' में श्री भोगिशय जी, जो सनातन है; १६ 'अवन्तिका' में श्री अवन्तीपति, १७ श्री 'द्वारावती' में श्रीयादवेन्द्र, १८ सुन्दर श्री 'व्रज' में गोपीजन प्रिय, जिनके चरणकमल ब्रह्मा शिव आदि के किरीट से सेवित और जो शेष पर शयन किये हुए है ॥१५९॥

१९ 'बृन्दावन' में सुन्दर श्री नन्दलला जी, २० 'कालीह्रद' में श्री गोविन्दजी, २१ 'गोवर्द्धन' में श्री गोपवेषधारी जी, २२ 'भवघ्न' में श्री पद्मलोचन जी ॥ १६० ॥

शारिं तथा गोमत एव पर्वते,
तथा हरिद्वार ऋजुं जगत्पतिम् ।
तीर्थे प्रयागे वत माधवं च
तथा गयायां तु गदाधरं परम्॥१६१॥
गंगासागरसंगमेऽतिशुभदे विष्णुं तथा राघवं

शश्वद्भूरिगुणालयं मुनिवृते श्रीचित्रकूटे विभुम्।
नन्दिग्राम उदारकीर्त्तिनिकरे श्रीराक्षसघ्नं प्रभुं
रम्ये श्रीमति विश्वरूपिणमथो क्षेत्रे प्रभासेऽमले॥१६२॥

अन्वयप्र०—तथा गोमते पर्वते शारिम् ( गोमताख्याद्रौ शारिनामानं भगवन्तम् ) तथा हरिद्वार ऋजुं जगत्पतिम् [ हरिद्वार इति प्रसिद्धे तीर्थे कोमलस्वभावं जगत्पतिनामानं भगवन्तम् ] प्रयागे तीर्थे वत माधवं ( प्रयागाख्ये तीर्थे निश्चयेन माधवनामानं भगवन्तम् ) तथा गयायान्तु परं गदाधरम् ( पूर्वोक्त रीत्या गयाख्ये तीर्थे गदाधरनामकं परमात्मानम् ) ॥ १६१ ॥

अतिशुभदे गङ्गासागरसङ्गमे विष्णुम् [ मुक्तिप्रदे गङ्गासागरयोः सङ्गमे विष्णुनामानं भगवन्तम् ] मुनिवृते श्रीचित्रकूटे [ रामरहस्यत्रयादिमननशीलमहर्षिवृन्दैराक्रान्ते श्रीचित्रकूटाख्ये तीर्थे ) शश्वद्भूरिगुणालयं विभुं राघवम् ( समस्तकारुण्यवात्सल्याद्यनेकदिव्यगुणमहोदधिं सर्वत्र व्यापकं राघवनामानं भगवन्तम् ) उदारकीर्त्तिनिकरे नन्दिग्रामे श्रीराक्षसघ्नम् प्रभुम् ( नन्दिग्रामाख्ये तीर्थे राक्षसघ्ननामानम् ) अथो अमले रम्ये श्रीमति प्रभासे क्षेत्रे विश्वरूपिणम् ( मलरहितत्वादति रमणीये शोभासम्पन्ने प्रभासाख्यक्षेत्रे विश्वरूपिनामकं भगवन्तम् आराधयद्भिर्वैष्णवोत्तमैरुक्ततीर्थेषु निवासः कार्य इत्युत्तरेणान्वयः । ) ॥ १६२ ॥

तथा गोमते पर्वते शारिं शारिसंज्ञं भगवन्तम्। हरिद्वारे हरिद्वारसंज्ञे तीर्थे ऋजुं कोमलस्वभावं जगत्पतिम्। प्रयागे तीर्थे माधवं माधवसञ्ज्ञम् मा लक्ष्मीस्तस्या धवः पतिस्तम्। गयायां तीर्थे तु परं परमात्मानं गदाधरं गदाधरसञ्ज्ञम् ॥ १६१ ॥

अतिशुभदे मोक्षप्रदे गङ्गासागरयोः संगमे विष्णुं भगवन्तम्। मुनिभिः रामरहस्यत्रयादिमननशीलैर्महर्षिभिर्वृते श्रीचित्रकूटे विभुं चराचरव्यापकं

शश्वदविच्छेदेन भूरिगुणानामनन्तकल्याणवात्सल्यादिगुणानामालयमाश्रयं तं राघवं भगवन्तम् । रम्ये उदाराणां कीर्त्तीनां निकरो यस्मिन् तस्मिन्नन्दिग्रामे प्रभुं श्रीरात्तसघ्नम् । अथोऽमले पापनिवर्तके प्रभासक्षेत्रे विश्वरूपिणम् ॥ १६२ ॥

भा०—२३ 'गोमतपर्वत' में श्रीशारिजी, २४ 'हरिद्वार' में सुकुमार श्री जगत्पति जी, २५ 'प्रयाग' में श्री माधव जी, २६ 'गया' में श्री गदाधर जी ॥ १६१ ॥

भा०—२७'गंगासागर' में कल्याणप्रद श्रीविष्णुजी, मुनियों से भरे २८'चित्रकूट' में कल्याण गुणों के समूह का आश्रय 'श्री राघवजी' २९'नन्दि ग्राम' में उदार कीर्त्ति के समूह वाले श्री रात्तसघ्न जी प्रभु, ३०'प्रभास क्षेत्र' में सुन्दर श्री विश्वरूपी जी, ॥ १६२ ॥

**श्रीकूर्मेऽचले उत्तमे च सदयं कूर्म्मं सुरेशेडितम्**
**नीलाद्रौ पुरुषोत्तमं त्वथ महासिंहं च सिंहाचले ।**
**श्रीमन्तं तुलसीवने तु गदिनं सर्वार्थदं तत्प्रिये**
**क्षेत्रे श्रीकृतशौचके तु सततं पापापहं चेश्वरम् ॥१६३॥**
**श्वेताद्रौ त्वथ सिंहरूपिणमथो श्रीधर्मपुर्य्यान्तथा**
**योगानन्दमशेषदेवसुनुतं श्रीकाकुले तु प्रभुम् ।**
**देवैर्वन्द्यमथान्ध्रनायकमिह श्रीदं तथाऽहोवले**
**तस्मिन्श्रीगरुडादिसंज्ञ उचिते देवं हिरण्यार्दनम् ॥१६४॥**

अन्वयप्र०—उत्तमे श्रीकूर्मेऽचले सुरेशेडितम् सदयं कूर्म्मम् (पर्वत्तश्रेष्ठे कूर्माचले कूर्मनामानं भगवन्तम) नीलाद्रौ पुरुषोत्तमम् (नीलपर्वते पुरुषोत्तमनामानम् भगवन्तम् ) अथ सिंहाचले तु महासिंहम् ( सिंहाचलाख्ये पर्वते नृसिंहनामकं भगवन्तम् ) तत्प्रिये क्षेत्रे तुलसीवने तु श्रीमन्तं सर्वार्थदं गदिनम् (भगवत्प्रिय-

क्षेत्रे तुलसीवनाख्ये तु अर्थधर्मकाममोक्षानां दातारम् गदिनामानं भगवन्तम्) श्रीकृतशौचके तु सततं पापापहम् ईश्वरञ्च (शोभने कृतशौचनाम्नि तीर्थे तु सर्वदा सर्वेषामीशनशीलं पापहराख्यं भगवन्तम्) ॥१६३॥

अन्वयप्र०—अथ श्वेताद्रौ तु सिंहरूपिणम्(श्वेताख्ये पर्वते तु सिंहरूपिणं भगवन्तम्) अथो धर्मपुर्य्याम् अशेषदेवसुनुतं योगानन्दम्(धर्मपुरीनामके तीर्थे समस्तदेवैः स्तुतं योगानन्दनामानं भगवन्तम्) अथ श्रीकाकुले तु देवैर्वन्द्यम् आन्ध्रनायकं प्रभुम्। तथा गरुडाद्रिसंज्ञे तस्मिन्नुचिते अहोबले हिरण्यार्दनं देवम् (समर्चयद्भिरुक्ततीर्थेषु निवासः कार्य्यः) ॥ १६४ ॥

उत्तमे श्रेष्ठे श्रीकूर्मे कूर्माख्येऽचले पर्वते सुरेशैरिन्द्रादिभिरीडितम् दयालुं कूर्मं धृतकमठाकृतिं भगवन्तम्। नीलाद्रौ नीलशैले पुरुषोत्तमं पुरुषोत्तमनामानम्। सिंहाचले महासिंहं नृसिंहम्। तस्य भगवतः प्रिये क्षेत्रे तुलसीवने तु सर्वार्थदं चतुर्वर्गफलस्य प्रदातारं गदिनं भगवन्तम् श्रीकृतशौचके कृतशौचनामके क्षेत्रे तु ईश्वरं सदा सर्वविधसमर्थं पापापहं पापनिवर्तनशीलं पापहरसंज्ञं भगवन्तम् ॥ १६३ ॥

अथ श्वेताद्रौ श्वेतपर्वते तु सिंहरूपिणम्। अथो धर्मपुर्य्याम् अशेषैर्देवैः सुनुतं सुष्ठु स्तुतं योगानन्दम्। अथ श्रीकाकुले तु प्रभुं देवैर्वन्द्यं वन्दनीयम् आन्ध्रनायकम्। उचिते अथाऽहोबले तस्मिन् गरुडाद्रिसंज्ञे पर्वते हिरण्यार्दनं देवं हिरण्यासुरमर्दनं भगवन्तम् ॥ १६४ ॥

भाषा—३१ 'कूर्माचल' में श्रेष्ठ दयालु श्री कूर्म्म जी, जो इन्द्र से पूजित है, ३२ 'नीलाद्रि' में श्री पुरुषोत्तम जी; ३३ 'सिंहाचल' में श्री महासिंह जी, श्री ३४ 'तुलसीवन' में श्री गदी जी, जो सभी प्रकार के मनोरथों के पूर्ण करने वाले है, ३५ श्री 'कृतशौचक' में श्री पापापह भगवान, ॥ १६३ ॥

३६ 'श्वेताचल' में श्री सिंहरूपी जी; श्री ३७ 'धर्म्मपुरी' में श्री योगानन्द जी; ३८ 'काकुल' में अशेष देवताओं से वन्दित श्री आन्ध्रनायक जी, ३९ 'अहोबल' नाम से प्रसिद्ध 'श्रीगरुड़ाद्रि' में श्री हिरण्यार्दनदेव जी १६४॥

श्रीविठ्ठलं तं किल पाण्डुरङ्गे
श्रीवेङ्कटाद्रौ तु रमासखं ह ।
नारायणं श्रीमति यादवाद्रौ
नृसिंहमित्थं घटिकाचलेऽपि ॥ १६५॥
सुरेशवन्द्यं वरदं त्वहर्दिवं
सुनिर्मले श्रीशुभवारणाऽचले ।
काञ्च्यां तथा श्रीकमलायताक्षं
समर्चनीयं बुधवैष्णवोत्तमैः ॥१६६॥

अन्वयप्र०—पाण्डुरङ्गे ( एतन्नामके तीर्थे ) किल ( निश्चितम् ) तं श्रीविठ्ठलम्, श्रीवेङ्कटाद्रौ ( श्रीवेङ्कटपर्वते ) तु रमासखम् श्रीमति यादवाद्रौ नारायणम् इत्थं ( पूर्वोक्तप्रकारेण ) घटिकाचलेऽपि नृसिंहम् (समर्चयद्भिस्तत्र निवासः कार्यः)॥१६५॥

सुनिर्म्मलश्रीशुभवारणाचले अहर्दिवम् ( अहोरात्रम् ) सुरेशवन्द्यं वरदम् (वरदनामानं भगवन्तम्) तथा काञ्च्यां (काञ्चीति प्रसिद्धक्षेत्रे ) बुधवैष्णवोत्तमैः समर्चनीयं श्रीकमलायताक्षं (कमलनयननामकं भगवन्तं समर्चयद्भिर्वासःकार्य्यः) ॥ १६६ ॥

पाण्डुरङ्गे क्षेत्रे श्रीविट्ठलं विट्ठलसंज्ञं भगवन्तम् । वेङ्कटाद्रौ वेङ्कटपर्वते तु रमासखम् । यादवाद्रौ नारायणमाराधयद्भिर्निवास.कार्य्यः । घटिकाचले पर्वतविशेषे नृसिंहम् ॥ १६५ ॥

श्रीशुभे शोभमाने वारणाचले वारणगिरौ कीदृशे सुनिर्मले निवसतांपापविनाशके अहर्दिवम् अहन्यहनि 'अचतुरेति वीप्सायां द्वन्द्व.'सुरेशैर्वन्द्यं वन्दनीयं वरदं वरमभिलषितं ददातीति वरदसंज्ञं भगवन्तम् तथा काञ्च्यां पुर्यां बुधैर्वैष्णवोत्तमैः समर्चनीय श्रीकमले इव आयते विशाले अक्षिणी नेत्रे यस्य स तं कमललोचनसंज्ञं भगवन्तम् ॥ १६६ ॥

४०'पाण्डुरंग' में श्री विठ्ठल जी; ४१ "वेङ्कटाद्रि" में श्री निवास जी; '४२ यादवाद्रि' में श्री नारायण जी; ४३ "घटिकाचल" में श्रीनृसिंह जी,॥ १६५॥

अहर्निश निर्मल श्री४४ "वारणाचल" में इन्द्र से वन्दित श्री वरदराजजी, ४५'काञ्ची' में विद्वान् वैष्णवों से अर्चनीय श्री कमल लोचन जी; *॥ १६६

**तोताद्रिसंज्ञादिषु वैष्णवोत्तमै-**
**रेवं तथा तुङ्गशयादिकं प्रभुम् ।**
**कार्य्यो निवासो नितरां शुभार्थिभि-**
**राराधयद्भिः सकलार्थदायिनम् ॥१६७॥**

अन्वयप्र०—एवम् ( उक्तप्रकारेण ) तोताद्रिसंज्ञादिषु ( तीर्थेषु ) सकलार्थदायिनं तुङ्गशयादिकं प्रभुम् ( भगवन्तम् ) आराधयद्भिः नितरांशुभार्थिभिः ( निरन्तर मोक्षाभिलाषिभिः ) वैष्णवोत्तमैः तथा ( पूर्वोक्तप्रकारेण ) निवासःकार्य्यः ॥१६७॥

एवं तोताद्रिसंज्ञादिषु स्थानेषु प्रभु तुङ्गशयादिकम् तोताद्रौ तुङ्गशयन सञ्ज्ञं भगवन्तम् । अत्रादिशब्दाभ्यां कामाशिक्यां नृसिंह वलिपुरे महावल-मिति वलिपुरप्रभृतिषु महावलप्रभृतीनामाराधनपूर्वको निवासः संगृहीत इति बोध्यम् । एवञ्च मुमुक्षुर्वैकुण्ठदेशादिषु अनन्यत्वेन वासुदेवादीन् समर्चयन् निवसेदिति फलितम् ।

तथा चोक्तमष्टोत्तरशतस्थानस्तोत्रे—

"अष्टोत्तरशतस्थानेष्वाविर्भूतं जगत्पतिम् ।
नमामि जगतामीशं नारायणमनन्यधीः ॥

---

* काञ्ची में १ 'श्रीकमललोचन जी के सहित २ 'श्रीयथोक्तकारी जी; ३ श्री परमेशपुराश्रय जी; ४ श्रीपाण्डवदूत जी; श्रीत्रिविक्रम जी; ६ 'श्रीनृसिंह जी; ७ श्रीअष्टभुज भगवान; ८ श्रीमेघाकारजी; ९ श्रीशुभाकार जी; १० 'श्री शेषाकार जी, ११ 'श्रीशुभप्रद जी; १२ श्री कालमेघजी, १३ श्रीखगारूढ़जी;- १४ 'श्री कोटिसूर्य्यसमप्रभजी, १५ 'श्री दीपप्रकाशजी; १६ 'श्रीदेवाधिप जी; १७ 'श्रीप्रवालवर्ण जी; १८ 'श्री दीपाभ जी; ये अठारह भगवद्विग्रह पूजनीय है ।

श्रीवैकुण्ठे वासुदेव मामोदे कर्पणाह्वयम् ।
प्रद्युम्नं च प्रमोदाख्ये सम्मोदे चानिरुद्धकम् ॥
सत्यलोके तथा विष्णुं पद्माक्षं सूर्य्यमण्डले ।
क्षीराब्धौ शेषशयन श्वेतद्वीपे च तारकम् ॥
नारायणं वदार्याख्ये नैमिषे हरिमव्ययम् ।
शालग्रामं हरिक्षेत्रे त्वयोध्यायां रघूत्तमम् ॥
मथुरायां बालकृष्ण मायाया मधुसूदनम् ।
काश्यां तु भोगिशयनम वन्त्याम वन्तीपतिम् ॥
द्वारवत्यां यादवेन्द्रं व्रजे गोपीजनप्रियम् ।
वृन्दावने नन्दसुनुं गोविन्द कालियह्रदे ॥
गोवर्धने गोपवेषं भवघ्ने पद्मलोचनम् ।
गोमते पर्वते शारिं हरिद्वारे जगत्पतिम् ॥
प्रयागे माधवं चैव गयायां च गदाधरम् ।
गंगासागरके विष्णुं चित्रकूटे तु राघवम् ॥
नन्दिग्रामे राक्षसघ्नं प्रभासे विश्वरूपिणम् ।
श्रीकूर्मे कुर्म्ममचले नीलाद्रौ पुरुषोत्तमम् ॥
सिंहाचले महासिंहं गदिनं तुलसीवने ।
कृतशौचे पापहरं श्वेताद्रौ सिंहरूपिणम् ॥
योगानन्दं धर्मपुर्यां काकुले त्वान्ध्रनायकम् ।
अहोबले गारुडाद्रौ हिरण्यासुरमर्दनम् ॥
विठ्ठलं पाण्डुरगे तु वेङ्कटाद्रौ रमासखम् ।
नारायणं यादवाद्रौ नृसिंहं घटिकाचले ।
अन्तरा शिति कण्ठस्य कामकोष्ट्यां शुभप्रदम् ।
वरदं वारणगिरौ काञ्च्यां कमललोचनम् ॥
यथोक्तकारिणं चैव परमेशपुराश्रयम् ।
पाण्डवानां तथा दूत त्रिविक्रममथोन्नतम् ॥
कामासिक्यां नृसिंहं च तथाष्टभुजसञ्ज्ञकम् ।
मेघाकार शुभाकारं शेपाकारं तु शोभनम् ॥
प्रवालवर्णं दीपाभं काञ्च्यामष्टादशस्थितम् ।
श्रीमद्गृध्रसरस्तीरे भान्तं विजयराघवम् ॥
भिक्षारण्ये महापुण्ये १ वसन्त वीरराघवम् ।
तोताद्रौ तुङ्गशयनं गजार्तिघ्न गजस्थले ॥

---

१ शयानम पा

महाबलं बलिपुरे भक्तिसारे जगत्पतिम् ।
ऐन्द्रे तु देवदेवेशं गोपपुर्यां तु गोपतिम् ॥
महावराहं १श्रीमुष्ट्यां २महीन्द्रे पद्मलोचनम् ।
श्रीकोशे तु जगत्पथं श्रीधामे जानकीप्रियम् ॥
श्रीनिवासस्थले पूर्णं सुवर्णं स्वर्णमन्दिरे ।
महापुर्यां महाबाहुमाकाशनगरे हरिम् ।
उत्पलावर्तके शौरिं मणिकूटे मणिप्रभम् ।
कृष्णक्षेत्रे महाविष्णुं भवितस्थाने च भक्तिदम् ॥
श्वेतह्रदे शान्तिमूर्तिं हेमपुर्यां सुरप्रियम् ।
भर्गाख्यं भार्गवस्थाने वैकुण्ठाख्ये तु माधवम् ॥
पुरुषोत्तमे भक्तसखं चक्रतीर्थे सुदर्शनम् ।
कुम्भकोणे शार्ङ्गपाणि भूतस्थाने तु शार्ङ्गिणम् ॥
कपिस्थले गजार्तिघ्नं गोविन्दं चित्रकूटके ।
खण्डने ३ हरसापघ्नं भक्तानामभयङ्करम् ॥
अनुत्तमं चोत्तमायां श्वेताद्रौ सिंहरूपिणम् ।
पार्थस्थले परं ब्रह्म कृष्णकुड्या मधुद्विषम् ॥
नन्दपुर्यां महानन्दं वृपपुर्यां कृपाश्रयम् ।
असङ्गं सङ्गमग्रामे शरण्यं शरणाह्वये ॥
सिंहक्षेत्रे महासिंह मल्लारि मणिमण्डपे ।
निविडे निविडाकार धानुष्के जगदीश्वरम् ॥
मौद्गरे कालमेघं तु मधुरायां तु सुन्दरम् ।
वृषभाद्रौ महापुण्ये परमस्वामिसञ्ज्ञकम् ॥
श्रीमद्वरगुणे नाथं कुरूकायां रमासखम् ।
गोष्ठपुर्यां गोष्ठपतिं शयानं दर्भसंस्थले ।
धन्वीमंगलके शौरिं बलाख्य भ्रमरस्थले ॥
कुरङ्गे तु महापूर्णं विवेकं तडितस्स्थले ।
अच्युतं क्षुद्रनद्यां तु पद्मनाभमनन्तके ॥
सारक्षेत्रे सारनाथं घृतशैले पापहरम ।
दक्षिणद्वारकायां तु गोपालं जगतां पतिम् ।
रोमन्थपर्वते शौरिं कामकोष्ट्यां शुभप्रदम् ।

---

१–श्री मुष्णे पाठान्तरम् । २ यहसे पा. ३ हरचापहम पा.

व्याघ्रपुर्य्यां महाविष्णुम् भक्तानाम भयङ्करम् ।
एतानि विष्णुस्थानानि पूजितानि महात्मभिः ।
अधिष्ठितानि देवेश ! तत्राऽसीनं तु माधवम् ॥
यः स्मरेत्सततं भक्त्या चेतसाऽनन्यगामिना ।
स विधूयाखिलं पापं याति विष्णोः परं पदम् ॥
अष्टोत्तरशतं विष्णोः स्थानानि पठितानि च ।
अधीताः सकला वेदाःकृताश्च विविधा मखाः ।
वगाहितानि तीर्थानि ध्यातस्तु भगवान् हरिः ॥
संपादिता तथा मुक्तिः परमानन्ददायिनो ।
अवगाढानि तीर्थानि ज्ञातः स भगवान् हरिः ।
आद्यमेतत्स्वयं व्यक्त विमानं रङ्ग संज्ञकम् ॥
श्रीमुष्णां वेंकटाद्रिंच शालग्रामं च नैमिशम् ।
तोताद्रिं पुष्करञ्चैव नरनारायणाश्रमम् ॥
अष्टौ मे मूर्तयः सन्ति स्वयं व्यक्ता महीतले ॥१६७॥

इसी प्रकार ४६ 'तोताद्रि' आदि तीर्थ में सकल वाञ्छित दायक श्री तुङ्गशयादिक * प्रभु है । श्रेष्ठ मुमुक्षु वैष्णव, इन सकल वाञ्छा की पूर्ति करने वाले इन सब स्थानों के भगवान की अराधना करते हुए यहाँ निवास करें ॥ १६७ ॥

---

* सूची के अन्तिम अंक में स्थान और भगवान के नाम के साथ आदि शब्द लगा हुआ है यथा 'तोताद्रिसंज्ञादि' और तुङ्गशयादिक, । इससे और भी ऐसे निवास योग्य स्थानों की ओर संकेत होता हैं और वस्तुत. है भी ऐसी ही बात । अन्य ग्रन्थों में इसी प्रकार १०८ ऐसे स्थानों का वर्ण है, जिसे दिव्य देश कहा है । उसमें ४६ स्थान तो ठीक इसी क्रम से प्रारम्भ से लिखे हैं और बाकी स्थान इस प्रकार उल्लिखित हैं ।

४७ 'कामासिकी' में श्रीनृसिंहजी; ४८ 'गृध्रसरस्तीर' में श्री विजय राघवजी, ४६ 'भिक्षारण्य' में श्री वीरराघव, ५० 'गजस्थल' में श्री गजार्त्तिघ्नजी, ५१ 'बलिपुर' में श्री महाबलजी; ५२ 'भक्तिसार' में श्री जगत्पतिजी; ५३ 'ऐन्द्र' में श्री देवदेवेशजी; ५४ 'गोपपुरी' मे श्री गोपपतिजी;५५ 'श्री मुष्टी' तीथ में श्री महावराहजी; ५६ 'यहस' (महेन्द्र) नामक तीर्थ में पद्मलोचनजी;५७ 'श्री कोणतीर्थ में जगत्पथ जी; ५८ 'श्रीधाम' में श्री जानकीप्रिय;५९ 'श्रीनिवासस्थल'

अष्टानां प्रश्नानामुत्तरं विधाय "कालक्षेपः कथं ( केन-प्रकारेण ) कार्य्यः" इतिनवमप्रश्नस्योत्तर विवदिषता भगवता श्रीरामानन्दाचार्य्येणाभिधीयते-कार्य्योमहात्मभिरिति ।

**कार्य्यो महात्मभिर्नित्यं कालक्षेपो मुमुक्षुभिः ।**
**परमात्मपरैरित्थं वैष्णवैरथ कथ्यते ॥ १६८ ॥**

में श्री पूर्णभगवान; ६० 'स्वर्णमन्दिर' मे श्री सुवर्ण नामक भगवान ६१ 'महापुरी' में श्री महाबाहुजी; ६२ 'आकाशनगर' मे श्री हरि भगवान्, ६३ 'उत्पलतावर्तक' में श्री शौरिजी; ६४ 'मणिकुट, मे श्रीमणिप्रभजी; ६५ 'कृष्ण क्षेत्र' मे श्री महाविष्णुजी, ६६ 'भक्तिस्थान' मे श्री 'भक्तिद' नामक भगवान; ६७ 'श्वेतहृद' में श्रीशान्तिमूर्त्तिजी; ६८ 'हेमपुरी' में श्री सुरप्रिय नामक भगवान् ६९ 'भार्गवस्थान' मेंश्री भार्गाख्यजी; ७० 'वैकुण्ठाख्य'मे श्री माधवजी; ७१ 'पुरुषोत्तम तीर्थ' मे श्री भक्तसखाजी; ७२ 'चक्रतीर्थ' मे श्री सुदर्शनजी, ७३ 'कुम्भकोण में श्री शाङ्गपाणिजी; ७४ 'भूतस्थान' में श्रीशार्ङ्गीजी; ७५ 'कपिस्थल' मे श्री गजार्त्तिघ्नजी, ७६ 'चित्रकुटक' मे श्री गोविन्दजी, ७७ 'खण्डन' में श्री हर(सापद्म)चापहजी,७८'उत्तमा' मे श्री अनुत्तम नामक भगवान ७९ 'श्वेताचल' मे श्री सिंहरूपीजी;८० 'पार्थस्थल' में श्रीपरब्रह्मजी ८१'कृष्ण-कुटी' में श्री मधुद्विषजी ८२ 'नन्दपुरी' मे श्री महानन्दजी; ८३ 'वृषपुरी' में श्री वृषाश्रयजी, ८४ 'सङ्गमग्राम' मे श्री असङ्ग नामक भगवान, ८५ 'शरणतीर्थ' में श्री शरण्यजी, ८६ 'सिंहक्षेत्र' में श्री महासिंहजी;८७ 'मणिमण्डप' में श्री मल्लारिजी; ८८ 'निविड़' में श्री निविडाकार भगवान ; ८९ 'धानुष्क' तीर्थ में श्रीजगदीश्वरजी, ९० 'मौद्गर' में कालमेघजी, ९१ 'मधुरा' मे श्रीसुन्दरजी; ९२ 'वृषभाद्रि में श्रीपरमस्वामीजी ९३ श्रीमद्वरगुण मे श्रीनाथ भगवान्; ९४ 'कूरुका'में श्रीरमासखजी ९५ गोष्टपुरी में श्री गोष्ठपतिजी, ९६ 'दर्भसंस्थल' में श्री शयानजी; ९७ 'धन्वीमंगलक' में श्री शौरिजी; ९८ 'अमरस्थल' में श्रीमहापूर्णजी, ९९'कुरङ्गे'में श्रीमहापूर्णजी; १०० 'तड़ितस्थल'में श्रीविवेकजी, १०१ 'क्षुद्रनदी' में श्री अच्युतजी; १०२ 'अनन्तक' में श्रीपद्मनाभजी; १०३ 'सारक्षेत्र' में श्री सारनाथजी, १०४ 'घृतशैल' में श्रीपापहरजी, १०५'दक्षिण द्वारका' में श्री गोपाल जगत्पतिजी; १०६ 'रोमन्थपर्वत, मे श्रीशौरी जी, १०७ कामकोटि' में श्री शुभप्रदजी; १०८ 'श्रीव्याघ्रपरी में श्री महाविष्णु जी, इस प्रकार 'वैकुण्ठ' आदि तीर्थों में 'वासुदेव' आदि भगवान को पूजन करते हुए वैष्णवोत्तम महात्मा गण काल क्षेपकरें ।

अन्वयप्र०—अथ ( उक्तक्षेत्रेषु निवासकथनानन्तरम् ) परमात्मपरैः मुमुक्षुभिः महात्मभिर्वैष्णवैः नित्यं ( प्रतिदिनं यथास्यात्तथा ) इत्थ ( वक्ष्यमाणरीत्या ) कार्य्यः ( कर्त्तव्यत्वेनविधेयः ) कालक्षेपः कथ्यते ॥ १६८ ॥

वैष्णवानान्तेषां कालक्षेपः कथं कार्य इति प्रश्नस्योत्तरमाह-कार्य इति। अथ निवासस्थानकथनानन्तर कालक्षेप. कथ्यते कीदृशः परमात्मपरैर्भगवन्निष्ठैर्महात्मभिर्मुमुक्षुभिर्नित्यं कार्यः॥ १६८ ॥

भाषा—तदनन्तर, परमात्मा में पारायण मुमुक्षु वैष्णव महात्माओं से नित्य इस प्रकार करने योग्य काल-क्षेप को मैं कहता हूँ ॥१६८॥

इदानींकालक्षेपस्य रीतिः कथ्यते—

**प्रातर्मध्याह्नसायं कृतशुचिकृतिभिः श्रीशमभ्यर्च्यरामं**
**श्रीमद्रामायणेन प्रतिदिनमखिलैर्भारतेन प्रपन्नैः।**
**शक्तैः श्रीभाष्यतश्च द्रविड़मुनिकृतोत्कृष्टदिव्यप्रबन्धैः**
**कालक्षेपोविधेयःसुविजितकरणैःस्वाकृतेर्यावदन्तम् १६९**

अन्वयप्र०—सुविजितकरणैः(निगृहीतेन्द्रियैः) प्रातर्मध्याह्नसायं (प्रातःकाले मध्याह्नकाले सन्ध्याकालेच)कृतशुचिकृतिभिः(कृतशौचनित्यक्रियैः)शक्तैः (वेदादिबोधसम्पन्नैः) प्रपन्नैः (भगवच्छरणापन्नैः) प्रतिदिनं ( प्रतिवासरं यथा स्यात्तथा ) श्रीशं ("श्रियः श्रीं भर्तृवत्सलाम्" इतिमहर्षिवचनात् श्रियः सीताया ईशः भर्त्ता तम्) रामम् अभ्यर्च्य (षोडशोपचारैः पूजयित्वा) श्रीमद्रामायणेन महाभारतेन श्रीभाष्यतश्च ( चकारात् श्रीमद्भागवतादिभिः ) द्रविडमुनिकृतोत्कृष्टदिव्यप्रबन्धैः ( श्रीशठकोपस्वामिप्रभृतिकृतसहस्रगीतिप्रभृतिभिः प्रबन्धैः) कालक्षेपः (समययापनम्) विधेयः (कर्त्तव्यः) ॥१६९॥

सुविजितानि करणानि इन्द्रियाणि यैस्ते तैः प्रातःकाले, मध्यान्हकाले, सायंकाले, च कृतशुचिकृतिभिः कृतस्नानसंध्यावन्दनादिक्रियैः शक्तैः शास्त्राभ्यासजन्यसामर्थ्यवद्भिरखिलैः प्रपन्नैर्मुमुक्षुभिः प्रतिदिनमह-

न्यहनि श्रीः सीता तस्या ईशं प्राणवल्लभं स्वामिनं राममभ्यर्च्य षोडशोपचारैः संपूज्य श्रीमद्रामायणेन श्रीमद्रामायणपरायणेन भारतेन भारतपारायणेन; श्रीभाष्यतः श्रीभाष्यपारायणेन, चकारात् श्रीमद्भागवतादिना ।

तदुक्तमभियुक्तैः—

"प्रातर्द्यूतप्रसङ्गेन मध्याह्ने स्त्रीप्रसङ्गः ।
सायं चौरप्रसङ्गेन कालो गच्छति धीमताम् । " इति

तथा द्रविडमुनिभिः कृता ये उत्कृष्टा दिव्याः प्रबन्धास्तैश्च कालस्य क्षेपो व्ययो विधेयः कर्तव्यः । तत्राऽवधिमाह-स्वाकृतेरिति स्वस्याः आकृतेर्देहस्या त नाशं यावत् अभिव्याप्य "आकारो देह आकृतिः" इति हि कोशः यावत्तावदित्येतौ साकल्यावधिमानावधारणेषु ॥ १६९ ॥

भाषा—जितेन्द्रिय एवं वेद शास्त्र के ज्ञान से सम्पन्न, प्रपन्न वैष्णव, प्रातः मध्याह्न एवं सायंकाल में शौचादि नित्य क्रिया से निवृत होकर प्रतिदिन सीतापति श्रीरामचन्द्र जी की षोड़शोपचार से पूजा कर श्रीमद्रामायण, श्रीमहाभारत, श्रीभाष्य, श्रीभागवतादि ग्रन्थ एवं द्रविड़मुनि ( श्रीशठकोप स्वामी ) प्रभृति कृत अति श्रेष्ठ दिव्य प्रबन्ध ( श्री सहस्र गीति ) आदि के अध्ययन मनन द्वारा कालक्षेप करे ( समय बितावें ) ॥ १६९ ॥

**स्नानादि कर्म्माणि विधाय तत्र**
**श्रीभाष्यमेवं शृणुयादशक्तः ।**
**चेदादरान्नाम सुकीर्तनं च**
**द्वयानुसन्धानमथो विदध्यात् ॥१७०॥**

अन्वयप्र०—चेद् (यदि) अशक्तः, ( स्वयं पठनसामर्थ्यहीनो जनः ) स्नानादिकर्माणि विधाय ( कृत्वा ) तत्र ( तदा ) एवम् (श्रीशं रामं समभ्यर्च्येत्युक्त रीत्या) श्रीभाष्यं च शृणुयात् ( चकारात्—श्रीमद्रामायणादिकं शृणुयात् ) अथो ( श्रीभाष्यादि श्रवणानन्तरम् ) नामसुकीर्तनं ( रामकृष्णनारायणादिनामोच्चारणम् )

द्वयानुसन्धानं (श्रीरामद्वयमन्त्रस्यार्थानुसन्धानम्) विदध्यात् (कुर्यात्) ॥ १७० ॥

चेद्यदि अशक्तः तदा एवं श्रीराममभ्यर्च्य स्वाकृतेर्यावदन्तं जितेन्द्रियः सम्प्रदायनिष्ठैर्भागवतैरधीयमान श्रीभाष्य रामायणादिकं च प्रतिदिनं शृणुयात्। अथो अनन्तरं रामादिनामकीर्तनं श्रीरामद्वयमन्त्रा नुसन्धानं विदध्यात्कुर्यात्॥१७०॥

भाषा—यदि स्वयं पढने में असमर्थ हो तो, स्नानादि नित्य कृत्य करके उक्तरीति से श्री रामजी का पूजन कर श्री भाष्य, श्रीमद्रामायण श्रीमहाभारत, श्री मद्भागवतादि का श्रवण, राम कृष्ण, नारायण आदि नामों का कीर्त्तन और श्रीमद्-रामद्वय मन्त्र का अर्थानुसन्धान करै १७०

**दिव्येषु देशेषु सतां प्रसङ्गं**
**तदीयकैङ्कर्य्यपरायणोऽनिशम् ।**
**यावच्छरीरान्तमहर्दिवं त-**
**त्कथामुदारां शृणुयाद्भवघ्नीम् ॥१७१॥**

अन्वयप्र०- दिव्येषु देशेषु (श्रीमदयोध्या-बृन्दावन-मथुरा-काशी प्रभृति पूर्वोक्ततीर्थेषु) यावच्छरीरान्तम् (मरणपर्य्यन्तम् निवसन्) अनिशं (निरन्तरं यथास्यात्तथा) सतां (तत्वत्रय-ज्ञानिनाम्) प्रसङ्गं (सहवासं कुर्व्वन्) तदीयकैङ्कर्य्यपरायणः (श्रीमद्भगवद्भागवताचार्य्यकैङ्कर्य्यनिष्ठो जनः) अहर्दिवम् (प्रतिदिनम्) उदाराम् (अर्थ, धर्म, काममोक्षप्रदम्) भवघ्नीं (संसारनाशिनीम्) तत्कथां (भगवतः श्रीरामस्य श्रीमद्रामायणादि चरित्रम्) शृणुयात् ॥ १७१ ॥

किञ्च यावच्छरीरान्तं शरीरस्याऽन्तं शरीरान्तं स्वदेहावसानावधि विधाय अनिशं सतत "संततविरतानिशम्" इत्यमरः। तस्य भगवत इमे भक्तास्तदीयास्तेषां कैङ्कर्यमेव परमयनं यस्य स तथा भूतः सन् अहर्दिवम् "अहश्च दिवाचेति वीप्सायां द्वन्द्वः" अहन्यहनीत्यर्थः दिव्येषु देशेषु श्रीमदयोध्यावृन्दावनप्रभृतिषु सतां महतां प्रसङ्गं मोक्षसाधकतया प्रकृष्टं सङ्गं

कुर्वन्निति शेषः भवघ्नी संसारनिवर्त्तिनीमुदारां महतीं तस्य भगवतः श्रीरामस्य कथां शृणुयादित्यन्वयः ॥ १७१ ॥

भाषा—श्रीमद्-भगवद्, भागवत एवं आचार्य्यों के कैङ्कर्य्य में निष्ठावाले श्री वैष्णवगण, श्रीमद्-अयोध्या, वृन्दावन, मथुरा, काशी आदि दिव्य देशों में जीवन पर्य्यन्त निवास, और निरन्तर तत्वत्रय-ज्ञानवान श्री वैष्णवों का सहवास करते हुए, प्रतिदिन, अर्थ, धर्म्म, काम, मोक्ष को देनेवाली श्री रामजी की श्री रामायणादि कथा सुने ॥ १७१ ॥

**तथाप्यशक्तास्तु कुटीरमात्रं**
**विधाय कुर्य्युस्त्वथ यादवाद्रौ ।**
**अन्यत्र वासं च गुरूपदिष्टा-**
**न्मन्त्राञ्जपन्तोऽहङ्कारशून्याः ॥ १७२ ॥**

अन्वयप्र०—तथापि (पूर्वोक्त प्रकारेणापि) अशक्तास्तु ( श्री भाष्यादिश्रवण—श्रीमद्भगवद्भागवताचार्य्यसेवा सामर्थ्यरहितास्तु ) अहङ्कारशून्यास्तु गुरूपदिष्टान्मन्त्रान् जपन्तः ( सन्तः ) यादवाद्रौ कुटीरमात्रं ( ह्रस्वां कुटीम् ) विधाय ( कृत्वा ) वासं कुर्य्युः । त्वथ ( अथवा ) अन्यत्र च ( पूर्वोक्तप्रशस्ततीर्थेषु च निवास कुर्य्युः । त्वत्रपादपूरणे । अप्यत्र समुच्चये । तथा मन्त्रजपेनाशक्ता जना अपि तथा पूर्वोक्तरीत्या मन्त्रादिजपन्तो यादवाद्रिप्रभृति तीर्थाद्रौ वासं कुर्य्युः) ॥ १७२ ॥

तथा अशक्ता अपि कथंचिदपि सामर्थ्यरहिता अहङ्कारशून्या गुरुभिरुपदिष्टान् मन्त्रान् तारकादीन् जपन्तः सन्तः यादवाद्रौ यादवपर्वते अन्यत्र च प्रशस्ततीर्थे कुटीरमात्रं ह्रस्वां कुटीं विधाय वासं कुर्य्युः ॥ १७२ ॥

भा०—श्रीभाष्य, श्रीमद्रामायण, श्री महाभारत, श्रीमद्भागवत, आदि सद्ग्रन्थों के श्रवण और श्रीमद्भगवद्भागवत-और आचार्य्य की सेवा में असमर्थ तो गुरूपदिष्ट मन्त्रों का जप करते हुए अहंकार से रहित छोटी

सी कुटी बनाकर यादवाचलमें अथवा पूर्वोक्त अयोध्या आदि दिव्य देशों या अन्य पवित्र स्थानोंमें बास करै । 'अपि' और 'तु' शब्द के स्वारस्य है कि समर्थ वैष्णव भी यादवाद्रि में कुटी बनाकर वास करे ॥ १७२॥

भक्त्यादि युक्तस्य तथा नहङ्कृते-
महात्मनस्तस्य निदेशपालनम् ।
उपायमेतं चरमं निरन्तरं
सुवैष्णवोऽयं विदधात्वतन्द्रितः ॥१७३॥

अन्वयप्र०—भक्त्यादियुक्तस्य (६५—तमतःआरभ्य ९२श्लोकपर्य्यन्तोक्तप्रकृष्टमुक्तिसाधनसम्पन्नस्य ) अनहङ्कृतेर्महात्मनः यथा यस्मै निदेशः ) तथा ( तेनैव प्रकारेण ) तस्य ( आज्ञाकर्तुः ) निदेशपालनम् ( आज्ञापालनम् ) एतं ( यथाऽज्ञा तथा पालनम्) चरमम् (अन्तिमम्) उपायम् (साधनम्) अयं ( मुमुक्षुः ) सुवैष्णवोऽतन्द्रितः (आलस्यशून्यः सन् ] निरन्तरं ( अन्तररहितं यथास्यात्तथा ] विदधातु ( करोतु ) ॥ १७३ ॥

अनहंकृतेरहङ्काररहितस्य भक्त्यादियुक्तस्य भक्त्या रामायणादिपरायणेन च युक्तस्य तस्य महात्मनो निदेशपालनमाज्ञाकरणमेतं चरममुपायम् अतन्द्रितो निरालसोऽयंमुमुक्षुर्वैष्णवो निरन्तर कुर्य्यात् ॥१७३॥

( श्रीरामानन्द स्वामीजी का अन्तिम उपदेश )

भाषा—६५ श्लोक से आरम्भ कर ९२ श्लोक पर्य्यन्त कथित भक्त्यादि ( उत्कृष्ट मुक्ति साधन ) से युक्त अहङ्कार रहित महात्मा का उपदेश, जिसके लिये जैसा हुआ है वैसाही पालन करना । इस अन्तिम उपाय को निरालसी मुमुक्षु वैष्णव निरन्तर करैं ॥१७३॥

तदर्थपुष्पप्रचयेन संततं
तथैव तन्मन्दिरमार्जनादिना ।

**तदीयनामाऽभ्यसनेन तन्मनाः**
**क्षिपेत्स कालं नितरां निरालसः ॥१७४॥**

अन्वयप्र०—संततं (निरन्तरम्) तदर्थपुष्पप्रचयेन, तथैव तन्मन्दिरमार्जनादिना तदीयनामाभ्यसनेन तन्मनाः (मुमुक्षु-वैष्णवः) नितरां निरालसः (सदाऽऽलस्यरहितः सन्) कालं क्षिपेत् (समयं यापयेत्) ॥ १७४ ॥

किंच संततं निरन्तरं तस्मै श्रीरामाय अयं तदर्थो यः पुष्पाणां प्रचय-स्तुलसीपुष्पादीनां संग्रहस्तेन तथैव तन्मन्दिरस्य मार्जनादिना शोधनादिना तदीयाना नाम्नामभ्यसनेनाऽभ्यासेनावृत्या तस्मिन्भगवति श्रीरामे मनश्चित्तं यस्य स मुमुक्षुः नितरां निरालसः सन् कालं क्षिपेत् कालव्ययं कुर्य्यादित्यर्थः। खण्डयोरन्वयभेदेनाऽत्र सन्ततं नितरामित्यनयोरपौनरु-क्त्यम् ॥ १७४ ॥

भाषा—मुमुक्षु वैष्णव, सदा आलस्य रहित होकर भगवान के नामों (राम, कृष्ण नारायणादि) को निरन्तर रटन, उनके लिये तुलसी-पुष्पादि के संग्रह और मन्दिर के मार्जन (स्वच्छ, शुद्ध एवं मनोरम बनाना) आदि कार्यों में तन्मय रहते हुए काल क्षेप करें ॥१७४॥

**तीर्थेषु वासेन सतां महात्मनां**
**समागमेनाऽथ तदर्चनेन ।**
**जिज्ञासया तद्यशसः श्रवेण**
**तच्छ्रावणेन स्मरणेन तस्य ॥ १७५ ॥**

अन्वयप्र०—तीर्थेषु (१५५—तमतः १६७ पर्य्यन्त श्लोकोक्त तीर्थेषु) वासेन सतां महात्मनां (प्रत्यक्षीकृततत्त्वत्रयाणाम्) समागमेन, अथ (समागमानन्तरम) तदर्चनेन (ज्ञानिनां पूजनेन) जिज्ञासया (परमकारणतत्वं ज्ञातुमिच्छया) तद्यशसः श्रवेण (परमकारणश्रीरामस्य रामायणादिकीर्त्तेः श्रवणेन, तच्छ्रावणेन

स्वयं श्रुत्वा अन्येभ्यः कथनेन ) तस्य स्मरणेन ( अस्य जगतो यत्परमकारणम् तस्य चिन्तनेन कालं क्षिपेदिति पूर्वेणान्वयो वेदितव्यः ) ॥ १७५ ॥

किंच तीर्थेषु परमपावनगङ्गातटादिषु वासेन निवासेनेति वक्ष्यमाण श्लोकत्रयस्य मुमुक्षुर्नितरां कालं क्षिपेदिति पूर्वेणैवाऽन्वयः।

तथाचोक्तं सप्तमे—

"अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयआवहान्।
स वै पुण्यतमो देश सत्पात्रं यत्र लभ्यते॥
विश्व भगवतो यत्र सर्वमेतच्चराचरम्।
यत्र ह ब्राह्मणकुल तथा विद्यादयान्वितम्॥
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम्।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुता॥
शरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत।
कुरुक्षेत्र गयशिरः प्रयागः पुलहाश्रमः॥
नैमिषं फाल्गुन सेतु प्रभासोऽथ कुशस्थली।
वाराणसी मधुपुरी पम्पा बिन्दुशरस्तथा॥
नारायणाश्रमो नन्दा सीतारामाश्रमादयः।
सर्वे कुलाचला राजन् महेन्द्रमलयादयः॥
एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये।
एतान् देशान् निषेवेत श्रेयस्कामो स्वभीक्ष्णशः" इति।

तथा सतां महात्मनां समागमेन, अथ तेषां सतामर्चनेन, तद्यशसस्तस्य भगवतो यशसः श्रवेण श्रवणेन, तस्य यशसः श्रावणेन, तथा तस्य नितरां स्मरणेन कालं क्षिपेत् ॥ १७५ ॥

भाषा—इन तीर्थों के निवास, श्रेष्ठ-महात्मा-पुरुषों के समागम,उनके पूजन,परम कारण श्रीरामजीके जानने की इच्छा से उनकी रामायणादि कथाओं का श्रवण, पुनः उसके श्रावण ( दूसरों को सुनाना ), एवं स्मरण, (चिन्तन) द्वारा काल बिताना चाहिये ॥१७५॥

रामाय साङ्गाय सपार्षदाय
सीतासमेताय सहानुजाय।
आम्नाय वेद्याय विधाय शश्वत्
कैङ्कर्यमीर्ष्या रहितः समाहितः ॥१७६॥
पुंसे परस्मै सकलार्थदाय
प्रवृद्धभक्तिर्निवसन् सुतीर्थे।
देशे तथा भागवताऽभिषेविते
तीर्थाऽतितीर्थे परमार्थदे शुभे ॥१७७॥

अन्वयप्र०—(यथा—आचार्यैरुपदिष्टस्तथा) समाहितः (निश्चलमनाः) ईर्ष्यारहितः (सर्वाऽभ्युदयराहनशीलः) भागवताभिषेविते, तीर्थातितीर्थे, परमार्थदे शुभे सुतीर्थे देशे निवसन् (सन्) प्रवृद्धभक्तिः (वृद्धिं गता भक्तिर्यस्य स वैष्णवः) साङ्गाय सपार्षदाय सीतासमेताय सहानुजाय आम्नाय वेद्याय (वेदवेद्याय) सकलार्थदाय परस्मै पुंसे रामाय शश्वत् (निरन्तरम् यथा स्यात्तथा) कैङ्कर्य्य विधाय (कृत्वा कालक्षिपेदिति पूर्वेणान्वयः) ॥ १७६–१७७ ॥

तथा मुमुक्षुः ईर्ष्यारहितः समाहितः समाहितचित्तः सन् सकलार्थदाय धर्मार्थकाममोक्षप्रदाय परस्मै पुंसे रामाय शश्वत्कैङ्कर्य्यं विधाय कृत्वा प्रवृद्धा भक्तिर्यस्य स सुतीर्थे निवसन् कालं क्षिपेत्। कीदृशाय रामाय आम्नाय वेद्याय वेदवेद्याय "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः शेषं स्पष्टम् ॥ १७६ ॥

शुभे शोभमाने परमार्थदे मोक्षप्रदे तीर्थानि अतिशायितानि तीर्थानि करोति अतितीर्थयतीति तीर्थातितीर्थस्तस्मिन् भागवतैरुक्तलक्षणैरभिषेवित्ते देशे निसन् ॥ १७७ ॥

भाषा०—आचार्यों के उपदेशानुसार चलने वाले इर्ष्यारहित भगवत–तत्व के ज्ञाता वैष्णवों से सेवित होने के कारण जो श्रेष्ठ तीर्थ, वहाँ निरन्तर निवास करने से उन्नत–भक्ति–प्राप्त–वैष्णव, वेदों से जानने योग्य एवं अर्थ धर्म्म काम मोक्ष के दाता परम पुरुष श्रीरामजी की श्रीसीताजी, श्रीलक्ष्मणजी, विष्वक्सेनादिपार्षद, एवं अङ्ग * के सहित पूजा करते हुए काल–क्षेप करें ॥ १७६–१७७ ॥

( प्राप्यवस्तु निरूप्यते )

तथाविधैस्तैः परमार्थभूतं
सुवैष्णवैः प्राप्यमथोच्यते यत् ।
जितेन्द्रियैरात्मरतैर्बुधाग्र्यै–
र्महत्तमैः स्वाभिमतार्थदोहम् ॥ १७८ ॥

---

* वायुपुत्रेणोक्तास्ते योगीन्द्रा ऋषयो विष्णुभक्ता हनूमन्त पप्रच्छुः। रामस्याङ्गानि नो ब्रूहीति। हनूमान् होवाच। वायुपुत्रं विघ्नेशं वाणीं दुर्गां क्षेत्रपालकं सूर्यं चन्द्रं नारायणं नारसिंहं वासुदेवं वाराहं तत्सर्वान्त्समात्रान्त्सीतां लक्ष्मणं शत्रुघ्नं भरतं विभीषणं सुग्रीवमङ्गदं जाम्बवन्तं प्रणवमेतानि रामस्याङ्गानि जानीथाः। इति रामरहस्योपनिषदि।

विष्णु भक्त योगीन्द्र और ऋषियों ने श्री हनूमान्जी से पूछा कि श्रीरामजी के अङ्ग देवताओं को कहो। इस पर श्री हनुमानूजी ने कहा कि वायुपुत्र, विघ्नेश, वाणी, दुर्गा, क्षेत्रपालक, सूर्य, चन्द्र, नारायण, नरसिंह, बासुदेव, वाराह, स्वशक्ति सहित ये सब और श्री सीताजी, श्री लक्ष्मणजी, श्री शत्रुघ्नजी श्रीभरतजी, श्री विभीषणजी, श्री सुग्रीवजी, श्री अङ्गदजी, श्री जाम्बवन्तजी, एवं प्रणव को श्री रामजी की अङ्ग देवता जानो।

अन्वयप्र०-अथ ( कालक्षेपकथनानन्तरम् ) स्वाभिमतार्थ-दोहम् परमार्थभूतम् जितेन्द्रियैः, आत्मरतैः, बुधाग्र्यैः, महत्तमैः, तथा विधैः ( परपुरुषभक्तिनिष्ठैः ] तैः ( भक्तैः ) सुवैष्णवैः प्राप्य यत् ( वस्तु ) [ तद् ] उच्यते ( मया कथ्यते ) ॥१७८॥

मोक्षप्रदं प्राप्य वस्तु किमिति प्रश्नस्योत्तरं वक्तुमाह-तथेति । अथ कालक्षेपवर्णनानन्तरं जितेन्द्रियैर्बुधाग्र्यैर्ज्ञानिश्रेष्ठैर्महत्तमैरतिशयितैर्महद्भिरात्मरतैर्ब्रह्मनिष्ठैस्तथाविधैरुक्तलक्षणैः सुवैष्णवैः परमार्थभूतं सकलवेद-वेदान्तैकवेद्यं स्वस्याऽभिमतमर्थं दोग्धि पूरयतीति स्वाभिमतार्थदोहं प्राप्य यद्वस्तु तदुच्यते इत्यर्थः । ननु "कालक्षेप किमाप्यं कथमुरुशुभदं कुत्र कार्य्यो निवास" इति प्रश्नक्रमानुरोधेन अन्त एव निवासस्थानवर्णनमुचितं नकालक्षेपात्पूर्वमिति चेन्न "पाठक्रमादर्थक्रमो बलीयान्" इति न्यायेनाऽविवक्षितप्रश्नक्रममनाश्रित्य कालक्षेपवर्णनात्पूर्वमेव निवासस्थानवर्णनमितिसिद्धान्तात् तत्त्वादिविचारानुष्ठानसाध्यफलतया प्राप्यवर्णनस्यान्त एवौचित्याच्च नहि प्राप्यप्राप्त्यनन्तरं किञ्चिज्ज्ञेयमनुष्ठेयं वाऽस्तीति सहृदयैः कलनीयम् ॥ १७८ ॥

भाषा०—तदन्तर अपने अभिमत दाता परमार्थस्वरूप (सबसे उत्कृष्ट) जितेन्द्रिय मननशील पण्डिताग्रगण्य सर्वश्रेष्ठ और परमात्मा की भक्ति में निष्ठा रखने वाले उन श्रीवैष्णवों से प्राप्ति करने योग्य वस्तुओं को कहता हूँ ॥ १७८ ॥

( तत्किम् इत्यत आह श्रीमानिति )

श्रीमान् दिव्यगुणाब्धिरौपनिषदो हेतुः शरण्यः प्रभुः
देवेशो जगतामनादिनिधनो ब्रह्मादिदेवार्चितः ।
ताराकानलचन्द्रमोबहुमहः सौदामिनीभासको
ऽजय्यो वीरसपत्नशास्त्रनिचयैर्जेता च तेषां मुहुः ॥१७९॥
नित्यो ब्रह्मविधायकश्च पुरुषस्तद्वेदबोधो बुधो

नित्यानां शरणं तपःप्रभृतिभिः सद्योगिनां दुर्लभः।
एकश्चेतनचेतनोभृतजगद्ध्येयःस्वतन्त्रोवशी स
प्राप्योऽस्ति मुमुक्षुभिःसुगुरुभिःसत्सङ्गिभिस्तत्परैः१८०

अन्वयप्र०—( यः ) पुरुषःश्रीमान्,दिव्यगुणाब्धिः ( वात्सल्यसौशील्यसौन्दर्य्यलावण्यशौर्य्यवीर्य्यादिगुणसागरः ) औपनिषदः ( उपनिषत्प्रतिपाद्यः ) जगतां हेतुः ( कारणम् ) शरण्यः ( शरणागतरक्षकः ) प्रभुः ( विश्वसृजनाद्यनुकूलशक्तिसम्पन्नः ) देवेशः ( ब्रह्मादिदेवानामीशनशीलः ) अनादिनिधनः ( उत्पत्तिविनाशशून्यः ) ब्रह्मादिदेवार्चित ( ब्रह्मादिदेवैःपूजितः ) ताराऽर्कानलचन्द्रमोवहुमहः सौदामिनीभासकः (तारा सूर्य-वह्नि चन्द्राणाम् अतितेजस्विन्या विद्युल्लतायाश्च प्रकाशकः ) वीरसपत्नशस्त्रनिचयैरजय्यः ( वीरशत्रुशस्त्रसमूहैर्जेतुमशक्य ) मुहुः (पुनः पुनः) तेषां (वीरशत्रुशस्त्रसमूहानां) च जेता नित्यानां नित्यः चेतनचेतनः, एकः ( नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इतिश्रुतेः मुख्यः) भृतजगद् ( जगत्संरक्षकः) ब्रह्मविधायकः (चतुर्मुखस्योत्पादकः) तद्वेदबोधः (तस्मै-चतुर्मखाय वेदाना बोधयिता)बुधः (सर्वज्ञः) शरणं(रक्षिता उपायो वा)तपःप्रभृतिभिः सद्योगिनां दुर्लभः(दुःखेन लभ्यः)वशी(कान्तिमान् स्वतन्त्रः (निरङ्कुशः स्वच्छन्दः योऽस्ति ) स ( पूर्वोक्तविशेषण विशिष्टः ) तत्परैः ( भगवत्परायणैः ) सत्सङ्गिभिः ( निर्भ्रान्तं शिष्टं गतवद्भिः)सुगुरुभिः (मन्त्रमन्त्रार्थोपदेशकाचार्य्यं प्राप्तवद्भिः) मुमुक्षुभिः ( संसारं त्यक्तुमिच्छद्भिः ) ध्येयः ( ध्यातुं योग्यः ) प्राप्यश्चास्ति (स एवप्राप्तव्या भवतीति वेदितव्यम्॥१७९॥१८०॥)

अथ प्राप्यस्वरूपं युग्मेनाभिधत्ते श्रीमानिति। तत्परैर्भगवन्निष्ठैः प्रशस्तः सता सङ्गोऽस्ति येषां ते सत्सङ्गिनस्तैः शोभनाः परम प्राप्ता मुखो येषां

तैर्मुमुक्षुभिः एवं गुणमहार्णवः सर्वलोकशरण्यो जगज्जन्मादिहेतुः परम-कारुणिको द्विभुजः पुरुषोत्तमः सीतापतिर्यः श्रीरामः स एव प्राप्योऽस्ती त्युत्तरेणान्वय ।स कीदृशः प्रशान्ता "अनन्या राघवेणाहंऽ भास्करेण प्रभा यथा" "अनन्या च मया सीता भास्करेण प्रभा यथा" इत्युक्तरीत्या नित्ययोगा लोकोत्तरप्रकृष्टनिःसीमसौन्दर्य्यपरमलावण्यवती श्रीः सीताऽस्ति यस्य स श्रीमान्। पुनः दिव्यानां वात्सल्यादीना गुणानामब्धिर्दिव्यगुणाब्धिः। पुनः उपनिषद्भिः प्रतिपाद्य औपनिषदः। स्पष्टं चेदं रामतापन्याम्। शरणे साधुः शरण्य. जगतां चराचरात्मकविश्वेषां हेतुः कारण जन्मादेरिति शेषः ।

तथा च पाराशर्यसूत्रम्—

"जन्माद्यस्य यत" । इति

श्रुतिश्च—

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति ।

नचात्र यच्छब्देन बृहणशीलब्रह्मचतुर्भुजश्रीमन्नारायणविष्णुवासुदेवादीनामेवाभिधानात्तत्र तत्र व्याख्यातृभिरपि तथैवाभिधानात्कथंसीतापते र्द्विभुजस्याभिधनमिति वाच्यम् तत्र तादृशलिङ्गाभावात् ।

"रमन्ते योगिनो यस्मिन्सत्यानन्देचिदात्मनि
तेन रामपदेनासौ परं ब्रह्माभिधीयते' ।

इति रामपदेन बृंहणशीलब्रह्मण एवाभिधानाच्च ।

"तं वीरं राघवं मन्ये नारायणमनामयम् ।
यद्भयाद्धि पुरी लङ्का पिहितद्वारगोपुरा ॥
व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनो महतः परमो महान् ॥
तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥
मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः ।
सर्वैः परिवृतो देवै र्वानरत्वमुपागतैः ॥
सर्वलोकेश्वरः साक्षात् लोकानां हितकाम्यया ।
स राक्षसपरीवारं हतवाँस्त्वांमहाद्युतिः ॥"

इत्यादिभिः श्रीमद्वाल्मीकीयरामायणस्थैः शास्त्रैरपि वचनैः

तथा

"भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित्॥
सीता लक्ष्मीर्भवान् विष्णु"।

इत्यादिभिश्चतुर्मुखप्रोक्तैश्च विशेषणभूतैर्नारायणादिशब्दैः सह भवच्छब्दाभिधेयस्य विशेष्यस्य द्विभुजस्य श्रीरामस्याऽभेदाभिधानाच्च। किंच पितामहप्रेषितः सर्वसमाहरः कालः श्रीरामं सबोध्य चतुर्मुखवाक्यानि श्रावितानि।

"संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि।
महार्णवे शयानोऽप्सु मा त्वं पूर्वमजीजनः॥
भोगवन्तं ततो नागमनन्तमुदकेशयम्।
मायया जनयित्वा त्वं द्वौ च सत्वौ महाबलौ॥
मधुं च कैटभं चैव ययोरस्थिचयैर्वृता।
इयं पर्वतसंबाधा मेदिनी चाऽभवत्तदा।
पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि॥
प्राजापत्यं त्वया कर्म मयि सर्वन्निवेशितम्।
सोऽहं संन्यस्तभारो हि त्वामुपास्य जगत्पतिम्॥
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान्"।

इत्यादीति। अतोऽपि जगज्जन्मादिहेतुत्वं द्विभुजस्य स्पष्टतरमभिहितम् श्रुतिश्च 'योवैब्रह्माणंविदधातिपूर्वं वेदांश्च प्रहिणोति तस्मै। तंहदेवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति। अत्र च महार्णवे शयानोऽप्सु माम् इत्यादिवाक्यानामेतच्छ्रुत्या सहैकवाक्यतासिद्धये रमिसमानार्थदिविधातोःपचाद्यचा सिद्धदेवशब्देन द्विभुजश्रीरामस्यैवाभिधानमुचितम् व्याख्यातं चास्माभिः पूर्वमेव तथैवेत्यलं पल्लवितेन। पुनः कीदृक् स प्रभुः जगत्सृष्ट्यादिकरणसामर्थ्यवान्।

तथोक्तमारण्यकाण्डे रावणं प्रत्यकम्पनशत्रुवाक्यम्—

"शृणु राजन्! यथावृत्तं रामस्य बलपौरुषम्।
असाध्यः कुपितो रामो विक्रमेण महायशाः॥
आपगायास्तुपूर्णाया वेगं परिहरेच्छरैः।
सतारग्रहनक्षत्रं नभश्चाप्यवसादयेत्॥
असौ रामस्तुसीदन्ती श्रीमानभ्युद्धरेन्महीम्।

भित्त्वा वेलां समुद्रस्य लोकानां प्लावयेद्विभुः ॥
वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः ।
संहृत्य वा पुनर्ल्लोकान् विक्रमेण महायशाः ॥
शक्तः श्रेष्ठः स पुरुषः स्रष्टुं पुनरपि प्रजा" इति ।
किंच स्वयमपि रामो लक्ष्मणं प्रत्याह ॥
"नैव यक्षा न गन्धर्वा न पिशाचा नराक्षसाः ।
किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ! ।
ममास्त्रबाणसंपूर्णमाकाशं पश्य लक्ष्मण ! ॥
असम्पातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ।
संनिरुद्धग्रहगण मावारितनिशाकरम् ।
विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥
विनिर्मथितशलाग्रं शुष्यमाणजलाशयम् ।
ध्वस्तद्रुमलतागुल्म विप्रणाशितसागरम् ॥
त्रैलोक्यं तु करिष्यामि संयुक्तं कालकर्मणा ।" इति

पुनः देवानां ब्रह्मेन्द्रादीनामीशः सृष्ट्यादौ प्रवर्तकः अत एव स्वयमनादिनिधनः न आदिनिधने उत्पत्तिविनाशौ यस्य सः । ब्रह्मादिभिर्देवैरर्चितः ताराश्च अर्कश्च अनलोऽग्निश्च चन्द्रमाश्च बहूनि महांसि तेजांसि यस्याः सा चाऽसौ सौदामिनी विद्युच्च ता अपि भासयति दीपयतीति तथोक्तः । भासृ दीप्तौ ण्वुल् ।

तथाच श्रुतिः-

"न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" । इति

स्मृतिश्च—

"यदादित्यगतन्तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" । इति

वीराश्च ते सपत्नाः शत्रवश्च तेषां शस्त्राणां निचयैः समूहैरजय्यो जेतुमशक्यः "क्षय्यजय्यौ शक्यार्थे" तेषां वीरसपत्नशस्त्रनिचयानां मुहुः पुनः पुनर्जेता ॥ १७९ ॥

नित्यानामव्यक्तादीनां नित्यः चेतनानां जीवात्मनां चेतयतीति चेतनश्चेतनचेतनः ।

तथाच श्रुतिः—

"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्"ः इति । किञ्च ब्रह्मविधायकः सृष्टिकर्तृत्वेन त्रिभुवनविधातारमपि ब्रह्माणं विदधाति उत्पादयतीति ब्रह्मविधायकः। तस्मै ब्रह्मणे वेदं बोधयति उपदिशतीति तद्वेदबोध. ।

तथा च श्रुतिः ।

"यो वै ब्रह्माणं विदधाति पूर्वं वेदांश्च प्रहिणोति तस्मै" इति ।

स्वत एव सकलवेदोपदेशकरणज्ञानवत्त्वात् बुधः सद्योगिना शरणं रक्ष- । तप प्रभृतिभि· तप आदिभिः साधनैस्तैस्सद्भिर्योगिभिर्दुःखेन लभ्यते इति दुर्लभः। एक. इच्छयैव स्वयं सर्वार्थसाधकत्वेन सहायोऽनपेक्षः भृत पालितं जगद्विश्वं येन भृतजगत् । स्वतन्त्रः स्वयं कैश्चिदनाज्ञापितो निरंकुशः सन् स्वस्वाधिकारे ब्रह्मादीनामाज्ञया प्रवर्तकः । अत एव वशी सर्ववशकारीत्यर्थ. ॥ १८० ॥

भाषा०—जो पुरुष, श्रीमान, दिव्य गुणों के सागर, उपनिषदों द्वारा प्रतिपादन करने योग्य, जगत के कारण, शरणागत पालक, विश्व की सृष्टि करने की शक्ति से सम्पन्न, ब्रह्मादि देवों के भी ईश्वर, उत्पत्ति—विनाश से रहित, ब्रह्मादिदेवों से पूजित, तारा सूर्य्य चन्द्रमा, विद्युत एवं अग्नि के भी प्रकाशक, वीरशत्रुओं के सभी प्रकार के अस्त्रों से अजय, पुनः पुनः उन शत्रु-समूहों के विजेता, चेतनों में चेतन, नित्यों में नित्य अद्वितीय, जगत-रक्षक, ब्रह्मा को उत्पन्न करने एवं वेद पढ़ानेवाले, सर्वज्ञ, रक्षक, तपस्या आदि से श्रेष्ठ-योगियों को भी दुर्लभ, कान्तिमान, और स्वतन्त्र हैं; वे, भगवत्परायण संसंगी—आचार्य्यवान मुमुक्षुओं से ध्यान एवं प्राप्त करने योग्य हैं ॥ १७९—१८० ॥

**तथाविधं प्राप्यमथो मुमुक्षुः**
**सुचिन्तयन्नित्थमनुक्षणं सदा ।**
**सदा सदाचाररतं गुरुं वरं**
**ज्ञातुं भजेताऽखिलसंशयच्छिदम् ॥१८१॥**

अन्वयप्र०—अथा ( परमकारणस्य श्रीरामस्य ध्यानश्रवणानन्तरम्) मुमुक्षुः ( लीलाविभूतिं त्यक्तुमिच्छुः ) सदा ( सर्वदा ) अनुक्षणम् (प्रतिक्षणम्) इत्थं (पूर्वोक्तप्रकारकं प्राप्यं परब्रह्मश्रीरामम्) सुचिन्तयन् तथाविधं प्राप्यं ( पूर्वोक्तप्रकारकप्राप्यं परमकारणभूतं श्रीरामम्) ज्ञातुं सदाचाररतम् अखिलसंशयच्छिदम् वरं (श्रेष्ठम्) गुरुं ( परमतत्त्वोपदेष्टारम ) भजेत ( सेवेत ) ॥ १८१ ॥

मुमुक्षुः सदा सर्वदाऽनुक्षणम् क्षणं क्षणमित्थं सुचिन्तयन् तथाविधमुक्तलक्षणं प्राप्यं श्रीराम ज्ञातुम् अखिलानशेषान् संशयान्संछिनत्तीति अखिलसंशयच्छिदम् अशेषसंदेहानां छेत्तारं वरं श्रेष्ठं विरक्तम्।

'गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निवर्त्तकः।
अन्धकारविरोधित्वाद्गुरुरित्यभिधीयते ।"

इत्युक्तरीत्याऽज्ञानान्धकारनिवर्तनसमर्थं गुरुम्भजेत् समाश्रयेत्। कीदृशं सदा सर्वदा सदाचारे समीचीनाचरे रतम् ॥ १८१ ॥

भाषा०—तदनन्तर, मोक्षकी इच्छावाले वैष्णव, पूर्व में कहे हुए विशेषण-विशिष्ट सदा प्राप्त करने योग्य परब्रह्म श्रीरामजीका प्रतिक्षण चिन्तन करते हुए उन्हे जानने के लिये सदा सदाचार युक्त समस्त संशय को मिटाने वाले पूजनीय गुरु ( परमतत्त्व के उपदेष्टा ) की सेवाकरे ॥ १८१ ॥

सत्सङ्गतः सन् हि गतस्पृहो मुहुः
श्रीशं प्रपद्याऽथ गुरोर्मुखादसौ।
कर्म्माऽखिलं संपरिभुज्य चाऽत्मवान्
प्रारब्धमेवं प्रहताऽन्यकर्म्मकः ॥१८२॥
न्यासात्स्वतन्त्रेश्वरजातसद्दया-
निर्लूनमायान्वय एव दैशिकः।

हार्दोत्तमानुग्रहलब्धमध्य—
नाडीशुभद्वारबहिर्विनिर्गतः ॥१८३॥
मार्गं ततः सोऽर्चिरुपैतिमुक्त—
स्तथाऽर्चिषोऽह्नोदिनतः सुरार्चितः।
आपूर्य्यमाणं विविधैस्तु वासरैः
पक्षं प्रभूतोत्तमशर्म्मविज्वरः ॥१८४॥

अन्वयप्र०—असौ (मुमुक्षुः) मुहुः (पुनः पुनः) सत्सङ्गतः (समुपलब्धतत्वत्रयज्ञानानां सङ्गात्) गतस्पृहः (पराऽपरवैराग्यसम्पन्न अतएव) आत्मवान् सन् (स्वरूपज्ञानवान् सन्) गुरोर्मुखात् (तत्त्वत्रयज्ञानिनो मुखात्) श्रीशम् (श्रियः श्रीं भक्तवत्सलाम्" इतिमहर्षिवचनात् श्रियः श्रीः सीता तस्याईशं श्रीरामं) प्रपद्य (श्रीरामस्य शरणागतिं कृत्वा अथवा स्वस्वरूपे रामस्योत्कृष्टव्याप्तिमवगम्य) अथ (स्वस्वरूपे स्वशरीरे च रामस्य व्याप्त्यवगमानन्तरम्) एवं प्रहतान्यकर्मकः (एवं रीत्या प्रणष्टप्रारब्धेतरसमस्तकर्म्मा) अखिलं प्रारब्ध कर्म्म सम्परिभुज्य (सम्यग्निरवशेषं भुक्त्वा) न्यासादेव (स्वस्वातन्त्र्यपरित्यागादेव) स्वतन्त्रेश्वरजातसद्दयानिर्लूनमायाऽन्वयः (सर्वतन्त्रस्वतन्त्रस्य निरङ्कुशेश्वरस्य श्रीरामस्य या मुक्तिप्रदायिनी दया कृपा तयोच्छिन्नजगन्मोहिनीमायासन्तानः अतएव) दैशिकः भगवद्देशं लब्धुं योग्यः "तदर्हति" ॥५।१।६३ इति ठञ्। अथवा दिशति—उपदिशतीति देशिक आचार्य्यः, तेन संस्कृतो दैशिकः पञ्चसंस्कारयुक्त इत्यर्थः "कुलत्थकोपधादण्" ॥४।४।४॥ इति ठकोऽपवादकेऽणि अस्मिन् पक्षे दैशिकपदं 'गुरोर्मुखात्' इत्यतः प्रागेवयोज्यम् उक्तार्थे तु यथास्थ.न युक्तम्) हार्दोत्तमानुग्रहलब्धमध्य-

नाडी शुभद्वारबहिर्विनिर्गतः (पुरुषोत्तमश्रीरामस्यानुग्रहेण लब्धाया मध्यनाड्याः मूर्ध्निविद्यमानात् द्वाराद्बहिर्निर्गतः) स मुक्तः (शरीरान्मुक्तः ) प्रभूतोत्तमशर्म्मविज्वरः ( भगवत्स्वरूपानुभवजन्य निरतिशयसुखेन विगतसंसारसंतापः ) अर्चिर्मार्गमुपैति ( तेजोऽभिमानिदेवो यत्र विद्यते तन्मार्गं प्राप्नोति) तथा अर्चिषः. अह उपैति ( दिनाभिमानिदेवस्थानं प्राप्नोति ) दिनतस्तु विविधैर्वासरैरापूर्य्यमाणपक्षमुपैति ( शुक्लपक्षाभिमानिदेवस्थानम् प्राप्नोति ) ततः ( तस्मिन्मार्गे ) सुरार्चितः ( तत्तत्स्थानाधिपैर्देवैः पूजितो भवति ) ॥१८२–१८३॥१८४॥

असौ मुमुक्षुः सत्सङ्गतः सतां सङ्गात् हि जातनिश्चयः मुहुर्गत. स्पृहो वस्तुमात्रे वीतरागः सन् गुरोर्मुखात् श्रीशं श्रीरामं प्रपद्य तत्प्रपत्ति विधाय एवमात्मवान् जातप्रशस्तज्ञान. अखिलं सकलं तत्फलं परिभुज्य प्रकर्षेण हतानि अन्यानि कर्माणि प्रपत्त्यतिरिक्तकर्मान्तराणि येन सः प्रहतान्यकर्मकः१८२

स दैशिकः न्यासात् न्यासादेव स्वतन्त्रस्य निरंकुशस्येश्वरस्य श्रीरामस्य जाता उत्पन्ना सती समीचीना दयातया निर्लूनो निश्छिन्नोमायान्वयो वस्तुमात्रेऽभिलाषो यस्य सः "लूञ् छेदने" निष्ठान्तः। हृदिजातो हार्दः स चाऽसावुत्तमोऽनुग्रह' श्रीरामहार्दोत्तमानुग्रहेण लब्धा या सुपुम्नाभिधा मध्यनाडी निर्गमनमार्ग' सैव शुभं मोक्षावह द्वारं तेन द्वारेण पाञ्चभौतिकाद्बहिर्विशेषेण निर्गतः ॥ १८३ ॥

ततः तद्द्वारबहिर्निर्गमादनन्तरं स एव विनिर्गतो मुक्तो मोक्षाधिकारी अर्चिर्मार्गम् अर्चीरूपं मार्गमुपैति प्राप्नोति। तथार्चिषः सकाशात् अहर्मार्गमुपैति ग्रामादायातीतिवदर्चिष इत्यादावपादाने पञ्चमी दिनतः अह्नः तत्र तत्र स्थैः सुरैर्देवैरर्चितः पूजितः सन् विविधैर्वासरैर्दिवसैरापूर्य्यमाणं पञ्चदशादिनात्मकं पक्षं मार्गं तत्र तत्र मार्गे प्रभूतानि प्रचुराणि उत्तमानि अमुक्तैरलभ्यानि यानि शर्माणि सुखानि तैर्विगतः संसारमहार्णवे नानायोनिपरिभ्रमणजन्यदुःखरूपो ज्वर. सन्तापो यस्य सः ॥१८४॥

भाषा०—जिस मुमुक्षु पुरुष का, बारम्बार के सत्संग से वैराग्यवान हो आचार्य मुख से श्रीसीताजी के नियन्ता श्री रामजी की

शरणागति करने से, प्रारब्ध से भिन्न समस्त पाप नष्ट हो गया एवं समस्त प्रारब्धकर्म्म के भोगने बाद, अपनी स्वतन्त्रता के परित्याग करने के कारण सर्वतन्त्र स्वतन्त्र श्री रामजी की समीचीन निर्हेतुकी-दया से माया सम्बन्ध निर्मूल हो गया है, ऐसा भगवद्-लोक प्राप्त करने योग्य अधिकारी, जीव, पुरुषोत्तम श्रीरामजी के अनुग्रह से प्राप्त सुषुम्नानाड़ी द्वारा शरीर से निकल मुक्त हो भगवान के स्वरूप के अनुभव से उत्पन्न निरतिशय सुख द्वारा सांसारिक तापों से छूट अर्च्चिर्मार्ग की प्राप्ति करते हैं और वहां के देवताओं से पूजित हो दिनाभिमानी देव-स्थान की प्राप्ति कर वहां की देवताओं से पूजित होते हुए शुक्ल पक्षाभिमानी देवस्थान में पहुचते हैं ॥१८२-१८३॥१८४॥

**पक्षादुदङ्मासमथो षडात्मकं**
**तेभ्यश्च संवत्सरमब्दतोऽर्कम्।**
**चन्द्रं ततश्चन्द्रमसोऽथ विद्युतं**
**स तत्र तत्राऽखिलदेवपूजितः ॥ १८५ ॥**

अन्वयप्र०-अथो ( अनन्तरम् ) पक्षात् ( शुक्लपक्षाभिमानिदेवस्थानात् ) षडात्मकम् उदङ्मासम् ( उत्तरायण षण्मासाभिमानिदेवस्थानमुपैति ) तेभ्यश्च ( उत्तरायणषण्मासाभिमानिदेवानां स्थानेभ्यश्च ) संवत्सरम् ( संवत्सराभिमानिदेवस्थानमुपैति ) अब्दतोऽर्कम् ( संवत्सराभिमानिदेवस्थानात्सूर्य्यमुपैति ) ततश्चन्द्रम् ( सूर्य्यलोकाच्चन्द्रलोकं गच्छति ) अथ चन्द्रमसो विद्युतम् ( चन्द्रलोकाद्विद्युदभिमानिदेवस्थानं गच्छति ) स ( देहाद्बहिर्गतः ) तत्र तत्र ( पूर्वोक्तदेवस्थानेषु अखिलदेवपूजितः ( उक्तस्थानस्थैर्देवैः सत्कृतोभवतिः ) ॥ १८५ ॥

पक्षात् षडात्मकम् उदङ्मासम् उत्तरायणमासषट्कं मार्गमुतितीपै

पूर्वेणैव सम्बन्धः तेभ्य उत्तरायणमासेभ्यः संवत्सरं मार्गम् अब्दत:संवत्सरात् अर्कमार्गं ततोऽर्कात् चन्द्रं चन्द्रमसश्चन्द्रात् विद्युतं मार्गं स मुक्तः तत्रतत्र मार्गेऽखिलैर्देवैः पूजितः ॥ १८५ ॥

भाषा—वे मुक्तजीव, वहाँ की देवताओं से पूजित हो, उत्तरायण षडमासाभिमानी देवताओं के स्थान में पहुँचते, पुनः उनसे पूजित हो संवत्सराभिमानी देवताओं के स्थान में पहुँच उनसे पूजित होते हुए सूर्य्यलोक में पहुँचते, और फिर वहाँ की देवताओँ से पूजित हो चन्द्र लोक में पहुँच पुनः वहां की देवताओँ से पूजित होते हुए विद्युत–लोक में पहुँचते और वहाँ की देवताओं से पूजित होते है ॥ १८५ ॥

**परं पदं सैव मुपेत्य नित्य-**
**ममानवो ब्रह्मपथेन तेन ।**
**सायुज्यकादि प्रतिलभ्य तत्र**
**प्राप्यस्य सन्नन्दति तेन साकम् ॥ १८६ ॥**

अन्वयप्र०—एवं स (उक्तप्रकारेण सुषुम्नामार्गतो देहाद्बहिर्निर्गतः) अमानवः (मुक्तोजनः) तेन (पूर्वोक्तेन) ब्रह्मपथेन (परब्रह्म-श्रीरामलोकगमनमार्गेण ) नित्यं परं पदम् ( अयोध्याख्यं परं धाम ) उपेत्य ( प्राप्य ) प्राप्यस्य (भगवतोरामस्य ) सायुज्यकादि ( सायुज्यसारूप्यसालोक्यसामीप्यमुक्तिम् ) प्रतिलभ्य ( लब्ध्वा ) तत्रैव ( अयोध्याख्ये महावैकुण्ठे ) तेन साकम् ( श्रीअयोध्या-नाथेन सह ) सन्नन्दति (सम्यगानन्दति ) ॥१८६॥

स मानवेभ्योऽन्यो-मानवो मुक्तस्तेन ब्रह्मपथेन अर्चिरादि मार्गेण नित्यं सनातनं परं सर्वोत्कृष्टं पदं श्रीवैकुण्ठम् उपेत्य उपगम्य तत्र श्रीवैकुण्ठे प्राप्यस्य श्रीरामस्य सायुज्यकं सायुज्यमादिर्यस्य तत् सालोक्यसामीप्यसार्ष्टि सायुज्यान्यतमं प्रतिलभ्य तेन प्राप्येण परब्रह्मणा श्रीरामेण सह संनन्दति सम्यक् समृद्धिजन्यसुखभोगपूर्वको विहरतीत्यर्थः ॥ १८६ ॥

भाषा—वे मुक्त जो सुषुम्ना मार्ग द्वारा शरीर से बाहर हुए है पूर्वोक्त प्रकार से ब्रह्मपथ (परब्रह्म श्रीरामजी के लोकमें गमन करने के मार्गद्वारा) प्राप्य श्रीरघुनाथजी के सायुज्यादि ( सायुज्य, सारूप्य, सालोक्य और सामीप्य) को, पा, वहीं श्रीअयोध्यानाथ श्रीरामचन्द्रजी के साथ सम्यक—आनन्द करते हैं ॥ १८६ ॥

**सीमान्त सिन्ध्वाप्लुत एव धन्यो**
**गत्वा परब्रह्मसुवीक्षितोऽनिशम् ।**
**प्राप्यं महानन्दमहाब्धिमग्नो-**
**नाऽवर्त्तते जातु ततः पुनः सः ॥ १८७ ॥**

अन्वयम०—सीमान्तसिन्ध्वाप्लुतः ( प्रकृतिमण्डलस्य सीमाभूता या विरजा नाम्नी नदी तस्यामाप्लुतः सम्यक् स्नातः ) अनिशं निरन्तरम् परब्रह्म सुवीक्षितः ( परब्रह्मणा श्रीरामेण निर्हेतुककृपाकटाक्षेण सुवीक्षितः अवलोकितः अतएव ) धन्यः स एव ( जनः ) प्राप्यं (प्राप्तुं योग्यं श्रीरामम्) गत्वा ( प्राप्य ) महानन्दमहाब्धिमग्नः ( निरतिशयानन्दमहासागरे निमग्नो जनः ) जातु ( कदाचिदपि ) ततः ( अयोध्याख्यस्थानात् पुनर्नाऽवर्त्तते नात्रागच्छतीति भावो वेदितव्यः ) ॥ १८७ ॥

स ईदृशो धन्य एव सीमान्तसिन्ध्वाप्लुतः ससारतापहराऽमृतमहार्णवनिष्णातः अनिशं सततं परब्रह्मणा श्रीरामेण सुवीक्षितः कृपाकटाक्षनिरीक्षित. प्राप्य गत्वा महानन्दस्याऽपरिच्छेद्यानन्दस्य महाब्धौ मग्न.सन् ततः श्रीवैकुण्ठात् जातु कदाचिदपि स मुक्त. पुनर्नाऽऽवर्तते न निवर्तत इत्यर्थः ।

**तथा च श्रुतिः—**

"तेऽर्चिषमेवाऽभिसम्भवन्ति अर्चिषोऽह्न अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङेति मासान् मासेभ्यः संवत्सरं संवत्सरादादित्य-

मादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमानो इमं मानवमावर्तं नावर्तन्ते,, इति।

आचार्यपादैरप्युक्तम्-

सत्सङ्गाद्भवनिष्पृहो गुरुमुखाच्छ्रीशं प्रपद्याऽत्मवान्
प्रारब्धं परिभुज्य कर्म सकलं प्रक्षीणकर्मान्तरः।
न्यासेनैवनिरङ्कुशेश्वरदयानिर्लूनमायान्वयो-
हार्दानुग्रहलब्धमध्यधमनि द्वाराद्बहिर्निर्गतः।
मुक्तोऽर्चिर्दिनपूर्वपक्षषडुदङ् मासाब्दवातांशुमद्
ग्लौविद्युद्वरुणेन्द्रधातृमहितः सीमान्तसिन्ध्वाप्लुतः।
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन्परब्रह्मणः।
सायुज्यं प्रतिलभ्य नन्दति समं तेनैव धन्यः पुमान्।
प्रातर्नित्यानुसन्धेयं परमार्थं मुमुक्षुभिः।
श्लोकद्वयेन संक्षिप्तं सुव्यक्तं वरदोऽब्रवीत्" इति॥ १८७॥

भाषा—प्रकृति मण्डल के सीमान्त पर स्थित विरजा नदी में सम्यक प्रकार से अवगाहित एवं परब्रह्म श्रीरामचन्द्र जी के कारण-रहित कृपा कटाक्ष से अवलोकित जन धन्य है, और वह निरन्तर प्राप्त करने योग्य श्री रामजी की प्राप्ति कर निरतिशय आनन्द के महासागर में मग्न हो, पुनः कभी भी वहां से नही लौटता॥ १८७॥

**सदाऽनुसन्धेयमिमं त्रिकालं**
**मुमुक्षुभिस्तत्परमार्थमित्थम्।**
**ज्ञात्वा न चैवाऽस्ति सुवेदनीयं**
**जिज्ञासुभिस्तैरवशिष्यमाणम्॥१८८॥**

अन्वयप्र०—(मुमुक्षुभिः इत्थम् (पूर्वोक्तरीत्या) त्रिकालम् (प्रातर्मध्याह्नसायङ्कालम्) सदाऽनुसन्धेयम् (प्रतिदिनं त्रिषु कालेषु चिन्तनीयम्) इमम् (पूर्वोक्तदेवयानमार्गम्) तत्परमार्थञ्च (श्रुति-स्मृतीतिहास पुराणेषु प्रसिद्धं परा मा लक्ष्मीर्यस्य स परमःसचासौ

अर्थः पदार्थश्चेति परमार्थस्तं भगवन्तं श्रीरामञ्च ) ज्ञात्वा तैः ( सुप्रसिद्धैर्मुमुक्षुभिः ) जिज्ञासुभिः सुवेदनीयम् (ज्ञातव्यवस्तु) अवशिष्यमाणम्(पूर्वोक्तपदार्थेभ्योऽवशिष्टम्) नैचवास्ति ॥१८८॥

एवं दिव्यफलस्य तस्योपदेशं सकलसाधारणाधिकारिणं प्रत्याह-सदेति। स चासौ परमार्थस्तमिमं तत्त्वादिविचारपूर्वकं सुनिश्चितं प्राप्यं सदा मुमुक्षुभिस्त्रिकालमनुसन्धेयम् । प्रातर्मध्यान्हसायंकालमनुचिन्तनीयम् इमं मतं ज्ञात्वा च तैर्मुमुक्षुभिर्जिज्ञासुभिरवशिष्यमाणं सुवेदनीयं ज्ञातव्यं नैवास्तीत्यन्वयः ॥ १८८ ॥

भाषा—जिस मोक्ष चाहने वाले जिज्ञासु को, पूर्वोक्त रीति से त्रिकाल सन्ध्या में सदा अनुसन्धान करने योग्य उपर्युक्त 'अर्चिरादि—मार्ग' का ज्ञान हो जाता है, उनके लिये फिर कोई तत्त्वज्ञान शेष नहीं रह जाता ॥ १८८ ॥

गुरुद्रुहे नो न शठाय चेदं
न नास्तिकायोपदिशेत्कदाचन ।
नाऽवैष्णवायाऽपि रहस्यमुत्तमं
न दीनचित्ताय सुगोपनीयम् ॥१८९॥

अन्वयप्र०—अधिकारिणं दर्शयति—गुरुद्रुह इति। सुगोपनीयम् ( निरतिशयगोपनीयम् ) उत्तममिदम् ( पूर्वोक्तग्रन्थप्रतिपाद्यम् ) रहस्यम् ( मतम् ) गुरुद्रुहे ( आचार्य्यद्रोहिणे ) कदाचन ( कस्मिश्चिदपि काले) नो (न) उपदिशेत् । शठाय (अनृजवे) नोपदिशेत् । नास्तिकाय (परलोकाभाववादिने) नोपदिशेत्। अवैष्णवायाऽपि नोपदिशेत् । दीनचित्ताय (दरिद्रमनस्काय)नोपदिशेत् ॥१८९॥

अनधिकारिणे कदापीदन्नोपदेशनीयमित्याह—गुरुद्रुहे इति । सुगोपनीयमतिशयेन गोपनीयमुत्तममिदमेतद्ग्रन्थप्रतिपाद्यं मतं रहस्यं गुरुभ्यो द्रोग्धीति गुरुध्रुट् तस्मै कदाचनापि नो निषेधार्थः नोपदिशेत् । शठाय गूढविप्रियकारिणे च नोपदिशेत्।नास्तिकाय वेदयज्ञब्राह्मणवैष्णवविनिन्दकाय

अवैष्णवाय वैष्णवभिन्नाय तद्विरुद्धाय च नोपदिशेत् । दीनचित्ताय कृपणाय अनेकैर्नञ्भिर्निषेधदाढर्च्यमिति ध्वनिः ॥ १८९ ॥

"अधिकारी निरूपण"

भाषा—इस परम गोपनीय उत्तम रहस्य को—जिसका इस ग्रन्थ में प्रति पादन हुआ है—गुरुद्रोही, शठ, नास्तिक, अवैष्णव और दरिद्र चित्तवाले ( सांसारिक-विषय में लोलुप या अतृप्त, अथवा शून्य चित्त-वाले ) को कभी भी उपदेश नही करना ॥ १८९ ॥

**श्रुत्वा सुरसुरानन्दो रामानन्दादशेषतः ।**
**पृष्ट्वोत्तराणि च प्रश्नान् गुरून्नत्वाप सद्गतिम् ॥१९०॥**

अन्वयप्र०-( श्रीसुरसुरानन्दस्वामी प्रणतिपुरस्सरस्वकृत-दशप्रश्नानामुत्तराणि स्वाऽचार्यमुखाच्छ्रुत्वा यत्फलं लब्धवान् तत्प्रदर्शनमुखेन श्रीमद्ग्रन्थकारः अस्य ग्रन्थस्य श्रवणफलं निर्दिष्टवान् श्रुत्वेतिश्लोकेन ) सुरसुरानन्दः ( ग्रन्थकारश्रीरामानन्दाचार्य्यस्य शिष्यः) गुरून् नत्वा (आदरस्य गुरुशब्दोत्तर द्वितीयाबहुवचनार्थत्वात् प्रणिपातस्य च नमधात्वर्थत्वात् तथाच आदरपूर्वकाचार्य्ये प्रणितिं विधायेत्यर्थः आदरश्चात्र सेवा रूपो बोध्यः "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति भगवदादेशानुसारात् तथाच प्रथमं सेवां विधाय पश्चात्प्रणतिं कृत्वा तदनन्तरम् ) प्रश्नान् पृष्ट्वा ( "किं तत्वं किञ्च जाप्यम्" इत्यादिचतुर्थश्लोकोक्तदशप्रश्नान् पृष्ट्वा ) * रामानन्दात् ( जगति प्रसिद्धिं गतस्य श्रीसंप्रदायस्याचार्याणां

* उत्तमपुरुऽपि प्रथम पुरुषस्य लिट्लकारस्य च प्रयोग शिष्टाना प्रदर्शयन् भगवान् श्रीरामानन्दाचार्य्यः ग्रान्थादौ ४ र्थ श्लोके उत्तमपुरुषस्थाने प्रथमपुरुष-प्रयोगं कृतवान् तथाऽत्रापि प्रथमपुरुषयोगं लिट्लकारञ्चाकार्षीत् । तथाच विदुषामपि व्यवहारो दृश्यते यथा—१ व्यातेने किरणावलीमुदयनः । २ म

श्रीशठकोप--श्रीनाथमुनि—श्रीरामानुजाचार्य्य—श्रीकूरेशाचार्य्यादीनां परमरहस्यभूतश्रीरामोपासनस्य प्रचारकात्स्वाचार्यात् ) अशेषतः ( सर्वाणि ) उत्तराणि श्रुत्वा ( अथवा अशेषतो नाम सर्वेषां प्रश्नानामुत्तराण्याकर्ण्य ) सद्गतिम् ( चिदचिद्विशिष्ट परब्रम्हणः श्रीरामस्य समीचीनज्ञानम् ) आप *(प्राप्तवान् ॥१९०॥

एवं परमकारुणिकगुरुमुखोपदेशात्परममलभ्यं लभमानः कृतकृत्यो मुक्तः सुरसुरानन्द इत्याह–श्रुत्वेति। सुराणां देवानां सुरः सुरसुरो देवदेव. श्रीरामस्तमानन्दयति स्वानुष्ठानेन प्रसादयतीति सुरसुरानन्दः। यद्वा स आनन्दतीति आनन्दः प्रसन्नो यस्य सः। रामिति वीजे राबीजप्रतिपाद्ये आनन्दनमानन्दोयस्य स रामानन्दस्तस्मात्। यद्वा रामिति बीजप्रतिपाद्यं रहस्यत्रयानुष्टानेनानन्दयतीति रामानन्दः यद्वा रामं दाशरथिं रहस्यत्रयाद्यनुष्ठानेनऽऽनन्दयतीति रामानन्दः। यद्वा रामे दाशरथौ तद्वात्सल्यादिगुणात-च्छरण्यत्वादिचिन्तनादिनाऽनन्दो यस्यसः। यद्वा विनाऽपि प्रत्ययं पूर्वोत्तर-पदयोर्लोप इत्युक्त्या भीमो भीमसेनो वेदव्यासो व्यास इतिवत् रामान्

---

नतरितीर्णविद्याऽर्णवो-जगन्नाथपण्डितनरेन्द्रः। रसगङ्गाधरनाम्ना करोति कुतुकेन काव्यमीमांसाम् ।३नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान्। करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ।४ सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः सुजनैकबन्धुः। प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम् ( वासवदत्ता ) ५ बहु जगद पुरस्तात्तस्य मत्ता किलाहम् ( ३९। माघः ११ सर्गे ] ६ उत्तम पुरुषे चित्तविक्षेपादिना पारोक्ष्यम् कौमुदी ) एतन्मतेतु कुत्रचित् ग्रन्थारम्भजाऽतिहर्षजन्यचित्तविक्षेपः कुत्रचित् ग्रन्थसमाप्तिजातिहर्षजन्यचित्तविक्षेपः ज्ञातव्यः। आदिना तु कुत्रचित् चित्तक्षेपाऽभावे ऽपिपारोक्ष्यं द्योतितं कौमुदीकारेण। तथाच कुत्रापि दोषदृष्टिस्थानं न विद्यते इति विदुषां पूज्यपादानां मत समीचीनम्। नात्र कुचोद्यकरणशालिनामवकाशः। वस्तुतस्तु नाप्युत्तमपुरुष पारोक्ष्याऽनुपपत्तिः किन्तु 'श्रीसुरसुरानन्दः सद्गतिमाप' इत्यत्रान्तर्बहिर्व्याप्तिमत्त्वेन सूक्ष्मचिदचिद्विशिष्ट स्थूलचिदचिद्विशिष्टतया कार्यकरणस्वरूपतया च सामानाधिकरण्यविशिष्टत्वं श्रीरामस्य तद् विषयकश्रीसुरसुरानन्दकर्तृकसमीचीनज्ञानप्रापणस्य पारोक्ष्य सर्वेषामभिमतं तस्य चाक्षुषप्रत्यक्षत्वाभावात् इति सहृदयैर्विभावनीयम् इति दिक् ।

रामभक्तान् सुरसुरानन्दादीन् तत्त्वाद्युपदेशेनाऽऽनन्दयतीति रामानन्दः। यद्वा रामभक्तेषु तद्दर्शनसंङ्गादिनाऽऽनन्दो यस्य स रामानन्दः। यद्वा–"सुन्दरी रमणी रामा कोपना सैव भामिनी" इति कोशाल्लोकोत्तरसौन्दर्य कुटातिशयलावण्यवती रामा सीता सा च रामश्च "पुमान् स्त्रिया" इति एक शेषे रामौ सीतारामौ स्वानुष्ठानेनानन्दयतीति रामानन्दः। यद्वा तयोः पृथक् पृथग्गुणादिस्मरणेनाऽऽनन्दो यस्य स रामानन्द इत्याद्यूह्यम्। तस्माद्-शेषतः अशेषान् सकलान् सार्वविभक्तिकस्तसि· प्रश्नान् पृष्ट्वा उत्तराणि च दत्तोत्तरान् श्रुत्वा गुरुं श्रीरामानन्दं नत्वा साष्टांग प्रणम्य सद्गति मुक्तिम् आप प्रापेत्यर्थः। अनेन च सद्गुरूपासनपूर्वकप्राप्तश्रीरामतत्त्वाद्यनुष्ठानहेतुका जितेन्द्रियात्मरतबुधमुमुक्षुदायभूता मुक्तिरिति-ध्वनितम्। एवं च बहुदुःखे संसारमहार्णवे प्रवर्त्तनावर्त्तनपरम्परालब्धाऽनेक-जन्मावसानवर्णाश्रमोचितमनुष्यशरीराधिकारिसद्गुरुपरजिज्ञासुभिरित्थमेतदवश्यानुष्ठेयमिति बोध्यम्॥ १९०॥

भाषा—श्री सुरसुरानन्द स्वामी ने अपने दश प्रश्नों के उत्तर सून, जो फल लाभ किया, उस को दिखलाने के व्याज से श्रीमान ग्रन्थकार श्रीरामानन्दाचार्य्यजी श्रीवैष्णवमताब्जभास्कर के श्रवण का फल इस श्लोक में दिखलाते है–श्रीसुरसुरानन्द, स्वाचार्य्य (मुक्त) को सेवा पूर्वक प्रणाम (साष्टांगदण्डवत्) और (तत्त्व क्या है, इत्यादि ४ र्थ श्लोकोक्त) दश प्रश्नों को कर; (जगत् प्रसिद्ध श्रीसम्प्रदाय के प्रचारकाचार्यों श्रीशठकोप स्वामी जी, श्रीनाथमुनि जी, श्री स्वामी रामानुजाचार्य्य जी, श्रीकूरेश स्वामीजी, प्रभृति की परम रहस्यरूप जो रामोपासना उसके प्रचारक) (मुक्त) श्रीरामानन्द से उन प्रश्नोके उत्तारों को सुन; चित् (चेतन) अचित् (जड़) से विशिष्ट ब्रह्म (श्री रामतत्त्व) का समीचीन ज्ञान प्राप्त किया॥ १९०॥

**जितेन्द्रियः प्रपन्नस्तं बुध आत्मरतिर्हरिम्।**
**आप्नुयात्परमस्थानं योऽनुतिष्ठेदिदं मतम्॥१९१॥**

अन्वयः०—(अस्य ग्रन्थस्य श्रवणफलकथनानन्तरम्

अस्मिन् ग्रन्थे उपदिष्टानां श्रुतिस्मृतीतिहासपुराणसारभूतानां मुमुक्षुभिरवश्यमेव कर्त्तव्यानामनुष्ठानानां फलप्रदर्शनमुखेनाऽधिकारिणः प्रदर्शितवान् श्रीमद्ग्रन्थकारः जितेन्द्रिय इति ) यो बुधः जितेन्द्रिः ( कृतेन्द्रियदमनः सन् ) इदं मतम् ( श्रुतिमुनिसुमतं शिष्टमुख्यैर्गृहीतं षडक्षरब्रह्मविद्यैव परमैकान्तिनां शरणागतिविधायकत्वेन भगवतोऽभिमतम् मतं भगवत आरभ्य विष्वक्सेन शठकोपनाथमुनिप्रभृतिभिः परमार्थसाधनत्वेन निर्णीतं पञ्चसंस्कार पूर्वकार्चिरादिमार्गप्रपन्नपुरस्सरभगवदर्चनरूपम् ) अनुतिष्ठेत् ( कुर्यात् ) इत्थंभूतोऽनुष्ठाता आत्मरतिः ( परमात्मनि श्रीरामे अनुरागवान् सन् ) तम् ( श्रुतिस्मृतिपुपरमप्राप्यत्वेन प्रसिद्धम् एतद्ग्रन्थप्रतिपाद्यम् ) हरिम् ( करुणादिगुणमहोदधित्वेन भक्ताऽखिलदुःखापहारकम् श्रीरामम् ) प्रपन्नः ( प्रपत्तिं कृतवान् जनः ) परमं स्थानं ("यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम" इति गीतायां भगवतोद्दिष्टं त्रिपाद्विभूतिस्थतुर्य्यातीताख्यस्थानम् ) आप्नुयात् ( अत्र विधौ लिङ्विधानात् इतिदेहविधिः सूचितः श्रीमद्ग्रन्थकारैरिति ) ॥ १९१॥

अथैतद्ग्रन्थप्रतिपाद्यवस्तुप्राप्तयेऽधिकारिणः प्रोत्साहयत्याचार्य्यः—जितेन्द्रिय इति। योऽधिकारी जितानि ध्यानधारणासमाधिभिर्वशीकृतानि इन्द्रियाणि येन सः बुधो गुरूपदिष्टज्ञानवान् आत्मनि परमात्मनि श्रीरामे रतिरनुरागो यस्य स आत्मरतिः हरिं श्रीरामं प्रपन्नः सन् सर्वलोकशरण्यशरणागतवत्सलश्रीरामप्रपत्तिं कुर्वन् सन् इदम् एतद्ग्रन्थप्रतिपादितमतम् अनुतिष्ठेदाचरेत् स मुमुक्षु परमं "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्युक्त लक्षणं स्थानम् आप्नुयात्प्राप्नुयादित्यर्थः। तथा चावश्यमेवेदं मुमुक्षुभिरधिकारिभिरनुष्ठेयमिति भावः॥ १९१॥

ऐसे अनुष्ठाता श्रीरामजी में अनुराग वाले होते हुए वेद और पुराणों में परम प्राप्य कह कर प्रसिद्ध इस ग्रन्थ ( श्रीवैष्णव मताब्ज

भास्कर ) के प्रतिपाद्य श्रीरामजी की शरणागति कर परम स्थान ( त्रिपाद्विभूति में साकेत, अयोध्या; तुर्य्यातीत आदि शब्दों से प्रसिद्ध स्थान) को प्राप्त करे इसी वैदिक विधि की श्रीमान् ग्रन्थकार ने सूचना या उपदेश दिया है ॥ १९१ ॥

**रामानन्दीयः श्रीवैष्णवपूर्वो मताब्जभाष्कर आ (आः)**
**हृत्वाऽज्ञानसुतिमिरं ज्ञानाब्जं हृदि विकाशयतु १९२**

अन्वयप्र०—(श्रीमदाचार्य्यः "ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयम्" इति शिष्टाचारं स्वशिष्यशिक्षार्थमनुतिष्ठन् ग्रन्थान्तेऽपि मङ्गलं निवध्नाति रामेति ) रामनन्दीयः ( अस्य ग्रन्थस्य कर्त्ता श्रीमद्रामानन्दाचार्य्येण प्रोक्तः ) श्री वैष्णवपूर्वो मताब्जभास्करः ( श्रीवैष्णवमताब्जभास्करः ) अज्ञानसुतिमिरम् हृत्वा ( एतद्ग्रन्थमननशीलानामज्ञानान्धकारमपहाय ) हृदि ( मनसि ) ज्ञानाब्जम् विकाशयतु आ ( आ–इति वाक्यपूरणे "आ प्रगृह्यः स्मृतौ वाक्येऽनुकम्पायां समुच्चये" इतिमेदनी । इति स्वयं श्रीमदाचार्य्यः आशीर्वादात्मकं मंगलं विधाय समस्तग्रन्थ-रूपमहावाक्यं समाप्तवान् । अथवा सविसर्गस्याऽकारस्य-स्वीकारे अश्च आश्च आश्च आश्चेति आः तत्सम्बुद्धौ हे आः अर्थात् हे अ ! (हे विष्णो !) हे आ !(हे ब्रह्मन् ) हे आ ( रामोपोसकशिव !) हेआ ( आचार्य्याः नाम्न एकदेशग्रहणेन नाममात्रस्यग्रहण मितिसिद्धान्तम् ) रामानन्दीयः मयारामानन्देन निर्मितः श्री वैष्णवमताब्जभास्करः पाठकानामज्ञानान्धकारं हृत्वा हृदि ज्ञानाब्जं विकाशयतु इत्याशीः भगवद्भागवताचार्येभ्यः प्रार्थितवान् इति । " अकारो वासुदेवः स्यादाकारश्च पितामहः इति कोषः "आकारः शङ्करे प्रोक्तः' इति च कोषः ॥ १९२ ॥

एतादृशेन जगद्गुरुणा श्रीरामानन्दाचार्येण निर्मितः 'श्री वैष्णवमताब्जभास्करः' श्रीवैष्णवानां मतं = सिद्धान्तं तदेव कमलम् तस्य विकाशको भास्करः 'सूर्यस्यापि भवेत्सूर्यः' इतिमहर्षिसिद्धान्तात् श्रीरामः तस्याऽन्वयः ( श्री जानकी, श्रीविष्वक्सेन-श्रीशठकोपप्रभृतयः शिष्यवर्गाः तेषां प्रकाशः ज्ञानं यस्मिन् व्याख्याने तदन्वयप्रकाशाख्यव्याख्यानमेतत्) च्छ्रीवैष्णवानांकरकमलेसमर्पयामि

इति श्रीभगवद्भागवताचार्य्यकैङ्कर्य्यप्रचारकाचार्य्य सारण्य
(छपरा) मण्डलान्तर्गतसरयूतटस्थ'सेमरिआ' पीठ-
धर्मनिर्वाहकपयहारिश्री गङ्गादासचरणा-
श्रितबलभद्रदासकृतान्वयप्रकाश
सहितः 'श्रीवैष्णवमताब्ज-
भास्करः समाप्तः ।

अथाऽऽचार्य्यो ग्रन्थान्ते तस्यादिमध्यावसानेषु अवश्यविधेयं मङ्गलं शिष्यशिक्षार्थमाचरन्निबध्नाति-रामेति। रामानन्देन प्रोक्तो रामानन्दीयः "तेन प्रोक्तो वृद्धाच्छः" इतिच्छः श्रीवैष्णवानां मतमब्जं कमलमिवश्रीवैष्णवमताब्जं तस्य विकाशकत्वाद्भास्कर इव भास्करः सूर्य्य इति श्री वैष्णवमताब्जभास्करः सततं । महतां महात्मनां हृदि हृदये ज्ञानमब्जमिव ज्ञानाब्जं विकाशयतु प्रकाशयतु । किं कृत्वा हृदि हृद्विषयकम् अज्ञानं सुतिमिरमन्धकार इव अज्ञानसुतिमिरं हत्वा नाशयित्वा । एवं च यथा भास्करः स्वकिरणसन्दोहैः कमलानिचयं विकाशयति । तथाऽयं मोक्षसाधकं ज्ञानं श्री वैष्णवमताब्ज-भास्करो ग्रन्थः प्रकाशयति । अतो महद्भिरनुष्ठितोऽयं महतांहृदये निरन्तरं ज्ञानं विकाशयतु इत्याशीर्वादोक्तिः ॥ १९२ ॥

आविश्य लोकत्रयमीश्वरो यो विभर्ति नित्यं पुरुषोत्तमः सः ।
श्रीजानकीजानिरमर्त्यवन्द्यः सह श्रिया तिष्ठतु मानसे मे ॥
रघुवरशरणकृतेयं व्याख्यार्थप्रकाशिका नाम ।
शरशिखिनवकुमितेऽब्देऽगात्पूर्त्तिं श्रावणे कृष्णे ॥

इतिश्रीसाकेतजन्मस्थाननिवासिविद्वद्रघुवरशरणकृता श्रीरामानन्दीय-श्रीवैष्णमताब्जभास्करव्याख्याऽर्थप्रकाशिका नाम समाप्ता सम्वत् १९३५

भाषा०—श्रीमान् ग्रन्थकार श्रीरामानन्दाचार्य्य "ग्रन्थके आदि, मध्य तथा अन्त में मंगलाचरण करना चाहिए" इस शिष्टाचार को अपने शिष्यों के उपदेश के लिये अपने ग्रन्थ के अन्त में आशीर्वादात्मक मंगलाचरण करते है कि—मुझ ( श्रीरामानन्दाचार्य ) से निर्मित ( बनाया हुआ ) 'श्रीवैष्णवमताब्जभास्कर' पाठकों के अज्ञानान्धकार को दूर कर हृदय में ज्ञानरूप कमल को प्रफुल्लित ( विकसित ) करे। इस प्रकार भगवान् श्रीरामानन्दाचार्य ने स्वयं पाठकों को आशीर्वाद देकर 'श्रीवैष्णवमताब्ज भास्कर' रूप महावाक्य की समाप्ति की है। अथवा उक्त श्लोक के द्वितीय चरण के अन्त में 'आः' पद है उसका अ, आ' आ, आ, ऐसा पदच्छेद होने से हे भगवन् (श्रीराम) हे ब्रह्मन् ! हे शिव ! (हे भागवत ) हे आचार्य्य ऐसा अर्थ होने से श्रीमान् ग्रन्थकार भगवत् भागवत आचार्य्य से पाठकों के लिये उक्त आशीर्वाद की प्रार्थना की है॥१९२॥

ऐसे जगद्गुरु श्रीरामानन्दाचार्य्य विरचित "श्रीवैष्णवमताब्ज-भास्कर" श्री वैष्णवों के मत सिद्धान्त रूप कमल के प्रफुल्लित प्रचार करने वाले भास्कर "सूर्यस्यापि भवेत्सूर्य्यः" इस महर्षि कथन से श्रीरामजी के अन्वय श्रीसीता जी आदि शिष्य परम्परा के प्रकाश ज्ञान है जिस व्याख्यान में उस श्रीवैष्णवमताब्जभास्कर के अन्वयप्रकाश की रचना कर श्री वैष्णवों को समर्पण करता हूँ।

इति श्रीभगवद्भागवताचार्य्यकैङ्कर्य्यप्रचारकाचार्य्य सारण्य [ छपरा ]
मण्डलान्तर्गतसरयूतटस्थ 'सेमरिआ' पीठधर्मनिवाहक—
पयहारि श्रीगङ्गादासचरणाश्रितबलभद्रदासकृतः
श्रीवैष्णवमताब्जभास्करस्य भाषात्मकान्वय—
प्रकाशः समाप्तः ॥



बाबू नन्दन प्रसाद द्वारा—'सत्यनाम प्रेस' मैदागिन, काशी में मुद्रित।

॥ श्रीः ॥

श्रीमते रामानुजाय नमः ॥

श्रीमते रामानन्दाय नमः ॥

# श्रीरामार्चनपद्धतिः ।

श्रीमन्तं दलितेन्द्रनीलमणिभं भग्नेशकोदण्डकं
रामं निर्जितभार्गवं जनकजापाङ्गेक्षितं राघवम् ।
शश्वत्पैत्र्यनिदेशपालनपरं रक्षोऽरिकक्षानलं
पूजापद्धतिमर्चितुं वितनुते स्मृत्वा यतिक्ष्मापतिम् ॥१॥

---

## श्री सीतादेव्यै नमः ।

श्रीमते रामानुजाय नमः । श्रीमते रामायनन्दाय नमः ।

जयत्याश्रित-संत्रास-ध्वान्त-विध्वंसनोदयः ।
प्रभावान् सीतया देव्या परमव्योमभास्करः ॥

( वे० दे० )

अन्वयप्र०—शश्वत्पैत्र्यनिदेशपालनपरम् ( सर्वदा पितुराज्ञापालने तत्परम् ) रक्षोऽरिकक्षानलम् ( राक्षसादिशत्रुरूपतृणपुञ्जानामनलम् ) दलितेन्द्रनीलमणिभम् ( स्वकान्त्या इन्द्रनीलमणेराभां दलितवन्तम् ) भग्नेशकोदण्डकम् ( शङ्करचापं भग्नवन्तम ) निर्जितभार्गवम् ( परशुरामं निर्जितवन्तम् ) जनकजाऽपाङ्गेक्षितम् ( जानक्या नेत्रकोणाभ्यां दृष्टम् ) श्रीमन्तम् ( सीतासहितम् ) राघवम् ( रघुकुलतिलकम् अथवा चतुर्विधानां रघूणां जीवानां नियामकम् ) रामम् श्रुतिस्मृतिषु परब्रह्मत्वेन प्रसिद्धम् ) अर्चितुम् ( पूजितुम् ) यतिक्ष्मापतिम् ( यतिराजं श्रीरामानुजाचार्य्यम् ) स्मृत्वा ( स्वयोगमहिम्ना श्रीरामानुजाचार्य्यस्य रहस्यभूतां पूजापद्धतिं स्वबुद्धिविषयां कृत्वेतिस्मरणप्रयोजनम्) पूजापद्धतिम् (पूजायाः सरणिम् क्रमम् वा ) वितनुते ( अयं श्रीरामानन्दाचार्यः आनुपूर्वीशं श्रीरामानुजाचार्य्यस्य पूजापद्धतिं विस्तारयति ) 'तनु' इत्यस्य

विस्तारार्थत्वम् अत्र वीत्युपसर्गस्य विशेषत्वं नाम आनुपूर्वीयत्वं ज्ञातव्य-मिति तत्त्वम् ॥ १ ॥

भाषा०—निरन्तर पिता की आज्ञा पालन करनेमें तत्पर, राक्षसादि शत्रु रूप तृणपुञ्ज का नाश करने में अनलरूप, अपनी कान्ति से इन्द्रनील मणि की आभा को दलन करने वाले, श्रीशङ्करचाप को भग्न करने वाले, परशुरामजी को परास्त करने वाले, श्रीसीताजी के नेत्र कोण से देखे जाने वाले श्री सीताजी के सहित रघुकुल तिलक, अथवा अण्डज पिण्डज, ऊष्मज और स्थावर जीवों के एक मात्र नियमन कर्ता श्री-रामजी की पूजा करने के लिये; यतिराज श्रीरामानुजाचार्य्य का स्मरण कर अर्थात् अपने योग महिमा से श्रीरामानुजाचार्य्य की रहस्य पूजा-पद्धति को स्वबुद्धि विषय कर श्रीरामानन्दाचार्य्य आनुपूर्वीय श्री-रामार्चनपद्धति का विस्तार करते है। 'तनु' धातु विस्तार अर्थ में है और 'वि' उपसर्ग का विशेष अर्थ है। यहाँ पर विशेषत्व माने आनु पूर्वीयत्व है अर्थात् श्री रामानन्दाचार्य्यजी ने अपने योग बलसे श्रीरामा-नुजाचार्य्यजी की पूजा पद्धति जैसी पाई उसको वैसाही लोक हित के लिये विस्तार किया।

यह पद्धति श्रीरामानन्दाचार्य्यजी के समय में लुप्त थी। उस समय दूसरी ही पूजापद्धति से लोक काम लेते थे। जब यह पूजा पद्धति प्रकट हुई तब परमैकान्तिक श्रीवैष्णवगण इसको अपनाया और कुछ परमैकान्तिक वैष्णवगण इसका विरोध करने लगे और पुरानी पद्धति वालों की दल बन्दी कर नयी पद्धति का अनुमोदन, समर्थन और अनुसरण करने वालों का बहिष्कार करते हुए अपने दल को सुदृढ़ बनाने लगे यही कारण है कि परमैकान्तिक बहुतेरे बड़गल और तिङ्गल भी इस दल में आमिले। अतः श्रीरामानन्दीय श्रीवैष्णवों में आज अनेकों स्थान धारी महन्त और सन्त बड़गल देख पड़ते हैं। तिङ्गल तो इनके तिङ्गल होने के कारण बिलकुल इन्ही में मिलकर

एक होगये। यह उक्त परामर्श 'स्मृत्वा यतिश्नापतिम्' के स्मृत्वा पद से और साम्प्रतिक समाज की स्थिति से सिद्ध होता है। 'स्मृत्वा' के स्थान में 'नत्वा' आदि प्रयोग न कर 'स्मृत्वा' प्रयोग करने का सबसे उत्तम तात्पर्य्य इसके सिवा और क्या हो सकता है कि जब श्रीमान् ग्रन्थकार पूजा पद्धति लिखने बैठे उस समय श्रीरामानुजाचार्य्यजी का स्मरण उनकी बनायी पूजा सम्बन्धी पद्धति के अनुकूल पद्धति रचने के लिये किया। इस प्रकार स्मरण कर आपने अपने योग बलसे श्री भाष्यकार का रहस्य पूजा पद्धति जानली इस में किसी को रञ्च मात्र भी सन्देह नहीं हो सकता कारण कि आपकी योग महिमा सभी पर विदित है जो अद्यावधि योगबल से धरातल में वर्तमान रहने वाले श्रीअनन्तानन्दजी, श्रीसुरसुरानन्दजी, श्रीकबीरदासजी, आदि त्रिकाल दर्शी शिष्यों और श्रीकृष्णदासजी पयोहारी आदि प्रशिष्यों से सेवित थे ॥१॥

श्रीनारायण कृष्ण माधव हरे गोविन्द दामोदर
श्रीराम क्षणदाचरान्तक विभो लक्ष्मीपते वामन।
विष्णोऽधोक्षज वासुदेव नृहरे श्रीकेशवानन्त हे
श्रीवैकुण्ठ भवाब्धिमग्नमिह मा शीघ्रं चिरायोद्धर॥ २॥

अन्वयप्र०-हे श्रीनारायण! हे कृष्ण! हे माधव! हे हरे! हे गोविन्द हे दामोदर! हे श्रीराम! हे क्षणदाचरान्तक! हे विभो! हे लक्ष्मीपते! हे वामन! हे विष्णो हे अधोक्षज! हे वासुदेव! हे नृहरे! हे अनन्त! हेश्री वैकुण्ठ! चिराय (चिरकालतः) भवाब्धिमग्नम् (संसारसागरे निमग्नम्) मामिह (जन्मनि) शीघ्रमुद्धर॥ २॥

भाषा०-हे नाराय! हे कृष्ण! हे माधव! हे हरि! हे गोविन्द! हे दामोदर! हे राम! हे निशाचरान्तक! हे विभु! हे लक्ष्मीपति! हे वामन हे विष्णु! हे अधोक्षज! हे वासुदेव! हे नरसिंह! हे केशव! हे अनन्त! हे वैकुण्ठ! चिरकाल से संसार सागर में निमग्न मुझको शीघ्र इसी जन्म में उद्धार करो॥२॥

रामानन्दबुधो दयाजलनिधिं श्रीराघवानन्दनं
श्रीमन्तं मुनिपुङ्गवं च हरियानन्दं श्रियानन्दकम्।
देवानन्दमथो सदागुणगणैराढ्यं मुनीशं वरं
द्वारानन्दमुनिं मुनीश्वरवरं रामेश्वरं सद्वरम्॥ ३ ॥

---

१—सोऽहं श्री बलभद्रदासविनयी, श्रीमन्तमाचार्य्यकं
गङ्गादास मुनिं * यतीन्द्रमतदं पौहारिनाम्ना श्रुतम्।
दासान्तं पवहारिणं परगुरुं रामस्वरूपं मुनिं
ऽऽ गायत्रीजपनिर्मलं गुरुवरं श्री कृष्णदासाभिधैः॥ १ ॥
धृत्वा हस्तिवपुः सुदीक्षणपरैः पौहारिभिः स्थापितं
पैकौली नगरात्सुदूर विजने सान्द्रे सुरम्ये वटे।
श्रीलक्ष्मीपदपूर्वकं बुधवरं नारायणं सद्गुरुं
श्रीमन्तं मुनिराजमार्त्तिहरणेऽयोध्याप्रसादं प्रभुम्॥ २ ॥
श्रीमन्तं हि प्रसादकं बुधवरं, श्री जानकी पूर्वकं
प्रासादं रघुनाथपूर्वमज + नुद्रामप्रसादं गुरुम्।
योगीन्द्रं हरिदासकं चरणदा,-सं नन्दलालं मुनिं
लक्ष्मीराम मथो रमेश्वरलिदं, श्री मस्तरामं गुरुम्॥ ३ ॥
श्री मल्लक्ष्मणदासकं श्रुतिधरं, विद्यातपो वारिधिं
श्रीकं श्रीगुरुवर्य्य—रामभगवद्, दासं हरिस्तावकम्।
श्रीमंतं गुरुमग्रदासममृतं, श्री कृष्णदासं गुरुं
पौहारीत्युपनामकं, गुरुमनन्तानन्दकं सद्गुरुम्॥ ४ ॥

एवं सर्वैः श्रीरामानन्दीयैः श्रीवैष्णवैः स्वगुरोरारभ्य श्रीमद्—रामानन्द स्वामिपर्य्यन्तं सर्वाणि श्रीगुरूणां नामानि पद्ये निबध्य मूल उक्तायां श्री रामनन्दाचार्य्यविरचितपद्यबद्धगुरुपरम्परायां सम्बध्य "रामनन्दमथो" इति पूर्वाचार्य्य परिवर्त्तितपाठमनुसृत्यैव गुरुपरम्परा स्मर्त्तव्येत्युचितं प्रतिभाति।

२—जयपुर राजधानीस्थ श्री १०८ युत स्वामि श्रीबालानन्द महाराज-सिंहासनासीन श्री १०८ युत स्वामी श्रीरामकृष्णानन्दजी महाराज सन्निधौ

---

* यतीन्द्रस्य श्रीरामानुजाचार्य्यस्य मत सिद्धान्त ददातीति यतिन्द्रमतदस्तम्।

× अज विष्णुं नौतीति अजनुत् "अजो हरौ हरे कामे विधौ छागे रघोः सुते" इति विश्वकोषात्।

ऽऽ विदित होकि मैंने पूज्यपाद प्रातःस्मरणीय अयोध्या वासी १०८श्रीयुत

श्रीमन्तं मुनिवर्यमेव च सदाचार्य्य च गङ्गाधरं
वन्द्य त पुरुषोत्तम च सदय देवाधिपं सद्वरम् ।
वैराग्यादिनिधिं गुणैकनिलयं श्रीवोपदेवं कविम्
श्रीविद्यागुणवारिधिं मुनिवरं श्रीमाधवाचार्य्यकम् ॥ ४ ॥
कूरेशं यतिराजमद्भुतगुणं रामानुजं सद्वरं
पूर्णं श्रीमुनियामुनं मुनिवरं श्रीराममिश्र तथा ।
श्रीमन्तं मुनिपुण्डरीकनयनं नाथं मुनिं श्रीशठ—
द्वेषं श्रीपृतनापतिं जनकजां रामं सदा संश्रये ॥ ५ ॥

अन्वयप्र०—अहं रामानन्दबुधः, दयाजलनिधिं श्रीराघवानन्दनम्, श्रीमन्तं मुनिपुङ्गवं हरियानन्दम्, श्रीयानन्दकम्, देवानन्दञ्च, अथो सदागुणगणैराढ्यं वरं मुनीशं द्वारानन्दमुनिम्, मुनीश्वरवर सद्वरं रामेश्वरम् ॥ ३ ॥

अन्व०—सदाचार्य्यम् (सतां देशिकम्) मुनिवर्य्यम् (मुनिश्रेष्ठम्) श्रीमन्तं गङ्गाधरञ्च, वन्द्यम् ( जगद्वन्दनीयम् ) तम् ( जगद्वन्दनीयत्वात्प्रसिद्धम् ) पुरुषोत्तमञ्च, सदयम् सद्वरम् (परदुःखापनोदनेच्छाविशिष्टत्वात् सतां श्रेष्ठम्) देवाधिपम्, वैराग्यादिनिधिं गुणैकनिलयं कविं श्रीवोपदेवम्, श्रीविद्यागुणवारिधिं मुनिवरं श्रीमाधवाचार्य्यकम् ॥४॥

अन्व०—कूरेशम्, अद्भुतगुण यतिराजं रामानुजम्, सद्वरं पूर्णम्, श्रीमुनियामुनम्, तथामुनिवर श्रीराममिश्रम्, श्रीमन्तं मुनिपुण्डरीकनयनम्, नाथंमुनिम्; श्रीशठद्वेषम्; श्रीपृतनापतिम्, जनकजाम्, रामम्; सदासंश्रये ॥५॥

---

१६२१ विक्रमाब्दलिखितपुस्तके "रामानन्द बुधो" इति पाठः । १९६५ विक्रमाब्दे काश्यां लीथो मुद्रिते पुस्तके "रामनन्दमथो" इति पाठश्च विद्यते । तत्र 'बुधो' इत्येवपाठः श्रीमद्ग्रन्थ काराणां प्रतिभाति । प्राचीन लीपीनिबद्धत्वात् । "आश्रये" इति क्रियायां समन्वयात् । 'मथो' पाठस्तु श्रीमद्ग्रन्थकारशिष्य प्रभृतिभिः स्वाचार्य्यस्मरणार्थं परिवर्तितः । एतादृश्याः प्राचां शैल्याः सम्प्रदाये जागरूकत्वात् । तथाहि दृश्यते-

लोकगुरुं गुरुभिः सह पूर्वं कूरकुलोत्तमदासमुदारम् ।
श्रीनगपत्यभिरामवरेशौ. दीप्रशयान गुरुञ्च भजेऽहम् ॥

---

पवाहारी श्री अवधकिशोर दासजी महाराज के मुख से सुना था कि १०८ श्रीयुत पवाहारी श्रीकृष्णदास जी महाराज हाथी का शरीर धारण कर, गायत्री जपसे

भावार्थ– मैं श्री रामानन्दाचार्य्य, दयासागर श्री राघवानन्दाचार्य्य; श्रीहरियानन्दाचार्य्य, श्री श्रियानन्दाचार्य्य; श्रीदेवानन्दाचार्य्य, श्रीद्वारानन्दाचार्य्य; श्रीरामेश्वराचार्य्य; श्रीगंगाधराचार्य्य; श्रीपुरुषोत्तमाचार्य्य; श्रीदेवाधिपाचार्य्य; श्रीवोपदेवाचार्य्य; श्रीमाधवाचार्य्य; श्रीकूरेशाचार्य्य; श्रीरामानुजाचार्य्य; श्रीमहापूर्णाचार्य्य, श्रीयामुनाचार्य्य; श्रीराममिश्राचार्य्य श्रीपुण्डरीकाक्षाचार्य्य; श्रीनाथमुनि स्वामी; श्रीशठकोप स्वामी; श्रीविष्वक्सेनजी, श्रीसीताजी श्रीरामजी तक उक्त सभी गुरुओं का सर्वदा सम्यक् आश्रयण करता हूँ ( शास्त्रोक्त रीति से कायिक वाचिक मानसिक सेवा करता हूँ )॥ ३ ॥ ४ ॥ ५ ॥

---

इति स्त्वय श्रीववरमुनिभी रहस्यत्रयपरम्परानुसन्धायि । पश्चात्प्रतिवादिभयङ्करगुरुणा 'दीप्रयाय वरयोगिनमीडे, इति तुरीयचरणे मन्त्रेऽस्मिन् ऊहाँ कारीति सम्प्रदायः । अतः मथो इति पाठपरिवर्त्तनं समीचीनम् अस्माभिस्तथैव स्मर्त्तव्यम् ।

---

विमलान्तः करण श्री १०८ लक्ष्मीनारायणजी महाराज का पकड़ कर पैंकौली नगर से कुछ दूर पर एक सघन रमणीय वटवृक्ष के नीचे रख पुनः पूर्व शरीरको धारण कर सुदीक्षित कर पवाहार का आदेश और पवाहारी पदवी दे आप यथेच्छ स्थान में चले गये। कुछ दिन बाद् श्री १०८ लक्ष्मी नारायणजी पवाहारीजी महाराज के भजन भास्कर का प्रकाश दिग्दिगन्तरमें फैल जाने पर इतः ततः से साधुसन्त आने जाने लग गये और परस्पर वार्त्तालाप होते २ किसीसे वाकायदे गुरुद्वारे का परिचय पूछे जाने पर आपने श्री १०८ कृष्णदास पवाहारीजी का नाम बतलाया। इस पर पूछने वाले महात्मा जी ने आपको बड़ी फटकार सुनाई कि–आप चारसौ वष के चिर जीवी योगीराज श्रीपवाहारीजी के शिष्य बनते हो केवल लोक में प्रतिष्ठा पूर्वक पुजाने के लिये, यह केवल ढोंङ् मात्र है, इस पर किसी को विश्वास नहीं हो सकता। क्योंकि वह अब किसी से मिलते नहीं, अतः आप मन्मुखी सिद्ध हो और मन्मुखी सम्प्रदाय चलाना चाहते हो, यह ठीक नहीं इत्यादि, फटकार सुना कर महात्मालोग आसन बांध चलते हुए। और इधर १०८ श्री लक्ष्मीनारायण पवाहारीजी महाराज नितान्त खेद खिन्न हो अपने आचार्य्य चरण के ध्यान में लग गये और उसी क्षण श्रीपवाहारी जी महाराज आ पहुँचे। आपके प्राण भीतर से लौट आये. आप जगद्गुरु श्री

गाढाज्ञानतमोनिरासतरणिं त ब्रह्मनिष्ठं तपः—
स्वाध्यायव्रतशालिनं पटुतरं मध्येवरं वाग्विदाम्।
सद्वन्द्यं सदयं सदा सहृदयैरर्च्यं कविं सद्गुणै—
राचार्य्यं शरणं शरण्यमनघस्वीयं प्रपद्येऽनिशम् ॥६॥

अन्वयप्र०—अनघम् ( मृगया-द्यूत-परस्त्री सङ्ग-राग-द्वेषादिरूपव्यसन रहितम्। अतएव) सदयम् (परदुःखप्रहाणेच्छावन्तम्। अतएव) कविम् ( पण्डितम् अनेकजन्मान्तरीयपुण्यपुञ्जोदयजन्यपरदुःख—प्रहाणेच्छावत. पुरुषस्य सदसद्विवेक-बुद्धिरुत्पद्यते तस्मात्सद्वान् भवतीति भावः। अतएव ) वाग्विदां मध्ये वरम् ( विद्वद्वरेण्यम् ) तपः स्वाध्याय व्रतशालिनम् ( तपआदि साधनैः सुशोभमानम्। अतएव ) पटुतरम् ( उभयलोकसाधनचातुर्य्यवन्तम्। अतएव ) ब्रह्मनिष्ठम् ( अतएव ) गाढ़ाज्ञानतमोनिरासतरणिम् ( नितान्ताज्ञानान्धकारस्य निवर्तकार्कम्। अतएव) सद्व द्यम् ( सद्भिवन्दनीयम् ) सद्गुणैः सहृदयैः ( प्रवीणैः ) सदाऽर्च्यम् ( सर्वदा पूजनीयम् ) शरणम् ( रक्षितारम् ) शरण्यम् ( शरणागतवत्सलम् ) स्वीयम् (स्वकीयम्) आचार्य्यम् (श्रीराघवानन्दाचार्य्यम्) अनिशम् ( अनवरतम् यथास्यात्तथा ) प्रपद्ये ( अहं श्रीरामानन्दाचार्य्य उक्तगुणगणविशिष्टस्य गुरोरनवरतं यथास्यात्तथा प्रणतिं कुर्वे इति भावः ) तपः स्वाध्याय व्रतशालिनं वाग्विदां वरिष्ठं बुधं सेवमानो जनः सेवया, 'अयं मामुद्धरिष्यति' इति तदीयां स्वोद्धरणशक्तिमवगम्य कायिक वाचिक मानसिक-प्रपत्तिं करोति तत आचार्यो भगवत्प्रपत्तिं कारयतीति सतां सरणिं दर्शयितुं पूर्व श्लोके 'सश्रये' ( सम्यक् सेवे ) इति क्रियापदम् अस्मिन् पद्ये 'प्रपद्ये' इति च क्रिया पदं प्रदाय एतत्पद्यघटकस्वीयमितिपदेन श्रीमदाचार्य्यः स्वयमनन्तगुणविशिष्ट स्वाचार्यप्रपत्तिं कुर्वन् स्वशिष्याद्युपदेशाथमेतत्पद्य ग्रन्थघटकीकृतआऽऽचार्य्यलक्षणज्ञान्तर्गर्भतया प्रदर्श्य पद्यप्रतिपादितार्थ विशिष्टस्वाचार्य्यं प्रदर्शितवानितिसम्प्रदायमर्मज्ञानां हृदयं वेदितव्यम् ॥६॥

---

पवाहारी जी के चरण में गिर गये। श्रीपवाहारीजी महाराज ने आपको आश्वासन दे कहा कि—लोकमे रहने पर तो लोक रीति निबाहनी ही पड़ेगी अतः आप अयोध्या जाओ और बड़े स्थान के वर्त्तमान महन्त श्री अयोध्याप्रसाद से कहकर लोक रीति निबाहने के लिये उनका शिष्यत्व स्वीकार करो पूछने पर लोगों को उक्तस्थान और उक्त गुरु का परिचय दो। इस आज्ञा के अनुसार आप रश्म अदा कर अपनी प्रसिद्धि वैसीही की। उक्त कारण सेही पैकौली के पवाहारी वंश मे अद्यावधि हाथी रूप से पवाहारी श्री १०८ कृष्णदासजी महाराज की पूजा होती है। इसी आशय का प्रबोधक "गायत्रीजपनिर्मलम्" यह पद्य है।

भाषा०—इस श्लोक से श्रीमान् ग्रन्थ कारने परमै कान्तिक पद के प्रपित्सु श्री वैष्णव मात्र के आचार्यों के साधारण लक्षण और स्वाचार्य्य स्वरूप प्रदर्शन पुरस्सर आचार्य्य शरणागति कर मनुष्यमात्र को उपदेश दिया है कि— जीवहिंसा, पर स्त्री सङ्ग, किसी में राग, किसी से द्वेष आदि शास्त्र निषिद्ध व्यसन से रहित पुरुष के हृदय मे दया (दूसरों के दुःखों की मिटाने की प्रबल इच्छा) का उदय होता है और वही पुरुष कवि (पण्डित)होता है याने उसी पुरुष के हृदय में सत् और असत् की विवेचना करने वाली बुद्धि उत्पन्न होती है । अतएव वही पुरुष निखिल निगमागम निष्णात विद्वानों में श्रेष्ठ और तप स्वाध्याय व्रतादि से सुशोभमान, उभय लोक साधिका चतुरता से युक्त होता है । अतः वही ब्रह्मनिष्ठ होने के कारण अज्ञान रूप सघन अन्धकार के निवर्तक सूर्य्य का काम करता है ऐसे ही महात्मा के लिये श्री गोस्वामी तुलसीदास जी ने कहा है कि—

"मुख देखत पातक हरै, पर सत पाप बिलाहि ।
वचन सुनत मन मोहगत पूरण भाग्य मिलाहिं ॥"

अतएव सदसद विवेक शाली पुरुषों से वन्दनीय और समीचीन गुणवान् सहृदयों से सर्वदा पूजनीय, संसार सागर से जीवों की रक्षा करने में समर्थ होने के कारण शरणागत वत्सल निजगुरु श्रीराघवानन्दाचार्य्यजी महाराजकी शरणागति निरन्तर करता हूँ ।

यह सनातन वैदिक धर्मावलम्बी सज्जनो की रीति है कि—प्रथम तप स्वाध्याय व्रतादि से सुशोभित श्रेष्ठ विद्वान् की सेवा द्वारा यह समझलेते है कि यह विद्वान् मेरे उद्धार मे समर्थ है, इसप्रकार अपनी उद्धार करने वालि उनकी शक्ति को समझ कर कायिक वाचिक मानसिक प्रपत्ति करते है और तब उन्हें आचार्य्य भगवत् प्रपत्ति कराते हैं । इसी बात को समझाने के लिये श्रीमान् ग्रन्थकार स्वामी ने उक्त श्लोक में 'संश्रये' ( सम्यक सेवा करता हूं ) यह क्रिया पद और इस श्लोक में "प्रपद्ये" क्रिया पद रखा हैं ।।६॥

उपासकोऽथापि मुहूर्त्तमात्रावशिष्टरात्रौ प्रतिबुध्यनित्यम्।
प्रातःसमुत्थाय निरालसोऽसौ प्रक्षालयेत्पादयुगं च हस्तौ॥७॥

अन्व०-अथ (गुरुप्रपत्त्यनन्तरम्) असौ उपासकः (गुरोःप्रसादात्प्रज्ञातोपासनाप्रकारतया गुरोराज्ञयोपासनायां तत्परः साधक.) नित्यम् (प्रतिदिनम्) निरालसः (सन्) प्रातः प्रतिबुध्य (त्रिदण्डात्मकरात्रिशेषे जागृत्वा) मुहूर्त्तमात्रावशिष्टरात्रौ समुत्थाय (शय्यातः समुत्थाय) पादयुगं हस्तौ चापि प्रक्षालयेत् अपिशब्दात् मुखमपि प्रक्षालयेत् ॥७॥

भाषा०—इस प्रकार आचार्य्य की शरणागति करने के बाद आचार्य्य मुख से भगवत् उपसना का प्रकार को अच्छी तरह समझ कर आचार्य्यके उपदेशानुसार भगवत् उपासना में तत्पर वैष्णव, निरालस हो प्रति दिन प्रातः काल जाग एक मुहूर्त्त रात्रि रहने पर शय्या (आसन) से उठकर—मलमूत्रादि का वेग हो तो उससे निवृत्त हो—दोनों हाथ पैर और मुख को धोवे ॥ ७ ॥

स प्राङ्मुखोऽहर्दिवमित्थमेव ध्यायन्मुमुक्षुर्विगतस्पृहः फले।
स्थित्वा मुनिर्निश्चलमानसःपरव्यूहादिकं चाप्यनुसंदधीत॥८॥

मुमुक्षुः (प्राकृतबन्धन हातुमिच्छु) फले विगतस्पृहः (परब्रह्मप्राप्तीतरफले स्पृहाशून्यः) मुनिः (परतत्त्वमननशीलः) सः (प्रक्षालितहस्तपादो वैष्णवः) प्राङ्मुखः (पूर्वाभिमुखः) स्थित्वा निश्चलमानसः (परमात्मेतरतत्त्व चिन्ता-शून्यमनाः सन्) परव्यूहादिकं चापि अनुसंदधीत। इत्थमेवाहर्दिवम् (उक्त-रीत्या प्रतिदिनमनुसदधीत) चापिशब्दाभ्यां परात्परवासुदेव स्वाचार्य्यञ्चानु-संदधीतेत्युक्तवान् श्रीमान् ग्रन्थकारः। अर्थात् सुप्तोत्थितः साधकः प्रथमं गुरुं स्मरेत् पश्चात् परात्परवासुदेव ततः परवासुदेवं ततो वासुदेव ततो व्यूहवासु-देवं ततः संकर्षणादि व्यूहं ततो वासुदेव संकर्षण प्रद्युम्नानिरुद्धेभ्यो जातानि चतुर्विधकेशवादिव्यूहानि ततः चप्रथमव्यूहगताऽनिरुद्धाज्जात पद्मनाभविष्णुं ततो भगवदात्मकचतुर्मुखादिलीलाविभूतिञ्चानुसंदधीतेत्यादिपदेन 'पाद्म संहिता' 'बृहद्ब्रह्म संहिता' दिषूक्तरीत्यानुसंधेयमिति श्रीमद्ग्रन्थ काराणामाशयः प्रतिभा-तीति नारदपञ्चरात्रविद्भिः सम्प्रदायज्ञैरेव विवेक्तुं शक्यते ॥८॥

मुमुक्षु (प्रकृति बन्धन से छुटकारा पा जाने की इच्छा

